# भट्टिकाव्यम् ।

जयमङ्गलरचितजयमङ्गलया

भरतमल्लिककृत-मुग्धबोधिन्या टीकया च

समलङ्कृतम् ।

प्रथमखण्डम् ।

( प्रथमावधिपञ्चमसर्गपर्य्यन्तम् )

पण्डितकुलपति वि, ए उपाधिधारि-

श्रीजीवानन्दविद्यासागरभट्टाचार्य्यात्मजाभ्यां

श्रीआशुबोध-विद्याभूषण-

श्रीनित्यबोध-विद्यारत्नाभ्यां

संस्कृत्य प्रकाशितम् ।

पञ्चमसंस्करणम् ।

कलिकातामहानगर्य्यां

वाचस्पत्ययन्त्रे मुद्रितम् ।

इं १९३८ ।



[redacted] ।

# भट्टिकाव्यम्।

## प्रथमः सर्गः।

अभून्नृपो विबुधसखः परन्तपः

श्रुतान्वितो दशरथ इत्युदाहृतः।

---

## जयमङ्गला टीका।

श्रीगणेशाय नमः।

टीकाकृन्मङ्गलाचरणम्।

प्रणिपत्य सकलवेदिनमतिदुस्तरभट्टिकाव्यसलिलनिधेः।

जयमङ्गलेति नाम्ना नौकेव विरच्यते टीका॥

लक्ष्यं लक्षणं चोभयमेकत्र विदुषः प्रदर्शयितुं श्रीस्वामिसूनुः कविर्भट्टिनामा रामकथाश्रयं महाकाव्यं चकार। तथा-ह्यस्योरनिबन्धनं कविना द्विधा कृतम्। एकं लक्षणसूचकैः प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डैश्चतुर्भिः। द्वितीयं लक्ष्य-सूचकै रामसम्भवादिभिर्द्वाविंशत्या सर्गैः। तत्र लक्षणं द्विविधं—शब्दलक्षणं काव्यलक्षणञ्च। तत्र प्रथमस्य प्रकीर्णाधिकार-तिङन्तकाण्डानि, द्वितीयस्य प्रसन्नकाण्डम्। यत्रोच्चा-वचेन बहूनां लक्षणानां प्रकरणं तत् प्रकीर्णकाण्डं, तदेवात्र प्रथममुक्तं, तस्य व्यापित्वात् 'उत्तरत्रापि द्रष्टव्यम्' इति प्रदर्श-नार्थम्। अत्र यद्यप्यादौ कविना देवतानमस्कारो न कृतः, तथाऽपीष्टदेवतासङ्कीर्तनमपि विघ्नोपशमनहेतुर्भवतीति मन्य-मान आह—अभूदित्यादि। तस्य हीष्टदेवता सनातनो विष्णुः,

गुणैर्वरं भुवनहितच्छलेन यं
सनातनः पितरमुपागमत् स्वयम् ॥१॥

स चादौ कीर्त्तितः। तन्निबन्धना चेयं कथेति प्रबन्धेनैवात्र सङ्कीर्त्तनं रामायणवत्, तत्र विष्णोर्येस्मिन् काले जगत्कार्य्यवशादवतारः कृतः, तदेव प्रथमं दर्शयति, अभूदिति।—भूतसामान्ये लुङ्, भूत इत्यर्थः, अन्यथा राज्ञश्चिरातीतत्वात् कवेः परोक्षत्वाच्च लिट् स्यात्। "गातिस्था—" इति सिचो लुक्। "भूसुवोस्तिङि" इति गुणप्रतिषेधः। 'नयतेर्डिच्च' इति नयतेरौणादिक ऋन् नरो मनुष्यास्तान्नॄन् पातीति "आतोऽनुपसर्गे कः", "आतो लोपः", नृपो राजा, अत्यन्तधर्मविजयित्वात् देवराजस्य मित्रमासीदित्याह—विबुधसख इति। विबुध्यन्ते इति विबुधा देवास्तेषामपि प्रधानत्वात्, तत्र इगुपधलक्षणः कः, सामान्यशब्दोऽपि देवेषु वर्त्तमानोऽप्यर्थवशाच्छक्रे प्रयुक्तः, तस्य सखेति "राजाहः-सखिभ्यष्टच्" विबुधसखः, अनेन धर्मविजयित्वं दर्शयति, विबुधसखत्वस्य धर्मकार्य्यत्वात्। सुरलोकविजयिनश्च ये राजानस्तेषां धर्मविजयो प्रधानम्। परे शत्रवस्त्रिविधाः,— उच्छेदनीयोपपीड़नीयकर्षणीयाः। तत्र ये उपपीड़नीयकर्षणीयास्तान् परांस्तापयतीति परन्तपः "द्विषत्परयोस्तापेः" इति खच्, "खचि ह्रस्वः" "अरुर्द्विषदजन्तस्य" इति मुम्। नृप इत्यनेन स्वमण्डले हृत्तिराख्याता, परन्तप इति परमण्डले। श्रूयन्ते इति श्रुतानि वेदादीनि,तैरन्वितः सम्बद्धः,अन्यतोऽर्थतश्च गृहीतत्वात्। दशरथ इत्यनेन नाम्ना उदाहृतो लोके गीतः। गुण्यन्ते अभ्यस्यन्ते इति गुणाः, 'गुण आमन्त्रणे' इति चौरादिकोऽदन्तः, तस्मात् "अकर्त्तरि च—"इत्यादिना घञ्,येषाम् एरजण्यन्तानाम् इति दर्शनम्; येषां तन्नास्ति तेषामेरच्। स्वरं प्रति विवादो

न रूपं प्रति । गुणैरभिरामत्वादिभिः, वरं श्रेष्ठं, यं नृपं पितरमुपागमदिति सम्बन्धः। व्रियते इति वरः "ग्रह-वृ-दृ—" इत्यादिना कर्मण्यप्। केन हेतुना उपागतवांस्तं पितरं सनातनः? इत्यत आह—भुवनहितच्छलेनेति। भवन्ति उत्पद्यन्ते इति भुवनानि भूर्भुवःस्वरिति त्रयो लोकाः। 'रञ्जः क्युन्' इत्यनुवर्त्तमाने 'भू सू-धू-सञ्जिभ्यश्छन्दसि' इत्यौणादिकः क्युन् बहुलवचनाद्भाषायामपि भवति। तेभ्यो हिता भुवनहिताः विष्णोर्दशावताराः, इह तु रामो द्रष्टव्यः। तच्छलेन व्याजेन भुवनहितच्छलेन, इदानीं रावणादिकण्टकोद्धरणात्; तथा चोक्तं—"परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥" इति। सनत्यव्ययं सदाऽर्थे वर्त्तते, सना भवतीति "सायंचिरम्—" इति ट्यु ट्युलौ तुट् च; सनातनो विष्णुः, उपागमत् उपजगाम। लृदित्वादङ्। सत्सु अन्येषु राजसु गुणैर्वरत्वात् यं पितरं जनकमङ्गीकृतवान् सोऽभूदिति योज्यम्। स्वयमित्यात्मना, न कर्मणाऽन्येन वा प्रेरित इत्यर्थः॥ १॥ ज० म०

## भरतटीका।

नमो गणेशाय।

टीकाकृन्मङ्गलाचरणम्।

नत्वा शङ्करमम्बष्ठ-गौराङ्गमल्लिकात्मजः।
भट्टिटीकां प्रकुरुते भरतो मुग्धबोधिनीम्॥
विहिताः पाणिनीयाद्यैः पठनीयादिबोधिकाः।
भट्टिटीका मम त्वेष मौग्धबोधार्थ उद्यमः॥
कविकल्पद्रुमोक्तानां धातूनामनुबन्धतः।
स्पष्टानि यानि कार्य्याणि ततो बोध्यानि तानि तु॥

नातिस्पष्टानि कार्य्याणि ग्रन्थगौरवभीतितः।
वाच्यान्यत्र न चाप्यर्था अतिविस्तृतवाग्भवाः॥

भर्त्तृहरिर्नाम कविः श्रीरामकथाश्रयं महाकाव्यं चकार। अत्र सर्गबन्धो लक्ष्यसूचनाय, काण्डबन्धो लक्षणसूचनाय। अत्र सर्गा द्वाविंशतिः, प्रकीर्णाधिकारप्रसन्नतिङन्तकाण्डानि चत्वारि। शब्दलक्षण-काव्यलक्षणभेदाल्लक्षणं द्विविधम्। तत्र काण्डत्रये शब्दलक्षणं, प्रसन्नकाण्डे काव्यलक्षणम्, आदौ बहुलक्षणप्रदर्शनं प्रकीर्णकाण्डं व्यापकत्वाद्दर्शितम्। महाकाव्यस्यादावाशीर्नमस्क्रिया वस्तुनिर्देशो वा कर्त्तव्य इति सम्प्रदायानुरोधाद्वस्तुनिर्देशं कुर्वन्नेवेष्टदेवतास्मरणात्मकं मङ्गलमप्यादौ प्रकाशयति, अभूदिति।—दशरथ इति नाम्ना उदाहृतः ख्यातो नृपो राजा अभूत्। स कथम्भूतः? विबुधसखः विबुधानां देवानां सखा मित्रम्। अथवा विबुधस्य इन्द्रस्य सखा, सामान्यदेवतावाचिनोऽपि विबुधशब्दस्य विशेषपरत्वात् प्राधान्याद्वा इन्द्रवाचित्वम्, एतेन विजयित्वं दर्शितं, विबुधसखत्वं विजयेनापि भवतीति। प्रतापं दर्शयन्नाह—परान् शत्रून् तपतीति परन्तपः, श्रुतान्वितः श्रूयन्ते गुरुभ्य इति श्रुतानि शास्त्राणि, तैरन्वितो युक्तः, अधीतशास्त्र इत्यर्थः, "सोऽध्यैष्ट वेदान्"इति वक्ष्यमाणश्लोके वेदाध्ययनस्य नित्यत्वज्ञापनार्थं पुनरुक्तिः श्रुतमत्र वेदादन्यच्छास्त्रम्। इत्युदाहृत इत्यत्र केचिदित्थं व्याचक्षते—इतं ज्ञानं विद्यतेऽस्येति इती ज्ञानी, उदाहृतः ख्यात एव। यद्वा—इतिषु ज्ञानिषु उदाहृतः। इतीति 'इण् गतौ' इत्यस्माद्भावे क्तः, 'सर्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्च' इति इतं ज्ञानं, ततोऽस्त्यर्थे "नैकाजात्—"इति इन्। सनातनो विष्णुः, भुवनहितच्छलेन यं नृपं स्वयमात्मना, न पुनरन्यप्रकारेण, पितरम् उपागमत् अङ्गीकृतवान्,सोऽभूदिति योज्यम्। भुवनेति।—भुवनानां हितं

रावणवधादिरूपं,तदेव छलं व्याजस्तेन,एतेन भुवनहितमपदिश्य अस्य राज्ञो महत्त्वेनैव पुत्रत्वं प्राप्तवानित्यर्थः। अत्र हेतुगर्भविशेषणमाह—गुणैर्धैर्यगाम्भीर्यादिभिर्वरं श्रेष्ठम्। अभूदिति भूधातो रूपम्, अस्तेश्चेत् "भूररे" इति भ्वादेशः, "भवद्भूतभव्ये त्रिशः क्याद्या." इति भूते टी ; भूतसामान्यविवक्षायां लुङिति पाणिनीयाः। कातन्त्रेऽपि सम्प्रतिवर्त्तमानेत्यत्र सम्प्रतिग्रहणं स्वस्वसंज्ञाकालव्यभिचारसूचनार्थमिति वर्द्धमानमिश्रेण व्याख्यातम्। शास्त्रस्य विवक्षाधीनत्वात् सत्यपि परोक्षत्वे 'भूतसामान्यविवक्षायामद्यतनी'इति पुरुषोत्तमेनाप्युक्तम्। 'अनद्यतनेऽपि वाक्यगम्ये' इति क्रमदीश्वरेणोक्तं, तेन वोपदेवेन भूतसामान्य एव द्यादय उक्ताः, न त्वनद्यतनाद्यतनपरोक्षत्वविभागेन। "घीटीथीध्वम्" इति अम्, "द्यां सिः", "भ-स्था-पिव—" इति सेर्लुक्, 'सर्वविधिभ्यो लोपविधिर्बलवान्' इति न्यायान्नादौ "वसोरस्य—"इतीम्, सर्लुकि"लुकि न तत्र"इत्यनेन"णुर्वृङ—" इति न णुः, "व्रजवद—" इत्यादिना त्रिश्च निषिद्धः, "पृच्छ रः शिच्च" इति ण्या रत्वं, "ङिदपित्" इति अपित्-रस्य ङित्त्वं, तेनादावपि "णुर्वृङ—" इति न गुणः। नृप इति नॄन् मनुष्यान् पाति रक्षतीति 'पाल रक्षणे' इत्यस्मात आदन्तत्वात् "हनजनात्—" इति डः, "टेर्लोपो डिति—" इति टेर्लोपः। विबुधेति विबुध्यन्ते इति विपूर्व-बुधधातोरिजुङत्वात् "कॄ-गॄ-ज्ञा-प्रीजुङः कः—" इति कः। विबुधसख इति "सख्यह्नो राज्ञः षः—" इति षः, "यर्योर्लोपः—" इति इकारलोपः। परन्तप इति "तॄ-भृ-वृ-दृ-जि—" इत्यादौ 'नाम्नि' इत्यत्र च काराध्याहारादसंज्ञायामपि खः। नाम्नेवेदं सूत्रमिति चेत्, 'कृत्तद्धितसमासानामभिधानं नियामकम्' इत्युक्तेरसंज्ञायां खः, "खित्यव्याजस्य—" इति मन्। दशरथ इति शब्देनोक्तत्वात् स्वार्थे वा

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट
पितॄनपारीत् सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ
समूलघातं न्यवधीदरींश्च ॥ २ ॥

"स्थेमन्वुत्रार्थे—" इति प्रो। दशरथो नृपोऽभूत्, कीदृशः? इत्युदाहृतः वक्ष्यमाणश्लोकैरुदाहरणतां प्राप्त इति केचित्। गुणैरिति गुण्यन्ते अभ्यस्यन्ते इति गुणाः, 'गुण आमन्त्रणे' इत्यस्मात् "घञलनट्—" इति अल्, "अतोलोपोऽनातु—" इति अतोलोपः, "असालोपोऽशिति—" इत्यकारलोपः। वरमिति 'वृञ्धातो' व्रियते योऽसाविति पूर्वेणाल्, "गुधूङ्—" इति गुः। सनातन इति नित्यार्थात् सना-शब्दात् "त्यब्रायाचिर—" इत्यादिना ट्युः। "सनातनः शाश्वतकं सर्वेरिणोः शिवेऽपि चात्मन्यतिथौ सुनिश्चये" इति विश्वः। उपागमदिति 'गम्लृ गत्यां' ऌदित्त्वात् "पुषादिद्युताद्य्लृदितः—" इति अङ्, "गमहन—" इत्यादावङ् इत्युक्तेर्नोङ्लोपः। ॥ १ ॥ भ० म०

सोऽध्यैष्टेत्यादि।—क्षत्रियस्य धर्मोऽध्ययनं यजनं दानं, शस्त्राजीवो भूतरक्षणं चेति उभयं नृप इत्यनेनोक्तम्। भूतरक्षणे शस्त्रमङ्गम। स नृपो वेदानध्यैष्ट अधीतवानिति स्वाध्याय उक्तः। वेदयन्ति ज्ञापयन्ति धर्माधर्माविति वेदाः सामादयः, पचाद्यच्। इङोऽधिपूर्वस्य "विभाषा लुङ्लृङोः" इति गाङ्, विभाषयेति गाङभावपक्षे रूपम्, अजादित्वादाट्। "आटश्च" इति वृद्धिः, ङित्त्वादात्मनेपदम्, "आदेशप्रत्यययोः" इति षत्वं ष्टुत्वञ्च। त्रिदशान् देवानयष्ट अग्निष्टोमादिभिः पूजितवान्। यजनमुक्तम्। यजेः "स्वरितञितः—" इति तङ्, धनिकसमीपगत्वात् इत्यः

"लिङ्सिचौ—" इति कित्त्वं न भवति। अनिगन्तत्वात्" व्रश्च-भ्रस्ज—"इत्यादिना षत्वं, "झलो झलि" इति सिचो लोपः। पितॄनपारीत् आप्यायितवान्, पितरमुद्दिश्य यजनम। 'पॄ पालन-पूरणयोः'इत्यस्मात् पूरणार्थात् लुङि रूपं,"सिचि वृद्धिः,—""इट ईटि"इति सिचो लोपः। अथवा पितॄनताप्सीदिति पाठः। 'तृप् प्रीणने'इत्यस्मात् लुङि'स्पृश-मृश-कृष-तृप-दृपां च्लेः सिच् वक्तव्यः' इति च्लेः सिचि"अनुदात्तस्य च—"इत्यादिना अमभावपक्षे रूपम्; पितॄन् तर्पितवानित्यर्थः। सममंस्त बन्धून् मातृपित्रादिज्ञातीन् सम्मतवान्, सदा दानमानादिभिः पूजितवानित्यर्थः। मन्यतेरनु-दात्तत्वात्तङ्, इट्प्रतिषेधश्च, येषां सिच इकार उच्चारणार्थः, तेषां "इनः सिच्" इति कित्करणज्ञापकान्नलोपाभावः। येषां तु इकार इत्, तेषामिदित्त्वान्नकारलोपाभावः। आभ्यन्तरं शत्रुम-जित्वा कथं परन्तपः? इत्याह—व्यजेष्ट षड्वर्गमिति। कामक्रोध-लोभमोहमदमात्सर्याणां षण्णां वर्गः षड्वर्गः, तमभिभूतवान्। विपूर्वस्य जयतेः"वि-पराभ्यां जेः"इति तङ्। अरंस्त नीतौ सामा-दिषु मन्त्र्यादिषु च रतः, नीतिमानित्यर्थः। समूलघातं न्यवधीत् समूलान्निःशेषानरीन् शत्रून्हतवान्, उच्छेदनीया ये शत्रवः तेष्विदं विधानं, समूलोपपदाद्धन्तेः "समूलाकृत—" इत्यादिना णमुल्। "हो हन्तेः" इति घत्वं, वृद्धिः, "हनस्तः" इति तत्वं, "कषादिषु यथा—" इत्यादिना यथाविध्यनुप्रयोगः, अनुप्रयोगे "लुङि च" इति वधादेशः। तस्याकारान्तत्वादुपदेशेऽनेकाच्त्वा-दिण्निषेधो न भवति। अतो लोपे कृते तस्य स्थानिवद्भावात् "अतो हलादेः—" इति विभाषावृद्धिर्न भवति॥ २॥ ज० म०

दशरथगुणानाह, सोऽध्यैष्टेति।—स दशरथो वेदान् अध्यैष्ट अधीतवान्, 'अधीङ् च अध्ययने' इत्यस्मात् "नवशः प-मे—" इति ङित्वात् मं, "च्लेः सिः"इति सिः, "धो टा-धो-षु—" इत्यमं

कृत्वा "आदिणिचो:—" इति णौ कृते "भूयोऽमजादे:" इति पुनरमं कृत्वा "आदिणिचा:—" इति त्रि:, "क्रिलात्—" इति ष:, "ष्टुभि:—" इति तस्य ट:। वेदानिति वेदयन्तीति वेदा: सामादय:, पचादित्वादच्, "घञलनट्—" इति करणे वा घञ्। त्रिदशान् देवान् अयष्ट अग्निष्टोमादिना पूजितवान्। केचित्तु यजिरेव देवपूजावाचित्वात् त्रिदशानित्यस्य वैयर्थ्यापत्ते-स्त्रिदशानयष्ट सङ्गतवानित्याहु:। वस्तुतस्तूपचारात् पूजामात्र-वाचित्वेऽपि 'यजै ञौ देवार्चादानसङ्गतौ' इत्यत्र देवो देवनं क्रीड़ा अर्चा चेति द्वन्द्व:, देवस्यार्चेति तत्पुरुषोऽपि, तात्पर्य्यभेदा-द्वाक्यभेदो लौकिके न दोष इति केचित्। "अच्छ्रात्—"इति जस्य षङ्, "झमस्थात्—"इति सेर्लोप:"ष्टुभि:—"इति तस्य ट:। पितॄन् अपारीत् आप्यायितवान्, 'अ पॄ लि श्रो पालने पूर्त्तौ' "व्यां सि:" "कृदाद्यस्ति—" इति ईम् "वमोऽरस्य—"इति ईम्, "झमस्थात्—" इति सेर्लोप:, 'त्यलोपे त्यलक्षणम्' इति न्यायात् सेर्लोपेऽपि "अजवद—" इत्यादिना त्रि:। अतार्प्सीदिति क्वचित् पाठ:। तृपधातु: प्रीणने सकर्मक:, प्रीतिमात्रे त्वकर्मक इति चौरस्वामिप्रभृतय:। बन्धून् समर्मस्त आदृतवान्, 'मन्योङ् बोधे' सम्पूर्वोऽयमादरार्थे, औदित्त्वादनिम्। षड्वर्गं कामक्रोधलोभमानमदहर्षरूपं व्यजेष्ट अभिभवति स्म। 'जि जये' चकारात् अभिभवे, "वि-परा जि—" इति मम्। नीतौ अरंस्त क्रीड़ितवान्,'रमुङ् ञौ क्रीड़े,' अरीन् शत्रून् समूलघातं यथा स्यात्तथा न्यवधीत् हतवान्, समूलानां शत्रूणां घात: प्राणवियोगफलकव्यापारो यत्र हिंसाक्रियायाम्, अन्ये तु समूलशब्दात् पराहतार्थाडन्तेस्रणम्, विभक्त्यन्त-तदनुप्रयोग-श्चेत्याहु:। समूलाग्नि:शेषान् अरीन् प्राप्य हतवानित्यर्थ:। "णम् वाऽऽभीक्ष्ण्ये पूर्वकाले" इत्यत्र वा-शब्दस्य व्यवस्थावाचि-

वसूनि तोयं घनवद् व्यकारीत्
सहासनं गोत्रभिदाऽध्यवात्सीत् ।

त्वात् योगविभागाद्वा अन्यत्रापि चणम् वा स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातम्, अरीन् समूलान् हत्वा तत्प्राणत्यागानुकूलव्यापारं कृतवानित्यर्थः, तेन पूर्वकालत्वमपीति दुर्गासिंहप्रभृतयः । एतेन पुनः सन्धानशङ्कया सदा सावधानत्वं सूचितम् । घातमिति हन्तेर्घञि चणम् वा, "हनस्तः—" इति नस्य तः, "हो हन्तेर्ञ्णिन्नेषु—" इति हस्य घः, "अत उपधायाः—" इति वृद्धिः । न्यवधीदिति 'हनँ हिंसागत्योः' "हनो वध लिङि—" इति वधादेशेन वधान्तत्वात् "इमादेः सेमः—" इत्यादौ वधवर्जनात् वधेः सेमत्वसूचनाद्वा "वसोरस्य—" इतीम्, "इमादेः सेमः—" इति वधवर्जनान्न वृः । अजैष्ट षड्वर्गमित्यनेन मानसा रिपवः, अरीन् न्यवधीदित्यनेन च वाह्याश्च निर्जिताः, अतः परन्तप इति प्रागुक्तमुपपादितम् ॥ २ ॥ भ० म०

वसूनीति ।—वसूनि द्रव्याणि बन्धुव्यतिरेकेण बालादिभ्यो व्यकारीत् दत्तवान्, विक्षिप्तवानिति वा । किरतेर्लुङि रूपं, कः किमिव ? इत्यपेक्षायामाह—तोयं घनवदिति । तोयम् उदकं, घनो मेघः, फलनिरपेक्षतया यथा विकिरति तद्वत् । एवं सम्यक् पालनादिन्द्रेण तुल्यत्वमाह—सहासनं गोत्रभिदाऽध्यवात्सीदिति । गोत्रभिदा इन्द्रेण सहासनम् अध्यवात्सीत् अध्युषितवान्, अनेनात्यन्तधर्मविजयित्वस्य फलं दर्शयति । 'वस निवासे' इत्यस्य रूपं, 'वसिः सम्प्रसारणी' इति वचनादिड्भावः । "अस्तिसिचः—" इतीट्, "वदव्रज—" इत्यादिना वृद्धिः "सः स्यार्द्धधातुके" इति तत्वम् । आसनमिति "उपान्वध्याङ् वसः" इति अधिकरणस्य कर्मसंज्ञा ।

न त्र्यम्बकादन्यमुपास्थितासौ
यशांसि सर्वेषुभृतां निरास्थत् ॥ ३ ॥

त्रीणि अम्बकानि अक्षीणि यस्येति त्र्यम्बको महादेवः,तस्मादन्यं नोपास्थित न पूजितवानित्यर्थः। उपपूर्वात्तिष्ठतेः "देवपूजा-सङ्गतिकरण-मित्रकरण-पथिषु" इति देवपूजायां तङ् "स्थाघ्वो-रिच्च" इत्यादिना इत्त्वं कित्त्वं च। "ह्रस्वादङ्गात्" इति सिचो लोपः। इषून् बिभ्रतीति "अन्येभ्योऽपि दृश्यन्ते" इति क्विप्। इषुभृतो धनुर्धराः, सर्वेषां तेषां यशांसि निरास्थत् निरस्तवानित्यर्थः। एतेनास्य असाधारणीकृतास्त्रत्वं दर्शितम्। 'उपसर्गादस्यत्यूह्यो-र्वा वचनम्' इति वचनात् यदा तङ् नास्ति तदा तिप्, "अस्यति—" इत्यादिना च्लेरङ्, "अस्यतेस्थुक्" ॥ ३ ॥ ज०म०

वसूनीति।—असौ दशरथो वसूनि धनानि व्यकारीत् दत्त-वान्, क इव ? घनवत् मेघ इव, "चृत् मार्ज्ये" इति चृत्,विस्त्वा-दव्ययत्वं, तोयमिति तोयमिव, तोयतुल्यानि वसूनीत्यर्थः। तोय-शब्दोऽयं स्वप्राधान्यैकत्वादित्युक्त्यैकवचनं, अनेकेषामपि वसूना-मेकतुल्यतेत्याशयः। 'कॄ विक्षेपे' सौ "व्रजवद—"इति त्रि.। गोत्रान् पर्वतान् भिनत्तीति गोत्रभिदिन्द्रः, "त्रासुस—"इत्या-दिना क्विप्। तेन सह एकमासनमध्यवात्सीत्। 'वसौ निवासे' अनिसत्वात् "व्रजवद—" इति त्रिः, "स त् स्वरे" इति सस्य तः, "कर्मक्रिया—" इत्यादिना डस्य ढत्वम्। त्र्यम्बकात महादेवादन्यं न उपास्थित न पूजितवान्। "मैत्राध्वसङ्गाराधे" इति आराधनार्थे सं, "स्थादोर्डि:—" इति गुणिनिषेधश्च। त्रीणि अम्बकानि नेत्राणि यस्येति विग्रहः, द्यौर्भूमिरापस्तिस्रोऽम्बा यस्येति भारतम्। त्रयाणां लोकानामम्बः पितेत्यन्ये।

पुण्यो महाब्रह्मसमूहजुष्टः
सन्तर्पणो नाकसदां वरेण्यः।
जज्वाल लोकस्थितये स राजा
यथाऽध्वरे वह्निरभिप्रणीतः ॥ ४ ॥

निरोऽस्वाः प्रज्ञयोऽस्येति केचित्। "अन्यारभ्य—"इति पौ। सर्वेषुभृतां सकलधनुर्धराणां यशांसि निरास्यत् निरस्तवान्, ततोऽधिकत्वात्। "वत्यस्यत्याक्लिप—" इति ङः, "वच्यस्य—" इति अस्यतेः स्थादेशः, इषून् बाणान् बिभ्रतीति पूर्ववत् क्विप्, "स्वस्य तन् पिति" इति तन् ॥ ३ ॥ भ० म०

पुण्य इति।—पुनातीति पुण्यः 'पूञो यत् णुक् ह्रस्वश्च' इति औणादिको यत्, णुगागमश्च ह्रस्वश्च, अत्यन्तपुण्यकरणात् राजाऽपि पुण्य इत्युच्यते, तन्मयत्वाद्राजा। अग्निरपि पुण्यः,पावनत्वात् पुण्यः। यागादिः पुण्यः, तेन पुरुषः पूयते। महतां वेदविदां ब्रह्मणां ब्राह्मणानां समूहेन जुष्टः सेवितो राजा अग्निश्च, ब्रह्मशब्दोऽत्र ब्राह्मणपर्य्यायः। नाके स्वर्गे सीदन्तीति "सत्सू द्विष—" इत्यादिना क्विप्,नाकसदो देवाः तेषां,कर्मणि षष्ठी। सन्तर्पयति प्रीणयतीति सन्तर्पणः,सन्तर्पयतेः"कृत्यल्युटो बहुलम्" इति कर्त्तरि ल्युट्। राजा यागादिना तर्पयति, अग्निरपि अग्निमुखत्वाद्देवानाम्। वरेण्यः श्रेष्ठः, राजा अग्निश्च। 'वृङ एण्यः'। जज्वाल प्रदीप्तवान्, लोकस्थितये मा भूल्लोकस्य स्थित्यतिक्रम इत्येवमर्थम, अग्निरपि लोकस्य स्थितये ज्वलति। यथोक्तम्—"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" इति। अभिप्रणीत इत्यग्निविशेषणम्, आभिमुख्येन प्रणीत इति प्रादिसमासः, "उपसर्गादसमासे—"

इत्यादिना णत्वं, मन्त्रेणाभिमुखीकृत इत्यर्थः। यथाऽध्वरे याग-ऽभिप्रणीतो वह्निर्ज्वलति तथा राजाऽपीत्यर्थः॥ ४॥ ज० म०

पुण्यो महेति।—स राजा लोकस्य स्थितये मर्यादायै जज्वाल दीप्तवान्, प्रतापवान् बभूवेत्यर्थः। यथा अध्वरे यज्ञे अभिप्रणीतो मन्त्रेण संस्कृतो वह्निरग्निर्ज्वलति,अग्निज्वलनमपि लोकस्थित्यर्थं स्यात्। यदुक्तम्—"अग्नौ प्रास्ताहुतिः सम्यगादित्य-मुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" इति। उभयोर्विशेषणमाह—पुण्यः पुनातीति पुण्यं धर्म, "नाम्नान्ये तिक् च" इति सूत्रेणान्येऽपि कृतः प्रयोगाः स्युरिति सूचितं, तेन पुनातेरुण्ये"टेर्लोपो डिति—"इति टेर्लोपः, पुण्ययोगात् पुण्यः अर्श-आदित्वादः। "पुण्यं धर्मे मनोज्ञे च पावने च प्रयुज्यते।" महतां ब्रह्मणां समूहेन जुष्टः सेवितः, तेन प्रीतो वा। "ब्रह्मा विरिञ्चिद्विजयोः"इति विश्व.।"शङ्के तैले तथा मासे वैद्ये ज्योति-षिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति निषेधान्महता ब्रह्मसमूहेन जुष्ट इति वा विगृह्यते। महाश्वासौ ब्रह्मसमूहजुष्टश्चेति वा, यद्वा—महत् ब्रह्म तपो येषां तेषां समूहेन जुष्टः।"वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्र. प्रजापतिः" इत्यमरः। यद्वा—अमहा अस्येव विष्णोरिव महस्तेजो यस्य असावमहा इति पृथक् पदम्। यद्वा—मह्यते पूज्यतेऽसौ महाः "स्वासुम्"इति कर्मण्यसुन्। यद्वा—अमो रोगस्तं हन्ति इत्यमहा, तस्मिन् राजनि सति लोकानां व्याधिभयं नासीदित्यर्थः। आरोग्यमपि कविभिर्वर्ण्यते, तथाच कालिदासः,—"जनपदे न गदः पदमादधावभिभवः कुत एव सपत्नजः?" इति; अग्नेः व्याधिहन्तृत्वमस्त्येव। 'शङ्कि जुषमुदि सेवे' इदित्त्वात् "नेम् डाश्वोत्—"इतीण्निषेधः। नाके स्वर्गे सीदन्तीति नाकसदो देवाः, पूर्ववत् क्विप्. तेषां सन्तर्पणः। "ग्रहनन्दि—" इति ल्युः, "दधे

स पुण्यकीर्त्तिः शतमन्युकल्पो
महेन्द्रलोकप्रतिमां समृद्ध्या।
अध्यास्त सर्वर्त्तुसुखामयोध्या-
मध्यासितां ब्रह्मभिरिद्धबोधैः ॥ ५ ॥

कतीति ढ षो. सम्यक् तर्पणं यस्मादिति विद्यमानसम्बन्धे षष्ठीत्यन्ये। कं सुखं तद्विपरीतमकं, तत् नास्त्यस्मिन्निति नाकः "नञोऽनो वाऽज्झमोः" इति व्यवस्थितविकल्पत्वान्न नञो-ऽनादेशः। वरेण्यः अन्यापेक्षया श्रेष्ठः, वृञधातोः श्रेष्ठार्थे "मास्नात्ये निक् च" इत्यन्यकृतसूचनादेन्यः ॥ ४ ॥ भ० म०

यत्रस्थो राज्यं चकार तां नगरीं दर्शयन्नाह, स पुण्येत्यादि।—स्वामिगुणपूर्वका हि निवासस्य गुणा भवन्तीति प्रदर्शनार्थं पश्चात्तदभिधानं, तथा चोक्तं—"स तु यच्छील-स्तच्छीला अस्य प्रकृतयो भवन्ति" इति। स राजा पुण्यकीर्त्तिः पुण्याः पवित्राः कीर्त्तयो यस्य सः। शतमन्युकल्प इति प्रभावं दर्शयति, "ईषदसमाप्तौ—" इति कल्पप्। शतमन्युरिन्द्रः, महेन्द्रलोकप्रतिमामयोध्यामिति योज्यम्। प्रतिमीयते तुल्यते इति प्रतिमा "आतश्चोपसर्गे" इत्यङ्। महेन्द्रलोकेन प्रतिमा तुल्या, "तृतीया—" इति योगविभागात् समासः, अमरावती-मिवेत्यर्थः। कया? समृद्ध्या, सम्यगतिशयेन ऋद्धिः समृद्धिः, "कुगतिप्रा—" इति प्रादिसमासः, अध्यास्त अध्यासितवान्, भूतसामान्ये लङ्। आस्तेरनुदात्तेत्त्वात्तङ्, "अधिशीङ्—" इत्यादिना अधिकरणस्य कर्मसंज्ञा। सुखयतीति सुखा, पचाद्यच्, सुखहेतुत्वाद्वा सुखा। सर्वेषु ऋतुषु सुखेति "सप्तमी—" इति योगविभागात् समासः। अध्यासिताम् अध्युषिताम्।

ऊर्द्ध्वस्फुरद्रत्नगभस्तिभिर्या
स्थिताऽवहस्येव पुरं मघोन: ॥ ६ ॥

सत्तत्वम्' इति भाष्यकारस्योक्ति। तस्य सीमेव मर्य्यादेव अयोध्या, तता न रूप्यन्तरं शोभनमस्तीत्यर्थ:। कीदृशस्य? निर्माण-दक्षस्य, निर्मितिर्निर्माणं स्राष्ट: तत्र दक्षस्य पटो:। क विषयेषु? समीहितेषु स्रष्टुमीप्सितेष्वित्यर्थ:। ऊर्द्ध्वमुपरिष्टात् स्फुरद्रत्न-गभस्तिभि: स्फुरन्तो ये रत्नानां गभस्तयो रश्मय: तै: हासभूतै-र्मघोन इन्द्रस्य पुरममरावतीम् अवहस्येव स्थिता या, तामध्यास्त। 'मघवन श्वन् उक्षन्' इत्यौणादिका:। ''श्वयुवमघोनाम्—'' इति सम्प्रसारणम् ॥ ६ ॥ ज० म०

निर्माणेति।—ऊर्द्ध्वं स्फुरन्तो ये रत्नानां गभस्तयो रश्मयस्तैर्मघोन इन्द्रस्य पुरम् अवहस्येव निर्माण-दक्षस्य विश्वकर्मण: समीहितेषु सम्यक् चेष्टितेषु या स्थापिता, तामयोध्यामध्यास्तेति पूर्व्वेणान्वय:। समुपसर्गेण बहुलत्वेन च चेष्टाया आधिक्यं सूचितम्। विश्वकर्मणा नेदृशी शोभना पुरी निर्मिता, अत इमां विलोक्य ईदृक्पुरीनिर्माणे चेष्टा जातेत्यभिप्राय:। पद्ममेव आसनं यस्य स पद्मासनो ब्रह्मा तस्य कौशलस्य नैपुण्यस्य सीमा इवेति इव उत्प्रेक्षायां, ब्रह्मणा नेदृशी शोभना अन्या पुरी निर्मितेति भाव:। अत: सुतरां विश्वकर्मण ईदृक्-निर्माणे चेष्टावत्त्वम। यद्वा—निर्माणदक्षस्य विश्वकर्मण: समीहितेषु निर्मितेषु सीमेव, इत: परं शोभनं न निर्मितम् इत्यभिप्राय:। किम्भूतस्य? पद्मासनस्येव कौशलं यस्य। यद्वा—पद्मासनस्य कौशलं सौन्दर्य्यं यस्य स पद्मासन-कौशलो ब्रह्मा, तस्य समीहितेषु वाञ्छितेषु सीमेव। तस्य किम्भूतस्य? निर्माणदक्षस्य निर्माणचतुरस्य। यद्वा—कौ पृथिव्यां

सद्रत्नमुक्ताफलवज्रभाञ्जि
विचित्रधातूनि सकाननानि ।
स्त्रीभिर्युतान्यप्सरसामिवौघै-
र्मेरोः शिरांसीव गृहाणि यस्याम् ॥ ७ ॥

शलते चलतीति कौशलः, पचादित्वादच् । सरसिजमित्युदाहरता वोपदेवेन क्वचित् समासे विभक्तेर्न लुक् इति सूचितं, तेनात्र सप्तम्या अलुक् । पद्मासनस्यासौ कौशलश्चेति कर्मधारयः, तस्य समीहितेषु सेवेव । क्वचिद्विशेष्यः प्राक् प्रयुज्यते प्राग्भवस्य विवक्षाधीनत्वात् इति पद्मासनस्य प्राग्भावः । कौशल इति विशेषणात् पृथिव्यां विहितसृष्टेर्नैतादृशी सृष्टिरिति सूचितम् । अत एव पृथिव्यां प्रतियोग्यभावात् स्वर्गमुपहस्य स्थिता । मघोनः किम्भूतस्य ? निर्माणदक्षस्य स्वपुरीनिर्माणं दक्षते हन्तीति पचादित्वादच्, इमां पुरीं दृष्ट्वा स्वपुरीनिर्माणनिन्दकस्येत्यर्थः ॥ ६ ॥ भ० म०

सद्रत्नेति ।—सन्ति शोभनानि यानि रत्नादीनि तानि भजन्ते यानि गृहाणि तानि सद्रत्नमुक्ताफलवज्रभाञ्जि, मुक्ताफलवज्रयोः रत्नान्तर्भावेऽपि प्राधान्यख्यापनार्थं वचनं, गोबलीवर्दन्यायाद्वा । रत्नशब्देन मरकतपद्मरागवैदूर्य्यादयो गृह्यन्ते । "सद्रत्न···युञ्जि" इति पाठान्तरम् । "युजेरसमासे" इति प्रतिषेधो न भवति, अनपुंसकविषयत्वात्, नपुंसके तु तल्लक्षणस्य नुमो विधानात् । विचित्रधातूनि विचित्रा नानाप्रकारा धातवो मनःशिलादयो येषु गृहेषु, तेषां विरचितचित्रकर्मत्वात्, सकाननानि सोद्यानानि, स्त्रीभिर्युतानि अप्सरसामिवौघैः तत्रत्याभिः स्त्रीभिरप्सरोभिरिवेत्यर्थः । मेरोः शिरांसीव मेरोः शृङ्गाणीव,

अन्तर्निविष्टोज्ज्वलरत्नभासो
गवाक्षजालैरभिनिष्पतन्त्यः ।
हिमाद्रिटङ्कादिव भान्ति यस्यां
गङ्गाम्बुपातप्रतिमा गृहेभ्यः ॥ ८ ॥

एवंविधानि गृहाणि यस्यामयोध्यायां तामध्यास्त। गृह इति "गेहे कः", तत्र गृहशब्दो वेश्मनि नपुंसकलिङ्गः, तत्स्थायिषु पुंलिङ्गो नित्यं बहुवचनान्तश्च ॥ ७ ॥ ज० म०

सद्रत्नेति।—यस्यामयोध्यायां गृहाणि मेरोः शिरांसीव। उभयविशेषणमाह—सद्रत्नेत्यादि। सन्ति शोभनानि रत्नानि पद्मरागादीनि मुक्ताफलानि मौक्तिकानि वज्राणि हीरकाणि च भजन्ते इति विण्, "भजो ण्विः" इति ण्विः, मुक्ताफलवज्राणां रत्नत्वेऽपि प्राधान्यात् प्राचुर्याद्वा पृथगुपादानं, "जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते" इत्यनुशासनात्। सद्रत्नानि शोभनमध्ये उत्कृष्टानीत्यर्थः। 'युक्ति' इति पाठे—रत्नादीनां युक् योगो येषु, "ऋत्विग्—" इति क्विप्। विचित्रा धातवो येषु, मनःशिलादिभिः कृतचित्रत्वात् सुमेरुशृङ्गेषु सहजत्वात्, काननैः सह वर्त्तमानानि गृहसन्निधिविहितोद्यानात् मेरुशृङ्गेषु सहजत्वात्,"सहः सो वा" इति विभाषया सहशब्दस्य सो बहुव्रीहौ। अप्सरसामोघैरिव स्त्रीभिर्युतानि ओघशब्दात् एकैव शोभाऽपि। स्त्रीणामप्सरःसमूहसादृश्येनातिसौन्दर्यं दर्शितम्। "ओघो वृन्देऽम्भसां रये" इत्यमरः ॥ ७ ॥ भ० म०

अन्तरिति।—अन्तः गृहमध्ये निविष्टानि निहितानि उज्ज्वलरत्नानि यानि तेषां भासो रश्मयः गृहेभ्यो गवाक्षजालैः अभिनिष्पतन्त्यः निर्गच्छन्त्यः यस्यां भान्ति तामध्यास्तेति

धर्म्यासु कामार्थयशस्करीषु
मतासु लोकेऽधिगतासु काले।

योज्यम्। पर्वतस्य उन्नतप्रदेशष्टङ्क इत्युच्यते, तस्मात् हिमवत्पर्वततटङ्कादिव गङ्गाम्बुपातप्रतिमा गङ्गाजलप्रवाहतुल्याः, स्वच्छत्वात्॥ ८॥ ज० म०

चन्तरिति।—यस्यामन्तर्मध्ये निविष्टानामर्पितानाम् उज्ज्वलानामुद्दीप्तानां रत्नानां भासो दीप्तयो गवाक्षजालैर्वातायनसमूहैर्जालाकृतिगवाक्षैर्वा गृहेभ्योऽभिनिष्पतन्त्यो निःसरन्त्यो भान्ति। हिमाद्रेर्हिमालयस्य टङ्कात् पाषाणदारणात् विदीर्णप्रस्तरभागात् अभिनिष्पतन्त्यो गङ्गाम्बुपातप्रतिमा इव गङ्गाजलपतनच्छटा इव। "टङ्कः कपित्थभेदे स्यात् मानान्तरखनित्रयोः। कोपेऽधिकोपे जङ्घायां तथा पाषाणदारणे" इति विश्वः। गवामक्षीव गवाक्षः "अक्ष्णोऽवक्षुषि" इति षः, "यथोर्लोपः—" इतीकारलोपः। हिमप्राधान्यात् हिमस्याद्रिर्हिमाद्रिरिति षष्ठीसमासः, हिमेन युतोऽद्रिरिति वा। अभिनिष्पतन्त्य इति "न टं त-सौ त्वस्यर्थे च" इति सूत्रेण पदत्वनिषेधात् समासे लुप्तविभक्तिकस्य पदान्तत्वं ज्ञापकसिद्धं, ज्ञापकसिद्धस्यानित्यत्वं, तेन समासे लुप्तविभक्तिकस्य क्वचिदपदान्तत्वमपि, तेन "से तु कखपफे वा" इति सूत्रेण विसर्गसम्बन्धि-सस्य कृतत्वात् "किलात्—" इति षत्वं स्यादिति तु "वेमूर्दित्—" इत्यादि सूत्रे निष्कुष इति मूर्द्धन्यषनिर्देशात् सूचितं, तेनात्र "से तु कखपफे वा" इति विसर्गस्य से कृते "किलात्—" इति षत्वं, मनीषादित्वाद्वा। "से तु कखपफे वा" इत्यत्र वाशब्दो व्यवस्थावाची, तेनात्र नित्यं सकार इति बोध्यम्॥ ८॥ भ० म०

धर्म्यास्विति।—धर्मादनपेतासु "धर्मपथ्यर्थ—" इत्यादिना

विद्यासु विद्वानिव सोऽभिरेमे
पत्नीषु राजा तिसृषूत्तमासु ॥ ९ ॥

यत्। कामार्थयशांसि कर्त्तुं शीलं यासां तासु। "कृञो हेतु—" इत्यादिना ताच्छील्ये टः, अतः "कृ-कमि—"इत्यादिना विसर्जनीयस्य सत्वं, टित्वात् ङीप्। मतासु पूजितासु, लोके तासां प्रतीतत्वात्। अधिगतासु काले विवाहयोग्ये काले परिणीतासु, सोऽभिरेमे स राजा अभिरतवान्। पत्नीषु "पत्युर्नो यज्ञसंयोगे" इति नकारः। तिसृषु कौशल्याकैकेयीसुमित्रासु, उत्तमास्विति सर्वारीगुणैः श्रेष्ठासु, विद्यास्विति विदन्ति आभिर्धर्माधर्माविति विद्या "संज्ञायां समज—" इत्यादिना क्यप्। तिसृषु सामर्ग्-यजुराख्यासु। धर्म्यास्वित्यादिकं तुल्यम्। विद्वानिव यथा अधिगतविद्य इत्यर्थः। "विदेः शतुर्वसुः", दीर्घ-हल्-ङ्यादि-संयोगान्तलोपाः ॥ ९ ॥ ज० म०

धर्म्यास्विति।—स राजा तिसृषु पत्नीषु अभिरेमे चिक्रीड़, "तफल—" इत्यादिना अकारस्यैत्वं खिलोपश्च। यथा विद्वान् पण्डितो विद्यासु रमते, "वेत्तेः शतुः क्वसुर्वा" इति वाशब्दस्य व्यवस्थावाचित्वात् पाण्डित्यार्थे नित्यमिति बोध्यम्। विदन्तीति विद्याः, "शीव्रजयज—"इत्यादिना क्यप्। उभयविशेषणमाह, धर्म्यासु धर्मादनपेतासु, "ढये कात् णीक—"इत्यादिना णग्रः, तेषां णग्रादीनां सेत्त्वमणित्त्वञ्च स्यात्, अतोणित्त्वं, तेन "णित्ते त्रिः—" इत्यादिना न त्रिः, "ङ्घ्न्—" इति न ईप्। काममर्थं यशः कुर्वन्ति इति"स्कुष्टः"इति टः। 'हेत्वाद्यर्थे टः' इति परे। लभते यशस्करो विद्येति उदाहरणेन हेत्वाद्यर्थः सूचितः, विद्याया यशस्करणे हेतुत्वात्, अन्यथा विद्येति निर्देशो निरर्थकः। टित्वात "ङ्घ्न्वृष्वाह—" इति ईप्, "से तु कखपफे

पुत्त्रीयता तेन वराङ्गनाभि-
रानायि विद्वान् क्रतुषु क्रियावान् ।
विपक्त्रिमज्ञानगतिर्मनस्वी
मान्यो मुनिः स्वां पुरमृष्यशृङ्गः ॥ १० ॥

वा" इति वे: म: । लोके मतासु पूजितासु, काले विवाहसमये अधिगतासु परिणीतासु, पक्षे शैशवसमये गृहीतासु उत्तमासु श्रेष्ठासु ॥ ९ ॥ भ० म०

तस्य राज्ञ: पत्नीभिस्ताभि: सह रममाणस्य सुता नैवासन् । ऋष्यशृङ्गनामा मुनि: पुत्त्रीयं क्रतुं जानातीति पुरोधसो वशिष्ठादुपश्रुत्य राज्ञा वारविलासिनीभिरानायितो मुनिरित्येतत् कथयितुमाह, पुत्त्रीयतेति ।—पुत्त्रीयता आत्मन: पुत्त्रमिच्छता, इच्छायां "सुप आत्मन: क्यच्" इति क्यच्, "क्यचि च" इतीत्वम् । तेन राज्ञा प्रयोजककर्त्रा वराङ्गनाभिर्वरस्त्रीभि: प्रयोज्यकर्त्रीभि: आनायि, स्वां पुरमिति योज्यम् । 'नी-वह्यो:—' इत्यादेरपि "अकथितञ्च" इति चकारेण सङ्गृहीतत्वात् नयतिर्द्विकर्मक:, तत्र प्रधानकर्मणि लुङ् । चिणिलोपौ, "चिणो लुक्" इति तशब्दस्य लुक् । गुणकर्मणि तु पुरमिति द्वितीया, "गतिबुद्धि—" इत्यादिना प्रयोज्यकर्त्तरि द्वितीया न भवति, 'नीवह्योः प्रतिषेध:' इति वचनात् । विद्वान् वेदार्थतत्त्ववित्, एवञ्च कृत्वा क्रतुषु क्रियावान् प्रशस्तक्रिय:, प्रशंसायां मतुप् । विपक्त्रिमज्ञानगतिरिति विपाकेन निर्वृत्तं, पचते: क्त्रि:, क्त्रेर्मप्, यत् पूर्वजन्मकृतमनिवर्त्तनीयं कर्म तस्योग्रतप:प्रत्ययात् विनोपदेशात् ज्ञानं तत् प्रवृत्तिर्बुद्धावस्य जातेत्यर्थ: । मनस्वी प्रशस्तमना:, प्रशंसायाम् "अस्मायामेधा—" इत्यादिना विनि: । मान्यो मानार्ह:, "अर्हे कृत्यतृचश्च" इति ण्यत् । धर्मादिमननान्मुनि:,

ऐहिष्ट तं कारयितुं कृतात्मा
क्रतुं नृपः पुत्रफलं मुनीन्द्रम् ।

'मनेरुच्चोपधाया' इति इन्, उपधाया उकारः। ऋष्यस्य शृङ्गम् ऋष्यशृङ्ग तच्छृङ्गमिव शृङ्गं यस्य स ऋष्यशृङ्गः। 'सप्तम्युपमान—' इत्यादिना उत्तरपदलोपो समासः ॥ १० ॥ ज० म०

पुत्रीयतेति ।—आत्मनः पुत्रमिच्छता तेन राज्ञा प्रयोजककर्त्रा वराङ्गनाभिः प्रयोज्यकर्त्रीभिः ऋष्यशृङ्गनामा मुनिः स्वां पुरमानायि। नीञ् प्रापणे द्विकर्मकः, "न्यादिजग्राम्लाद—" इत्यादिना मुख्यकर्मोक्तं, "रतनोर्यङ्गिणो" इति तनि इण्, "इणस्तन् लोप्यः" इति तनो लोपः,"ञेर्लोपः—"इति ञिलोपः। तदानयने हेतुगर्भविशेषणमाह—विद्वान् पण्डितः, क्रतुषु यज्ञेषु क्रियावान् प्रशस्तक्रियः, "मोङ् स भगात्—" इति अस्त्यर्थे वतुः, अस्त्यर्थप्रत्ययाः प्राशस्त्यादिविवक्षया भवन्ति। यदुक्तं— "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" इति। विपाकेन जाता ज्ञानस्य गतिर्मार्गो यस्य स तथा विनोपदेशाज्ज्ञानं जातमित्यर्थः, अतिपरिणतज्ञानमार्ग इत्यर्थो वा। "ङितस्तज्ञ—" इति त्रिमक्। "गतिर्मार्गे दशायाञ्च ज्ञाने यात्राऽभ्युपाययोः" इति विश्वः। मनस्वी प्रशस्तमनाः "स्रङ्मेधासमायात्—" इति विन्। मान्यः मानार्हः, "ढ्य कात्—" इति अर्ह्यार्थे साध्वर्थे वा ष्यः। धर्मादिमननान्मुनिः, मनेर्निपातनात्। ऋष्यस्य मृगस्य शृङ्गमिव शृङ्गमस्य,"आकर्षश्च" इत्युदाहरणेन क्वचिन्मध्यपदलोप इति सूचितं, षष्ठीप्रथमयोरिवार्थः समास इति श्रीपतिदत्तः। तन्मते ऋष्यस्येव मृगस्येव शृङ्गमस्येति विग्रहः। प्रशस्तान्यङ्गान्यासामिति "गोढ्य—" इति पामादित्वान्नप्रत्यये-

ज्ञाताशयस्तस्य ततो व्यतानीत्
स कर्मठः कर्म सुतानुबन्धम् ॥ ११ ॥

ऽङ्गना:। पुत्त्रीयतेति "क्योऽम्बयात्—" इति क्यः, अकारस्य ईकारः ॥ १० ॥ भ० म०

ऐहिष्टेति।—तं मुनीन्द्रं क्रतुं कारयितुं नृप ऐहिष्ट ईहितवान्, ईहतेरात्मनेपदिनो लुङि सेट्त्वादिटि च रूपम्। द्विकर्मकता तु "हृक्रोरन्यतरस्याम्" इति। कृतात्मा वशीकृतात्मेति भावः। पुत्त्रफलं पुत्त्रः फलं कार्य्यं यस्य क्रतोः। तत उत्तरकालं, स मुनिः परचित्तज्ञत्वात् ज्ञाताशयो ज्ञाताभिप्रायो राजाभिमतं कर्म कारयितुं तस्य नृपस्य कर्म व्यतानीत् प्रारब्धवान्। तनोतेः "नेटि" इति हलन्तलक्षणायां प्रतिषिद्धायाम् "अतो ह्लादेः—" इति विभाषावृद्धिः। कर्मठः कर्मणि घटते "कर्मणि घटोऽठच्" यागक्रियानिष्पादक इत्यर्थः। सुतानुबन्धं सुताननुबध्नातीति कर्मण्यण्। "सुतानुबन्धि" इति पाठान्तरम्। सुताननुबन्धुं शीलमस्येति "सुप्यजातौ णिनिः—" सुपीत्यनुवर्त्तमाने सुप्ग्रहणमुपसर्गनिवृत्त्यर्थमिति केवलस्योपसर्गस्य निवृत्त्यर्थं द्रष्टव्यम्, अन्यथा जाताविति किं ब्राह्मणानामन्त्रयितेति न युज्यते, आङित्यस्योपसर्गत्वात् ॥ ११ ॥ज०म०

ऐहिष्टेति।—तं मुनीन्द्रं नृपः पुत्त्रफलं क्रतुं कारयितुम् ऐहिष्ट। 'ईह चेष्टे' "ल्यां सि.", "वसोरस्य—"इतीम्, "घोटीथोध्वम्" इत्यम्, "आदिगेचोः—" इति त्रिः, "घोऽञो जेः—" इति प्रयोज्यकर्त्तुः कर्मत्वम्। कृतात्मा कृत आत्मा यत्नो येन। "आत्मा यत्नो धृतिः" इत्यमरः। ततोऽनन्तरं ज्ञाताभिप्रायः स मुनीन्द्रस्तस्य नृपस्य सुतानुबन्धं कर्म व्यतानीत्। 'तनु दज विस्तृतौ' "ल्यां सिः", "वदाद्यस्ति—" इति ईम्, वसोऽरस्य—" इतीम्,

रक्षांसि वेद्यां परितो निरास्थ-
दङ्गान्ययाक्षीदभितः प्रधानम् ।
शेषाण्यहौषीत् सुतसम्पदे च
वरं वरेण्यो नृपतेरमार्गीत् ॥ १२ ॥

"हमादेः सेमः—"इति क्रिः । सुतानन्नुबध्नाति जनयतीति "ढात् षण्" इति षणि,"सुतानुबन्धि" इति पाठान्तरम् । सुतस्यानुबन्धः सुतानुबन्धः घञन्तः, ततः अस्त्यर्थे "नैकाजात्—" इति इन् । कर्मणि कुशलः कर्मठः "अत्तद्धितसमासानामभिधानं नियामकम्" इत्युक्तेः कर्मणः कौशले ठ इति बोध्यम् ॥ ११ ॥ भ० म०

रक्षांसीति ।—वेद्यां परितः यजनवेद्याः समन्तात् विघ्नायोपस्थितानि रक्षांसि, रक्ष्यते एभ्य इत्यसुन्, तानि रक्षोघ्नैर्मन्त्रैर्निरास्थत् निरस्तवान् । पर्य्यभिभ्यां सर्वोभयार्थे तसिल् । 'अभितः परितः—' इत्यादिना द्वितीया । अङ्गान्ययाक्षीदभितः प्रधानमिति । यद्देवतामयो यागः सा देवता तत्र प्रधानं, पुत्रफलत्वाद्विष्णुः प्रधानं, तामिष्ट्वा तस्योभयतः पार्श्वयोर्यान्यङ्गानि चक्षुरादीनि देवतान्तराणि तान्ययाक्षीत् अग्नावाहुत्या पूजितवान् । कर्तुः क्रियाफलाभावात्तङ् न भवति, षत्व-कत्वे । शेषाण्यहौषीदिति साङ्गं विष्णुमिष्ट्वा शेषाणि प्रतिकृतानि पिष्टकमयानि सुतानां सम्पदर्थमग्नौ हुतवान् । जुहोतेः सिचि हुवावीटि च रूपम् । वरेण्यः श्रेष्ठः । वरञ्च अमार्गीत् मार्गितवान्, "हे देवा अग्निप्रभृतयः ! नृपतेः सुता भूयासुः" इति । 'मार्ग अन्वेषणे ।' 'आधृषाद्वा' इति यदा णिच् नास्ति तदा चङभावात् सिजेव भवति ॥ १२ ॥ ज० म०

रक्षांसीति ।—वरेण्यः मुनिर्वेद्यां परितो वेद्याः समन्तात्

निष्ठां गते दत्त्रिमसभ्यतोषे
विहित्रिमे कर्मणि राजपत्न्यः।
प्राशुर्हुतोच्छिष्टमुदारवंश्या-
स्तिस्रः प्रसोतुं चतुरः सुपुत्त्रान्॥ १३॥

रक्षांसि निरास्थन्निराकृतवान्, पूर्ववदस्यतेर्ङ्, अस्था-देशश्च। प्रधानमभितः प्रधानयागस्योभयपार्श्वे आद्यावन्ते च, अङ्गानि अयाक्षीत्; अङ्गयागानकार्षीत्। यद्वा—प्रधानदेवताया विष्णोरुभयपार्श्वेऽङ्गानि चक्षुरादीनि लोकपाल-नवग्रहादीन् वा पूजितवान्, एतेन साङ्गादेव कर्मणः फलावश्यम्भाव इति सूचितम्। 'हु नि होमऽदने'। "आकाशकाशकुलिशाङ्कुशशेष-वेश—" इत्यादिनपुंसकसङ्ग्रहे हेमचन्द्रेण पाठतम्। नृपतेः सुतसम्पदे च वरममार्गीत्, 'मार्ग अन्वेषणे'। अयाक्षीदिति यजेरनिमत्वात् "व्रजवद—" इति वृः, "शच्छ्राज—" इति षङ्, "षढोः कः—"इति कः, "क्विलात्—" इति षत्वम्। वेदीं प्रधानञ्चेत्यत्र परितोऽभितो योगे "धिक्समया—" इत्यादिना द्वितीया॥ १२॥ भ० म०

निष्ठामिति।—निष्ठा समाप्तिं गते कर्मणि यागक्रियायां समाप्तायां राजपत्न्यः हुतोच्छिष्टं हुतावशेषं शिष्टचरुं प्राशुः भक्षितवत्यः। अश्नातेर्लिटि उसि रूपम्। दत्त्रिमसभ्यतोषे दानेन निर्वृत्तो दत्त्रिमः सभ्यानां ब्राह्मणानां तोषो यत्र कर्मणि। विहित्रिमे विधानेन निर्वृत्ते कर्मणि, दाञो धाञश्च "ड्वितः क्त्रिः" इति क्त्रौ विहिते प्रथमस्य "दो दद्घोः" इति ददादेशः, द्वितीयस्य "दधातेर्हिः" इति हिरादेशः मप्, सभायां साधव इति सभ्याः "सभाया यः"। उदारवंश्या महावंशोद्भवाः, शेषे यत्।

**कौशल्ययाऽसावि सुखेन रामः**
**प्राक् कैकयीतो भरतस्ततोऽभूत् ।**

कौशल्या कैकेयी च क्षत्रिये, सुमित्रा तु वर्णसङ्करजा। किमर्थं प्राशुः ? प्रसोतुं सुपुत्रान् विनीतान् प्रसवितुं, तत्र कौशल्या कैकेयी च एकैकं पिण्डं प्राशितवत्यौ, ताभ्याञ्च आवयोः परिचारिकेति पिण्डभागद्वयं दत्तं सुमित्रा प्राशितवती। ततश्च पुत्रद्वयं जनयिष्यति, एतच्चाभिसन्धाय चतुर इत्युक्तं, न तु त्रीनिति। 'षूङ् प्राणिगर्भविमोचने' "स्वरति—"इत्यादिना विभाषितेट्॥ १२॥ ज० म०

निष्ठामिति।—कर्मणि निष्ठां निष्पत्तिं गते सति उदारवंश्यास्तिस्रो राजपत्न्यः चतुरः शोभनपुत्रान् प्रसोतुं हुतशेषं प्राशुः। 'अश्‌ग भोजने'। 'षूङ्‌ञ प्रसवे' "तादर्थ्ये चतुम्" "वेमूदित्—" इति इम, पक्षे इमोऽभावः। वंश्या इति "ढघे कात्—" इति भवार्थे ण्यः, तस्यानित्वात् न त्रिः न ईप्। कर्मणि कीदृशे ? दानेन जातः सभ्यानां तोषो यत्र। 'डु दा-ञ् लि दाने' "ड्वितस्त्त्रे—" इति त्रिमक् "दद्दोऽधः" इति दत्। सभायां साधुः सभ्यः पूर्ववत् ण्यः। त्रिड्वित्रिमे विधानेन जाते, पूर्ववत् त्रिमक्, "धाञो त्थिः" इति त्थिः॥ १२॥ भ० म०

कौशल्ययेति।—कोशलस्य राज्ञोऽपत्यमिति "वृद्धेत्कोशलाजादाञ्ञ्यङ्", "यङश्चाप्"। कौशल्यया प्राक् प्रथमम् असावि रामः जन्यते स्म। षूङः कर्मणि लुङि चिणि रूपम्। सुखेनेति प्रकृत्यादित्वात् तृतीया। महतां जन्मनि न काचिदपि पीड़ाऽस्ति। तदनन्तरं कैकयीतो भरतोऽभूत्। केकयानाचष्ट इति णिच्। स हि ईदृशास्तादृशाः केकया इति कथयति। तदस्मात् 'अच इः' इति इकारप्रत्यय औणादिकः,

प्रासोष्ट शत्रुघ्नमुदारचेष्ट-
मेका सुमित्रा सह लक्ष्मणेन ॥ १४ ॥

णिलोपः। 'ऋदिकारादक्तिनः' इति ङीष्। "अपादाने चाहीयरुहोः" इति तसिः। यदा च केकयस्यापत्यं "जनपद-शब्दात् क्षत्रियादञ्"इत्यञ्। "केकयमित्रयुप्रलयानां यादेरियः" इतीयादेशः। "टिड्ढाणञ्—" इति ङीप्, तदा कैकेयीति द्वितीयं रूपम्। सुमित्रा शत्रुघ्नमुदारचेष्टम् उदारा चेष्टा यस्येति। प्रासोष्ट प्रसूतवती। कर्त्तरि लुङ्, ङित्त्वात्तङ्। जातमात्रस्य हि तस्य किल महासत्त्वतया तादृश्येव चेष्टाऽभूदिति श्रूयते। एकेति एकैवेति गम्यमानत्वादेवशब्दो न प्रयुक्तः। सह लक्ष्मणेन लक्ष्मणेन सह ॥ १४ ॥ ज० म०

कौशल्ययेति।—कौशल्यया राजकन्यया प्राक् पूर्वं सुखेन रामोऽसावि प्रसूयते स्म, सूङ्श्च्यास्तनि कर्मणि रूपम्। कौशल-शब्दादपत्यार्थे "वाह्लादि—" इत्यादिना ण्यः, तस्य यकारे-त्त्वाविवक्षया "ह्विन्नृद्वाद—"इति न ईप्, यदन्तत्वात् स्त्रियामत आप्। ततोऽनन्तरं भरतः कैकयीतोऽभूत्, केकयस्य स्त्रापत्य-मिति "वाह्लाद्यत—" इति ण्यस्तस्य यकारेत्वाविवक्षया न त्रिः,"यतोऽपाय—" इति जं पो च, "तस् त्ते." इति तस्। एका सुमित्रा लक्ष्मणेन सह उदारचेष्टं शत्रुघ्नं प्रासोष्ट, सूङ्श्च्यास्तनि रूपम्। "सह वारण—" इति सहयोगे तृतीया। "सह वारण—" इति सूत्रे सहयोगस्य प्रधानत्वाप्रधानत्वाविशेषोक्तेरच सहयोगस्य प्राधान्यं विवक्षितम्। 'पित्रा सहागतः पुत्रः, राज्ञा सह वनं याति' इत्यादिवत्, तेन लक्ष्मणो ज्येष्ठ इति बोध्यम्। ये तु क्रियादिगौणात् सहार्थे तृतीया इत्याहुस्तन्मतेऽपि लक्ष्मणस्य ज्येष्ठत्वम्। तथाहि, युगपदारब्धप्रसवक्रियायां

आर्चीत् द्विजातीन् परमार्थविन्दा-
नुदेजयान् भूतगणान् न्यषेधीत् ।
विद्वानुपानेष्ट च तान् स्वकाले
यतिर्वशिष्ठो यमिनां वरिष्ठः ॥ १५ ॥

लक्ष्मणस्य गौणत्वं, क्रियाया असमापकत्वादियं प्रसूतेति व्यवहाराभावात्, शत्रुघ्नस्य प्राधान्यं क्रियायाः समापकत्वात्, इयं प्रसूतेति व्यवहारात्, तेन लक्ष्मणे जाते प्रसवक्रिया न समाप्ता पश्चादव्यवहितकाले शत्रुघ्नस्य सम्भवात्, तेन लक्ष्मणस्य सहयोगो विवक्षितः। शत्रुघ्नस्य तु क्रियाव्याप्यत्वात् कर्मत्वम्। वस्तुतस्तु यस्य हि क्रियादिसम्बन्धः साक्षात् शब्देन प्रतिपाद्यते तत् प्रधानं, यस्य न प्रतीयते तत् गौणम्, एतच्च शक्तिस्वभावात् ; पित्रा सहागतः पुत्र इत्यत्र पितुर्गौणत्वं, साक्षात् क्रियासम्बन्धाभावात्। न च पितुः पुत्रसम्बन्धेन प्रधानाप्रधानता, तस्मात् क्रियागुणद्रव्यसम्बन्धे गौणात् सहार्थैर्युक्तात् तृतीया स्यादिति बोध्यम्। शत्रुं हन्तीति "हनचरगष्टक्" "हनगम—" इत्युङ्लोपे "हनो घ्नो घ्नो—" ॥ १४ ॥ भ० म०

आर्चीदिति।—तेषु जातेषु द्विजातीन् द्वे जाती येषामिति तान् ब्राह्मणक्षत्रियवैश्यान्, परमार्थविन्दान् विन्दन्तीति विन्दाः 'विद्लृ लाभे' इत्यस्मात "अनुपसर्गात्—" इत्यादिना शः मुचादित्वान्नुम्। परमार्थस्य विन्दान् लाभिन इति कर्मणि षष्ठी, तस्याः 'कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्' इति समासः। तानार्चीत् स्रगादिभिः पूजितवान्। 'अर्च पूजायाम्' इत्यस्मात् लुङि टिप् इट् सिचो लोपः। भूतगणान् राक्षसादिगणान्, उदेजयान् उत्कम्पान्। तास्मन्नेव सूत्रे उत्-

वेदोऽङ्गवांस्तैरखिलोऽध्यगायि
शस्त्राण्युपायंसत जित्वराणि।

पूर्वं एजिर्ण्यन्तो निर्दिष्टः, तस्मादुद्देजयन्तीति शः, तान्, न्यषेधीत् उत्सादितवान्। सिधेः "नेटि" इति हलन्तलक्षणाया प्रतिषेधः। विद्वान् पौरोहित्यकर्मणि कुशलः, उपानैष्ट च तान् रामादीन्, तेषामुपनयनादिक्रियां चकार। "सम्मानन—" इत्यादिना आचार्य्यकरणे तङ्। स्वकाले इति गर्भादेकादशे वर्षे, "जातस्य गर्भैकादशे" इत्यादिना वचनेन उपनयनकाल उक्तः। यमनियमेषु यतते इति यतिः। 'सर्वधातुभ्य इन्' इति इन्। "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्मषम्। इति पञ्च यमा येषां सन्तीति यमिनः स्मृताः॥" तेषां वरिष्ठः उत्तमः, "प्रियस्थिर—" इत्यादिना उरुशब्दस्य वरादेशो महत्पर्य्यायस्य। वशिष्ठः॥ १५॥ ज० म०

आर्चीदिति।—वशिष्ठः पुरोहितो द्विजान् परमार्थविन्दान् उत्कृष्टधनलाभिनः आर्चीत् परमधनेन पूजितवान् इति पर्य्यवस्यति। 'विद्लृ लाभे' इत्यस्मात् "गाहि-सांति—" इत्यादिना शः, मुचादित्वान्नुमागमः। परमार्थः आत्मसाक्षात्कारः। 'अर्चक पूजायाम्'। उद्देजयान् भयहेतुक्रूरभूतगणान् राक्षसादीन् न्यषेधीत् दूरीचकार। 'एजृ कम्पने' पूर्ववत् शप्रत्ययः। विद्वान् विधिज्ञः तान् रामादीन् स्वकाले गर्भैकादशे वर्षे क्षत्रियोपनयनयोग्ये उपानैष्ट "सम्मानोत्सञ्जनाचार्य्यकरणज्ञानभृतिविगणनव्ययेषु नियः" (?) "ज्ञानार्चोत्क्षेपोपनयन—" इत्यादिना सं। यतते यमनियमादिष्विति यतिः, औणादिक इः। यमिनां मध्ये वरिष्ठः उरुतमः, "गुणाद्दिष्ठेयसू" इति गुणवचनादिष्ठे कृते "वाढान्तिक—"इति उरुशब्दस्य वरादेशः। वसिष्ठ इति पूर्ववदिष्ठः, 'वस निवासे' इति दन्त्यमध्यं पारायणिकाः

ते भिन्नवृत्तीन्यपि मानसानि
समं जनानां गुणिनोऽध्यवात्सुः ॥ १६ ॥

समामनन्ति, प्रकृष्टो वशी वशिष्ठ इति तालव्यमध्यमपि प्राहुः ॥ १५ ॥ म० म०

वेद इति ।—"शिक्षा कल्पो व्याकरणं छन्दोविवृतिर्निरुक्तं ज्योतिषञ्च" इति षडङ्गानि शास्त्राणि तानि विद्यन्ते यस्य वेदस्येति सङ्गवान् । तैरुपनीतैः रामादिभिः, अखिलो निःशेषो वेदोऽध्यगायि अधीत इत्यर्थः । इङोऽधिपूर्वात् कर्मणि लुङि "विभाषा लुङ्लृङोः" इति गाङादेशः, चिण् युक् तलुक् । यद्वा— 'इक् स्मरणे' 'इन्वदिक इति वक्तव्यम्' इति गाङादेशः । अत एव तैः रामादिभिः पूर्ववेदिताः साङ्गा वेदा वशिष्ठमुखादधीता इत्यर्थः । शस्त्राणि धनुरादीनि, जित्वराणि जयशीलानि । "इण्नशजि—" इत्यादिना क्वरप् । तैरुपायंसत स्वीकृतानि । उपपूर्वो यमिः स्वीकरणे वर्तते तस्मात् कर्मणि लुङ् । "आत्मनेपदेषु—" इत्यादिना अटादेशः, "हनः सिच्"इति ज्ञापकादनुनासिकलोपाभावः । ततस्ते रामादयो गुणिनो मानसानि मनांसि, प्रज्ञादित्वात् स्वार्थे णः । भिन्नवृत्तीनि नानाविधप्रवृत्तीनि विषयेषु तानि मानसान्यपि जनानां समं साधारणं, क्रियाविशेषणम्, अध्यवात्सुः अध्युषितवन्तः । अधिपूर्वाद्वसेः सिचि "वदव्रज—"इत्यादिना वृद्धिः "सः स्यार्द्ध—"इति तत्वम्, "सिजभ्यस्त—"इति जुस् "उपान्व—"इत्यादिना अधिकरणस्य कर्मसंज्ञा ॥ १६ ॥ ज० म०

वेद इति ।—तैः रामादिभि समस्तः साङ्गो वेदोऽध्यगायि 'अधीङ्ल अध्ययने' "गाङ्लिटोर्ल्योर्वा" इति ग्यादेशः । "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषां निचयश्चेति

ततोऽभ्यगाद् गाधिसुतः क्षितीन्द्रं
रक्षोभिरभ्याहतकर्मवृत्तिः ।
रामं वरीतुं परिरक्षणार्थं
राजाऽऽर्जिहत्तं मधुपर्कपाणिः ॥ १७ ॥

वेदाङ्गानि वदन्ति षट् ॥" तैः शास्त्राणि उपायंसत स्वीकृतानीति उपपूर्वो यमिः स्वीकारे "मान्तोऽदनतः" इत्यत् । 'जि जये' जयन्तीति जित्वराणि "क्वरप् सृ-जि—" इति क्वरप्, "स्वस्य तन् पिति" इति तन्, 'शीलार्थे क्वरप्' इति परे । स्वमतेऽपि शीलार्थे वृत्तिरित्युक्तेः कचित्तृन्-णिन्-इष्णु-क्वरप्प्रभृतयः शीलार्थेऽपि स्युरिति बोध्यम् । ते रामादयः जनानां मानसानि विषयेषु भिन्नवृत्तीन्यपि समं साधारणं यथा स्यात्तथा अध्यवात्सुः । 'वसो निवासे' अनिमत्वात् "व्रजवद—"इति वृिः, "स तु स्वरे" इति सस्य तः, "अनुम् सिद्दः—" इति अन उम् । गुणिनो गुणवन्तः "नैकाजात्—"इति इन् । मन एव मानसं "विकार-सङ्घ—"इत्यादिना स्वार्थे णः, "णित्त्वे वृिः—" इति, "कर्म-क्रिया—" इत्यादिना डस्य ढत्वम् ॥ १६ ॥ भ० म०

तत इति ।—तेषु रामादिषु तथाभूतेषु,गाधिसुतो विश्वामित्रः, क्षितीन्द्रं राजानमभ्यगात् अभिगतवान् । इणो गादेशः, "गातिस्था—" इत्यादिना सिचो लुक् । रक्षोभिर्निशाचरैः अभ्याहता अभिभूता यागादेः कर्मणो वृत्तिः प्रवृत्तिर्यस्येति । रामं वरीतुं प्रार्थयितुम् । "वृतो वा" इति इटो दीर्घत्वम् । परिरक्षणार्थं विहन्यमानस्य कर्मण इत्यर्थः । तं गाधिसुतम् आर्जिहत् पूजितवान् । 'अर्ह पूजायाम्' इति स्वार्थिकणखन्त-चौरादिको गृह्यते, न भौवादिकः, तस्माद्धेतुमण्णिचाऽत्र न

ऐषोः पुनर्जन्मजयाय यत् त्वं
रूपादिबोधान्न्यवृतच्च यत् ते।

भवितव्यम्। "णिश्रि—"इत्यादिना चङ्, णिलोपः; "द्विर्वचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति द्विशब्दो द्विरुच्यते, रेफस्य न, "नन्द्राः—" इति प्रतिषेधः, चुत्वम् आट्, वृद्धिः। मधुपर्कपाणिः दधिघृतमधूनि एकीकृतानि मधुपर्क इत्युच्यते, तस्मिन् पात्रे स्थितः पाणिर्यस्येति विग्रहः। 'सप्तम्युपमाने—' इत्यादिना उत्तरपदलोपो समासः। पात्रादुद्धृत्य मधुपर्केण पूजितवानित्यर्थः॥ १७॥ ज० म०

तत इति।—अनन्तरं गाधिसुतो विश्वामित्रो रक्षोभिरभ्याहतकर्मवृत्तिः सन् अर्थात् कर्मण आत्मनो वा परिरक्षणार्थं रामं वरीतुं क्षितीन्द्रमभ्यगात्। इणो "गा लुङि"इति गादेशः, "भूस्थापिब—" इत्यादिना सेर्लुक्। राजा तम् आर्जिहत् 'अर्ह पूजायां' "चुर्भ्यो णिच्" इति णिः "णिश्रि—"इति चङ् "धुर्द्विष्ठरणि" इति हेर्द्वित्वं, "नाजन्तादेरादिद्विः" "ख्यादौ नवद्रोऽये" इति च निषेधान्नादिरेफयोर्द्वित्वं, "अभ्यासस्य—" इति हस्य जः, णेर्लोपः। मधुपर्कः पाणौ हस्ते यस्य स तथा, एतेन मधुपर्केणार्चनं शस्यते। वरीतुमिति "नेमिकाजात्—" इत्यादौ वृवर्जनात् "वृतोरस्य—" इति इम्, "वृतो वेमो घी—" इति घः॥ १७॥ भ० म०

ऐषोरिति।—मुक्तिस्तत्त्वावबोधः, तस्या ध्यानं प्रयोजनं, तत्र पुनर्जन्म भूयोजन्म तस्य जयाय यत् ध्यानं त्वमैषोः एषितवानसि। इषेर्लुङ् मध्यमैकवचने "इट ईटि" इति सिचो लोपे रूपम्। रूपादिबोधान्न्यवृतच्च यत् ते—रूपादिषु रूप-

तत्त्वान्यबुद्धाः प्रतनूनि येन
ध्यानं नृपस्तच्छिवमित्यवादीत् ॥ १८ ॥

रसशब्दस्पर्शगन्धेषु चक्षुरादिद्वारेण यो बोधः अध्यवसायलक्षणा बुद्धिः तस्माच्च यत् ध्यानं व्यावृत्तं निवृत्तम्। वृतेर्द्युतादित्वात् "द्युद्भ्यो लुङि" इति विप्, चेरङ्। तत्त्वानि पञ्चविंशतिः पुरुषप्रधानमहदहङ्कारादीनि। प्रतनूनि सूक्ष्माणि येन ध्यानेन अबुद्धाः ज्ञातवानसि। बुधेरनुदात्तेतो लुङ् थास् सिच्, "लिङ्सिचावात्मनेपदेषु" इति सिचः कित्त्वाद्गुणाभावः, सिज्लोप धत्वजश्त्वादि। तद्ध्यानं शिवं शोभनं कच्चित्? इति नृपः अवादीत् न तस्य व्याघातः? इति। "वदव्रज—" इत्यादिना वृद्धिः। 'ध्यै चिन्तायां' भावे ल्युट् ध्यानम् ॥ १८ ॥ ज० म०

ऐषोरिति।—तव तद्ध्यानं शिवं निर्विघ्नम्? तस्य कल्याणम्? इति वा इति नृपोऽवादीदुक्तवान्, "व्रजवद—" इति वृः। यद्ध्यानं पुनर्जन्मनो जयाय अभिभवाय त्वम् ऐषोः 'इषु इच्छायां' लुङ् सिः "इदार्धास्त—" इति ईम् "वसोरस्य—" इति इम् "झलस्वाञ्झलीमः—" इति सेर्लोपः, "घोटीथीषु—" इति अम्, "आदिगेचोः—" इति णु, "भूयोऽमजादेः" इति पुनरम्, "आदिगेचोः—" इति वृः। यच्च ध्यानं ते तव रूपादिबोधात् चक्षुरादिद्वारेण रूपरसादीनां यो बोधो ज्ञानं तस्मात् व्यावृतत् निवृत्तं, ध्यानं न रूपरसगन्धादिविषयकं स्यात्। वृतेर्द्युतादित्वात् "शासुलिद्द्युत्—" इति ङः, ङविधानम् अत एव पं। येन ध्यानेन प्रतनूनि दुर्बोधादतिसूक्ष्माणि तत्त्वानि त्वम् अबुद्धाः, बुधेस्थासि "झलस्वात्—" इति सिलोपे "ढभात्तथोः—" इति थस्य धः, "झप्झलोः—" इति धस्य दः ॥ १८ ॥ भ० म०

आख्यन्मुनिस्तस्य शिवं समाधे-
र्विघ्नन्ति रक्षांसि वने क्रतूंस्तु ।
तानि द्विषद्वीर्य्यनिराकरिष्णु-
स्तृणेढु रामः सह लक्ष्मणेन ॥ १९ ॥

आख्यदिति ।—पृष्टः मुनिस्तस्य समाधेर्ध्यानस्य शिवमनुपद्रवमाख्यत् कथितवान् । "चक्षिङः ख्याञ्" "अस्यति—" इत्यादिना चेरङ्, आतो लोपः । किन्त्वयं दोषः,—विघ्नन्ति रक्षांसि वने क्रतून् । "गमहन—" इत्यादिना उपधालोपः, "हो हन्तेः—" इति कुत्वम् । किं क्रियताम् ? इति चेदाह—तानि रक्षांसि, द्विषतां वीर्य्यं सामर्थ्यं, वीरैः स्वार्थिकष्यन्तात् "अचो यत्", तस्य निराकरिष्णुः निराकरणशीलः, "अलंकृञ्—" इत्यादिना इष्णुच् । तृणेढु छिनत्तु, तृहेर्विधौ लोट् । "एरुः" रुधादित्वात् श्नम् । "तृणह इम्" "हो ढः" ष्टुत्वं, "ढो ढे" इति ढलोपः । सह लक्ष्मणेन लक्ष्मणेन सह ॥ १९ ॥ ज० म०

आख्यदिति ।—ततो मुनिराख्यत् कथितवान्, "वक्तयस्यख्यातिप—" इति ङः "उस्येचि—" इत्यालोपः । तस्य समाधेः शिवं कल्याणं तस्य नृपस्य आख्यत् । 'सम्बन्धविवक्षया षष्ठी' इत्यन्ये । तुशब्दो वाक्यभेदे विषयद्योतकत्वे वा । रक्षांसि वने क्रतून् यस्मात् विघ्नन्ति "हनगम—" इत्युङ् लोपः, "हनो घ्नो घ्नः—" । तानि रक्षांसि रामो लक्ष्मणेन सह तृणेढु हन्तु, 'तृह धकि हिंसे' "विधिनिमन्त्रण—" इति प्रार्थनायां गो, तुपि रुधादित्वात् "दिवसुतुदरुध—" इति नम्, "तृह इन् पिद्धसे" इति इन्, "हो ढो भौ" इति हस्य ढः, "ढभात्तथोः—" इति तस्य धः, "ष्टुभिः—"इति धस्य ढः, "ढ्रोढ्रि—" इति ढलोपः ।

स शुश्रुवांस्तद्वचनं मुमोह
राजाऽसहिष्णुः सुतविप्रयोगम् ।
अहंयुनाऽथ क्षितिपः शुभंयु-
रूचे वचस्तापसकुञ्जरेण ॥ २० ॥

द्विषतां शत्रूणां वीर्यं निराकरोतीति "भ्राजभूसह—" इति इष्णुः, शीलार्थे वा इष्णुरित्यन्ये ॥ १९ ॥ भ० म०

स इति ।—स राजा तस्य मुनेस्तद्वचनं शुश्रुवान् श्रुतवान् सन् सुतविप्रयोगमसहिष्णुः असहनशीलः मुमोह मोहमुपगतः । शृणोतेः "भाषायां सदवसश्रुवः" इत्यनेन क्वसुः । सुतेन विप्रयोगमिति "कर्त्तृकरणे कृता बहुलम्" इति समासः, "न लोकाव्ययनिष्ठा—" इति षष्ठ्याः प्रतिषेधः । अथानन्तरम् अहंयुना अहङ्कारवता, "अहंशुभमोर्युस्"। तापसकुञ्जरेण "तपःसहस्राभ्यां विनीनी" इत्यनुवर्त्तमाने 'अण् च' इति मत्वर्थेऽण्, तापसश्च स कुञ्जरश्चेति "वृन्दारक—" इत्यादिना समासः, तेन क्षितिपो राजा शुभंयुः कल्याणवान्, पूर्ववत् युस्, वचो वक्ष्यमाणमूचे उक्तः । कर्मणि लिट्, सम्प्रसारणम् । अहंयुनाथः इति विसर्गान्तं पाठान्तरम् ; तत्र अहंयूनां क्षत्रियाणां नाथ इति योज्यम् ॥ २० ॥ ज० म०

स इति ।—तस्य मुनेर्वचनं शुश्रुवान् स राजा मुमोह,'मुह्लृञि वैचित्त्ये,' यतः सुतविप्रयोगं पुत्रस्य विरहम् असहिष्णुः । अथानन्तरं तापसकुञ्जरेण तपस्विश्रेष्ठेन क्षितिपो वक्ष्यमाणं वच ऊचे, "व्यथग्रह—" इति खेर्ञिः, "ग्रहस्तपाद्योः—" इति प्रकृतेर्ञिः, "न्यादिञ्यन्ता—"इति गौणकर्म उक्तम् । कीदृशेन ? स्वप्रार्थनाभङ्गसम्भावनया क्रोधादहङ्कारवता । कीदृशो राजा ?

मया त्वमाप्थाः शरणं भयेषु
वयं त्वयाऽप्याप्स्महि धर्मवृद्धै।
चात्रं द्विजत्वञ्च परस्परार्थं
शङ्कां कृथा मा प्रहिणु स्वसूनुम्॥ २१॥

शुभंयु शुभयुक्तः, "गाहणमेधा—" इति मव्ययाभ्याम् अहं-शुभंशब्दाभ्या युरस्त्यर्थे॥ २०॥ भ० म०

मयेति।—भयेषु त्वं शरणम् आप्थाः प्राप्तोऽसि मया। आपेः कर्मणि लुङ्, सिज्लोपः। त्वयाऽपि धर्मवृद्धै धर्मोपचयाय वयन्आप्स्महि प्राप्ताः। पूर्ववल्लुङादिः उत्तमबहुवचनं, सिचो लोपाभावः, मकारस्याभल्त्वात्। तदित्थं चात्रं द्विजत्वं च धर्मवृद्धै परस्परार्थम् अन्योऽन्यप्रयोजनं, 'कर्मव्यतीहारे सर्वनाम्नो द्वे भवतः समासवच्च बहुलम्' इति यदा न समासवत् तदा अयम्। तस्मात् मा शङ्कां कृथाः मा कार्षी,कथमस्मिन् सङ्कटे पुत्रं नियोजयामीति। "माङि लुङ्", अड्भावः, "उश्च" इति किस्वात् गुणाभावः, "ह्रस्वादङ्गात्" इति सिचो लोपः। प्रहिणु प्रेषय स्वं पुत्रम्। हिनोतेः प्रार्थनायां लोट्, श्नुः, अपित्वात् ङित्त्व, गुणाभावः, "उतश्च प्रत्ययात्—" इति हेर्लुक्, "हिनुमीना—" इति णत्वम्॥ २१॥ ज० म०

मयेति।—मया भयेषु शरणं रक्षिता त्वं आप्थाः प्राप्तः, त्याः आप्'आप्लृ नौ कि प्रापणे'"झलस्वात्—"इति सेर्लोपः। त्वयाऽपि धर्मवृद्धै वयम् आप्स्महि प्राप्ताः, अत्रापि त्याः महि, तस्मात् चात्रं क्षत्रियत्वं द्विजत्वं ब्राह्मणत्वञ्च अन्योऽन्यप्रयोजनकं, जातिव्यक्त्योरभेदोपचारात् व्यतीहारे "गतिहिंसा—"इति सूत्रेऽनन्योऽन्यार्थे इति ज्ञापकात् 'परस्परं व्यतीलुनन्ति' इत्युदाहरणेन च क्रियाव्यतीहारे परस्परार्थं भवतीति बोद्धव्यम्। त्वं शङ्कां

घानिष्यते तेन महान् विपक्षः
स्थायिष्यते येन रणे पुरस्तात् ।
मा मां महात्मन् ! परिभूरयोग्ये
न मद्विधो न्यस्यति भारमग्र्याम् ॥ २२ ॥

मा कृथाः "भवस्वात्—" इति सेर्लोपः, "घोटोथोष्वम्—" इत्यत्रामेति वाक्यात् मायोगे अमृनिषेधः । स्वसूनं प्रहिणु प्रस्थापय, "विधिनिमन्त्रण—" इति प्रार्थनायां गो, 'हिन वर्द्धने गतौ' स्वादित्वात् "दिवस्तुद—" इति नुः, "हेर्लोपो—" इति हिलोपः । "प्राग्वनो ण—" इति णत्वम् ॥ २१ ॥ भ० म०

अनागतमर्थं ज्ञानेन समीक्ष्याह, घानिष्यते इति ।— महान् विपक्षो रावणः, त्रैलोक्यविजयित्वात्, सोऽपि तेन रामेण घानिष्यते, किमुत इतरे राक्षसाः ? हन्तेः कर्मणि लृट् "स्यसिच्—"इत्यादिना चिण्वदिट् उपधावृद्धिः, "हो हन्तेः—" इति कुत्वम् । पुरस्तादग्रतो यत् रणं युद्धं भावि परशुरामेण सार्द्धमिति भावः, तत्र येन स्थायिष्यते तेन घानिष्यते इति योज्यम् । अत्र तिष्ठतेर्भावे लृट्,चिण्वदिड्वा "आतो युक्" । हे महात्मन् ! महासत्त्व ! मा मा परिभूः माऽवज्ञासीः । परिपूर्वो भवतिर्निराकरणे वर्त्तते । किमित्थं वदसि ? इति मद्विध इति—विधानं विधा प्रकारः "आतश्चोपसर्गे" इत्यङ् । विधा भेदः सादृश्यञ्च, इह सादृश्यं गृह्यते, मया विधा सादृश्यं यस्येति मद्विधः "प्रत्ययोत्तरपदयोश्च" इति मदादेशः,मद्विधो मत्सदृशोऽन्यो न भारमग्र्याम् "अग्राद्यत्" अयोग्ये असमर्थे न्यस्यति निक्षिपति, किमहम् ? येनानागतं समीक्षितमिति भावः । योगाय प्रभवति योग्यः, "योगाद्यत्" ॥ २२ ॥ ज० म०

शङ्काया अकारणे हेतुमाह, ग्लानिष्यते इति।—येन रामेण रणे पुरस्तादेव स्थायिष्यते न च पराङ्मुखीभविष्यते, तेन महान् विपक्षोऽपि ग्लानिष्यते। यद्वा—येन हेतुना रामेणैवमेवं करिष्यते ततः शङ्कां मा कृथा इति पूर्वेणान्वयः। "हनग्रहदृशचः—" इति मिण्, "ग्लेर्ग्रो ग्लो ञ्णिति च" इति ह्रस्य ग्लः, "हनस्तङ्—" इत्यत्र इणवर्जनात् न तङ्, मिनिणोः समानत्वात्। स्थायिष्यते इति पूर्ववत् मिण्, "यन् ञ्णित्कृदिण्यातः" इति यन्। पुरस्तादिति "दिक्शब्दाद्दिग्देशकाले—" इति सप्तम्याः तात् "पूर्वाधरावराः पुराधावाः—" इति पूर्वस्य पुरादेशः। हे महात्मन्! हे महामते! त्वं मां मा परिभूः न तिरस्कुरु, "मा टो वा" इति "भूस्थापिब—"इति सेर्लुक्, माङ्योगेऽण्निषेधः। "आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु" इति विश्वः। मद्विधो जनः अयोग्ये असमर्थे अग्र्यं श्रेष्ठं भारं न न्यस्यति नार्पयति। योगाय प्रभवति योग्यः "ढवे कात्—" इति ण्यः, अनित्यविवक्षया न त्रिः, तत्पुरुषो वा नञ्समास इति। नञ्-तत्पुरुषसंज्ञकसमासार्थं परे सूत्रं कुर्वन्ति, तन्मते न योग्योऽयोग्य इति विग्रहः। स्वमते योग्यादन्यः अयोग्यः, "अन्यारभ्य—" इत्यादिना नञोऽन्यार्थत्वात् पञ्चमीसमासः, "व्यं पूर्वम्" इति नञः प्राग्भावः, "नञोऽनौ वा—" इत्यः। एवमब्राह्मण इत्यत्र ब्राह्मणस्य न सदृशोऽब्राह्मणः "समार्थेन—" इत्यादिना नञः समार्थत्वात् षष्ठी, तेनात्र षष्ठीसमासः। "अनिमित्तान्यथापश्यन्" इत्यत्र एकार्थेन निन्दितानि च तानि निमित्तानि चेति कर्मधारयः, नञो निन्दितार्थे एकार्थत्वात्। अपापमित्यत्र पापस्याभावोऽपापमित्यव्ययीभावः, नञोऽव्ययत्वात्। एवमन्यत्र यथाऽन्वयं बोद्धव्यम्। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्

क्रुध्यन् कुलं धक्ष्यति विप्रवह्नि-
र्यास्यन् सुतस्तप्स्यति मां समन्युम्।
इत्थं नृपः पूर्वमवालुलोचे
ततोऽनुजज्ञे गमनं सुतस्य ॥ २३ ॥

प्रकीर्त्तिताः ॥" इत्यसमासे तु नञो वाचकत्वानङ्गीकारात् तद्योगे उन्नाध्याख्याप्राप्तविभक्तिर्न स्यात्। सर्वैव विधा प्रकारो यस्य तादृशः सर्वं जानातीत्यभिप्रायः ॥ २२ ॥ भ० म०

क्रुध्यन्निति।—यद्यहं भूतरक्षणेऽधिक्रतोऽस्य वचनं न कुर्यां तदा क्रुध्यन् सन्। दिवादित्वात् श्यन्। विप्रो वह्निरिव "उपमितम्—" इति समासः। धक्ष्यति कुलं भस्मसात् करिष्यति। दहेर्लृट् "दादेः—" इति घः,भष्भावः, चर्त्त्वं, गकारस्य ककारः, "इण्कोः" इति षत्वम्। यास्यन् गमिष्यन् सुतः मां समन्युं सशोकं तप्स्यति सन्तापयिष्यति। तपेर्लृट्। इत्थमेवंप्रकारं नृपः पूर्वमादौ अवालुलोचे अवलोचितवान्। अवाङ्पूर्वाल्लोचेर्लिट्। तत उत्तरकालं सुतस्य गमनम् अनुजज्ञे अनुज्ञातं, नृपेणेति विभक्तिविपरिणामेन तेनेति योज्यम्। कर्मणि लिट् 'ज्ञा अवबोधने' इति परस्मैपदित्वात्, न चानुपूर्वादस्मादात्मनेपदं विहितम् ॥ २३ ॥ ज० म०

क्रुध्यन्निति।—विप्र एव वह्निः क्रुध्यन् कुलं धक्ष्यति भस्मीकरिष्यति 'दह दाहे' भौदिस्वानेम, "दादेर्घः" इति हस्य घः, "झषभषोः—"इति घस्य कः, "क्विलात्—"इति षः। यास्यन् गमिष्यन् सुतः समन्युं सशोकं मां तप्स्यति। 'तपो दाहे'। इत्थमनेन प्रकारेण नृपः पूर्वमवालुलोचे आलोचितवान्। 'लोचृ दर्शने' "धुर्हिठ्रिङ्ग" इति इः, "झभषयदर्घ—"इति ओकारस्य उकारः। ततोऽनन्तरं सुतगमनम् अनुजज्ञे। अत्रानु-

आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं
प्रीतः प्रतस्थे मुनिराश्रमाय।
तं पृष्ठतः प्रष्ठमियाय नम्रो
हिंस्रेषु दीप्तास्त्रधरः कुमारः॥ २४॥

शब्दस्य उपसर्गप्रतिरूपकत्वेन "जिज्ञास्तपिब—"इति मम्। यद्वा—विभक्तिव्यत्ययेन नृपेण सुतस्य गमनम् अनुजज्ञे अनुज्ञातम्। कर्मणि प्रत्ययः। यद्वा—अनु पश्चात् ततस्तेन सुतस्य गमनं जज्ञे ज्ञातम्। "तस् तेः" इति तस्। यद्वा—जनीङो रूपम् अनुज्ञातार्थता "हनगम—"इत्यादिना उङ् लोपः॥२३॥ भ० म०

आशीर्भिरिति।—रामगमनस्यानुज्ञातत्वात् प्रीतो मुनिः क्षितीन्द्रं राजानम् आशीर्भिरभ्यर्च्य पूजयित्वा। आङः शासेः क्विप्युपसंख्यानात् उपधाया इत्वम्। प्रतस्थे पुनः * आश्रमाय आश्रमं पुनः प्रस्थितवान्। तिष्ठतेः "समव—" इत्यादिना लिटि तङ्। प्रष्ठम् अग्रयायिनं तं"प्रष्ठोऽग्रगामिनि"इति षत्वम्। पृष्ठतः पश्चात् इयाय कुमारः। इणो णलि वृद्धिरायादेशः, "द्विर्वचनेऽचि"इति स्थानिवद्भावात द्विर्वचनमिकारस्य, "अभ्यासस्यासवर्णे" इतीयङ्। नम्रोऽनुकूलः, हिंसनशीला: इषवः शराः हिंस्रेषवः। आप्तमविसंवादि यद्धनुः तत् हिंस्रेषु दीप्तमाप्तं धनुर्यस्य कुमारस्येति विग्रहः। अत्र "धनुषश्च" इति अनङ् न भवति, 'समासान्तविधिरनित्यः' इति। † "दीप्तास्त्रधनुः" इति पाठान्तरम्। दीप्तमस्त्रं दृष्टतया यस्य धनुषस्तत् दीप्तास्त्रं धनुर्यस्येति

* 'ततः' स्थाने 'मुनिः', 'मुनिः' स्थाने च 'पुनः' इति जयमङ्गलधृतपाठान्तरम्।

† व्याख्येयं "दीप्तास्त्रधनुः" इति टीकाकारसम्मतपाठान्तरस्येति बोद्धव्यम्। क्वचित् "दीप्ताप्तधनुः" इत्यपि पाठः।

प्रयास्यतः पुण्यवनाय जिष्णोः
रामस्य रोचिष्णुमुखस्य धृष्णुः।
वैमातुरः कृत्स्नजितास्त्रशस्त्रः
सध्र्यङ् रतः श्रेयसि लक्ष्मणोऽभूत् ॥२५॥

रः। कस्मिन् विषये? हिंस्रेषु, नान्येषु। नम्रादयो "नमि-कम्पि—" इत्यादिना रप्रत्ययान्ताः ॥ २४ ॥ ज० म०

आशीर्भिरिति।—मुनिः रामस्य गमनानुज्ञया प्रीतः सन् क्षितीन्द्रं पुनराशीर्भिरभ्यर्च्य आश्रमाय प्रतस्थे। "प्रतिज्ञानिर्णय-प्रकाशे संप्रव्यवाच्च स्थः" इति मं, "गत्यर्थमन्यद्धे—" इति चतुर्थी, आङः शासः क्विप् "शासुङित्त्र्स्—" इति वङ आकारस्य इत् "सषेसुम्—" इति रङि "व्यनच् तयौ—" इति र्घः। कुमारो रामस्तं प्रष्ठम् अग्रगं मुनिं पृष्ठतः पश्चात् इयाय। 'इनल् गतौ' णप् "धुर्डिष्ठद्धि" इति इः, "अणित्यन्तोञुङतौ." इति व्रिः, "खेर्योरियुवर्णे" इति इयः, 'प्रात् स्थोऽग्रगे' इति षत्वं, पृष्ठत इति स्यास्तस्। नम्रो विनयावनतः "हिंसदीप—" इति कर्त्तरि रः। हिंस्रेषु हिंसकेषु दीप्र दीप्यमानम् अस्त्रं धरतीति पचादित्वादन्, हिंस-दीपाभ्यां पूर्वेण कर्त्तरि रः। "हिस्रेषुदीप्रात्तधनुः" इति पाठे—हिंस्रेण इषुणा दीप्रमात्तं गृहीतं धनुर्येन इति विग्रहः ॥२४॥ भ० म०

प्रयास्यत इति।—प्रयास्यतो गमिष्यतो रामस्य लक्ष्मणः सध्र्यङ् अभूत् सहायोभूतः। 'सहार्थति' इति क्विन्, अनुषङ्ग-लोपः, "उगिदचाम्—" इति नुम, हलङ्यादिसंयोगान्तलोपौ "क्विन्प्रत्ययस्य—" इति कुत्वं, नकारस्य ङकारः, "सहस्य सध्रिः" इति सध्र्यादेशः। पुण्यवनाय पुण्यहेतुत्वात् पुण्यं वनम्। गत्यर्थात् कर्मणि चतुर्थी। जिष्णोः जयशीलस्य "ग्ला-जि-स्थश्च

इषुमति रघुसिंहे दन्दशूकान् जिघांसौ
धनुररिभिरसह्यं मुष्टिपीडं दधाने ।

—" इति ग्स्नुः । रोचिष्णु रोचनशीलं मुखं यस्य रामस्य, पितुराज्ञया तुष्टत्वात् । "अलंकृञ्—" इत्यादिना इष्णुच् । धृष्णुः शत्रुविध्वंसने प्रगल्भः "त्रसिगृधि—" इत्यादिना क्नुः । त्रैमातुरः तिसृणां मातृणामपत्यमिति तद्धितार्थविषये समासः, पश्चात् "मातुरुत्सङ्ख्या—" इत्यादिना अण् उत्वञ्च, "द्विगोर्लुगनपत्ये" इति लुक् न भवति । स हि पिण्डद्वयप्राशनात्ताभ्याञ्च जनितः । अस्त्रञ्च शस्त्रञ्चेति द्वन्द्वः । कृत्स्नं समग्रं जितमधिगतमस्त्रशस्त्रं येनेति विग्रहः । रतः श्रेयसि कल्याणे "प्रकृत्यैकाच्" "प्रशस्यस्य श्रः" लक्ष्मीरित्यौणादिकः लक्षेर्मुट् ईप्रत्ययश्च, सा यस्य विद्यते इति लक्ष्मणः । पामादिषु 'लक्ष्म्या अच्च' इति न-प्रत्ययः अत्त्वञ्च ॥ २५ ॥ ज० म०

प्रयास्यत इति ।—रामस्य श्रेयसि कल्याणे रतो लक्ष्मणः सध्र्यङ् सहचरोऽभूत् । सह अञ्चति गच्छतीति क्विप् "सहसन्तिरः सध्रिसमितिरि—" इति सहशब्दस्य सध्र्यादेशः । किम्भूतस्य ? पुण्यहेतुत्वात् पुण्यं पवित्रं वा यद्वनं तस्मै प्रयास्यतो गमिष्यतः "गत्यर्थमन्यढे—" इति कर्मणि चतुर्थी । जयतीति जिष्णुः "ष्णुक् भुजेः" इति ष्णुक् । यज्ञरक्षार्थे गमनानन्तरात् रोचिष्णु दीप्यमानं मुखमस्य "भ्राज—" इति इष्णुः । किम्भूतः ? धृष्णुः प्रगल्भः "क्षिपत्रसगृधधृषः क्नु" इति क्नुः । शीलार्थे ष्णुक्-इष्णु-क्नु-प्रत्यया इत्येके । तिसृणां मातृणामपत्यं त्रैमातुरः "संख्यासंभद्रान्मातुर्डुर् ष्णे" इति डुर् । कृत्स्नं समस्तं जितमस्त्रं शस्त्रञ्च येन स तथा, रतः रमधातोः क्तप्रत्यये "वनतनाद्यनिमाम्" इति मलोपः ॥ २५ ॥ भ० म०

व्रजति पुरतरुण्यो बद्धचित्राङ्गुलित्रे
कथमपि गुरुशोकान्मा रुदन् माङ्गलिक्यः ॥२६॥

इषुमतीति।—रघुसिंहे रामे रघुषु रघुवंशभवेषु सिंह इव शौर्य्यादियोगात्, व्रजति सति, इषुमति सनिषङ्गे, प्रशंसायां मतुप्। तदुक्तं कौमुद्यां—"भूम-निन्दा-प्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥" दन्दशूकान् हिंस्रान्। "दंशः" "लुपसद—" इत्यादिना यङ्, "जपजभ—" इत्यादिना अभ्यासस्य नुक्। तदन्तात् "यजजप—" इत्यादिना ऊकः। "अतो लोपः", "यस्य हलः।" जिघांसौ हन्तुमिच्छौ। "अज्झन—" इति दीर्घः, "अभ्यासाच्च" इति कुत्वं, "सनाशंस—" इति उः, "न लोक—" इति षष्ठीप्रतिषेधात् द्वितीयैव। धनुर्दधाने बिभ्राणे। अरिभिरसह्यं सोढुमशक्यम्। "शकिसहोश्च" इति यत्। मुष्टिपीडं मुष्टिना पीडयित्वा। मुष्टिशब्दे तृतीयान्ते उपपदे "सप्तम्यां चोपपीड—" इति णमुल्, तत्र चकारेण तृतीयानुकर्षणात्। बद्धं चित्रमङ्गुलित्रं येन, अङ्गुलिं त्रायते इति कः। पुरे तरुण्यः पुरतरुण्यः। 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्' इति ङीप्, यदि तद्वयोऽर्थवत्, नो चेद्गौरादिपाठात् ङीप्। रामो गत इति गुरुः शोको यासां ताः। * कथमपि मा रुदन् न रुदितवत्यः। रुदेः "इरितो वा" इति च्लेरङ्। यतो माङ्गलिक्यः मङ्गलप्रयोजनाः तदस्य "प्रयोजनम्" इति ठञ्। "टिड्ढाणञ्—" इत्यादिना ङीप्॥ २६ ॥ ज० म०

इषुमतीति।—रघुसिंहे रघुश्रेष्ठे रामे व्रजति सति तद्विच्छेदात् गुरुशोकात् पुरतरुण्यः कथमपि महाकष्टेन मा रुदन्। 'लविर् रुद रोदे', यतो माङ्गलिक्यः मङ्गलाय हिताः मङ्गलप्रयोजना वा। "विकारसङ्घ—" इति ष्णिकः, "द्विगुस्त्वाद—" इति

* 'गुरुशोकाः' इति पाठस्तेषं व्याख्या।

अथ जगदुरनीचैराशिषस्तस्य विप्रा-
स्तुमुलकलनिनादं तूर्य्यमाजघ्नुरन्ये ।

ईप्, नदादित्वात् तरुणशब्दाट्टीप् । 'वयस्यचरमे' इति क्रमदीश्वरादयः । रामे कीदृशे ? इषुमति मतुरस्त्यर्थे प्रशंसायाम् । दन्दशूकान् जिघांसौ 'दन्शी दंशने' इत्यस्मात् "जागृयङन्त—" इति ऊकः, "यङो लुग्वा" इति यङो लुक् "दन्शो नलोपो वा" इति नलोपः । दन्दशूकान् दंशनशीलानिति धातुचन्द्रादयः । "दन्दशूकश्च पुंलिङ्गो राक्षसे च सरीसृपे" इति मेदिनी । हन्तु-मिच्छुः जिघांसुः "सन्निच्छायाम्"इति सन्, अत्तुमिच्छति जिघत्-सतीत्युक्ते तुमर्थाभावात्तोः सन्निति बोध्यम्, अन्यथा अत्तुमिच्छतीत्युक्तेर्वैयर्थ्यं स्यात् । "सन्यङन्तो द्विः" इति द्विः, "खेराद्यचो लाप्यः—" इति खेर्लोपः, "झभखथ—" इति हस्य जः, "व्यस्येत् सनि" इति इः, "खेर्ही घोर्च्ण्याति च" इति हस्य घः, "घोऽज्-झनिङ्गमाम्" इति दीर्घः । आरभिरसह्यं धनुर्दधाने । किम्भूतं तत् ? मुष्टिपीड़ं मुष्टिना पीड़ा यस्य तत्तथा, एतेन मुष्टेर्दार्ढ्यं सूचितम् । अन्ये तु 'प्रमाणासत्त्योस्तृतीयासप्तमीभ्यां ख्णम् समासो वा' इत्याहुः, तन्मते मुष्टिना पीड़यित्वा इत्यर्थः । मुष्टिं पीड़यतीति पचादित्वादन्, मुष्टिपीड़मिति विशेषणेन धनुषोऽतिदार्ढ्यं सूचितमिति केचित् । केचित्तु मुष्टिं मोषणं पीड़यति खण्डयति इत्यनेन चौर्य्यापसारणमपि कविभिर्वर्ण्यते ; "श्रुतौ तस्करता स्थिता" इति कालिदास इत्याहुः । मुष्टिं हि सामर्थ्यात् शत्रूणां पीड़यतीति केचित् । धारणक्रिया-विशेषणमिति केचित् । विचित्रम् अङ्गुलित्रं बद्धं येन, अङ्गुलिं त्रायते रक्षतीति "ह्वनजनात्—" इति डः ॥ २६ ॥ भ०

अथेति ।—तस्य रामस्य व्रजतो विप्राः अनीचैः महता

अभिमतफलशंसो चारु पुस्फोर बाहु-
स्तरुषु चुकुवुरुच्चैः पक्षिणश्चानुकूलाः ॥ २७ ॥
इति भट्टिकाव्ये रामोत्पत्तिर्नाम प्रथमः सर्गः ॥१॥

ध्वनिना आशिषः इष्टवचनानि जगदुः गदितवन्तः। अन्ये वादकाः तूर्यं कांस्यतालपटहादिसमूहम् आजघ्नुः ताडितवन्तः। "आङो यमहनः" इति आत्मनेपदं न भवति, अकर्मकादित्यनुवर्त्तते। तुमुलो महान् कलो मधुरो निनादो ध्वनिर्यस्येति। अभिमतम् इष्टं फलं शंसितुं शीलं यस्य बाहोः स चारु पुस्फोर सुतरां स्फुरितवान्। अत्र दक्षिणो बाहुः सामर्थ्याद्गम्यते स्वाङ्गत्वात्। अनेन सीताप्राप्तिबीजमुपन्यस्तम्। स्फुरतेरभ्यासस्य "शर्पूर्वाः खयः" इति खयः शेषः, चत्वम्। पक्षिणश्च तरुषु स्थिताः अनुकूलाः सन्तः उच्चैः सुष्ठु चुकुवुः कूजितवन्तः। 'कु शब्दे' इत्यस्य लिटः, कित्त्वादुवङादेशः ॥ २७ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामसम्भवो नाम प्रथमः सर्गः ॥ १ ॥

अथेति।—अथ अनन्तरं विप्रास्तस्य रामस्य अनोचैरुच्चैराशिषो जगदुः उक्तवन्तः। अन्ये तूर्यं वाद्यम् आजघ्नुः वादितवन्तः। कीदृशं? तुमुलो महान् कलो मधुरास्फुटो निनादो ध्वनिर्यस्य। "तूर्योऽस्त्री वाद्यनिर्घोषे वादित्रं वादनञ्च तत्" इति कोषः। तस्य रामस्य बाहुश्चारु यथा स्यात्तथा पुस्फोर। किम्भूतः? अभिमतं फलं शंसति कथयतीत्यर्थात् दक्षिणबाहुस्पन्दनं कान्ताभिलाषसूचकमिति वृद्धाः। ग्रहादित्वात् णिन्, अन्ये तु शीलार्थे णिन् इत्याहुः। अनुकूलाः पक्षिण उच्चैश्चुकुवुः शब्दं चक्रुः 'कुङ् शब्दे', एतेन गमनमङ्गलमुक्तं, यदुक्तं—

## द्वितीयः सर्गः ।

वनस्पतीनां सरसां नदीनां
तेजस्विनां कान्तिभृतां दिशाञ्च ।
निर्याय तस्याः स पुरः समन्ता-
च्छ्रियं दधानां शरदं ददर्श ॥ १ ॥

"वामे मधुरवाक् पत्नी वृक्षः पल्लवितोऽग्रतः । अनुकूलो वहन् वायुः प्रयाणे शुभशंसिनः ॥" इति ॥ २७ ॥ भ० म०

इति श्रीभरतमल्लिककृतायां भट्टिटीकायां मुग्धबोधिन्यां
प्रकीर्णकाण्डे श्रीरामसम्भवो नाम प्रथमः सर्गः ॥१॥

---

इदानीं विजिगीषूणां कण्टकान् समुद्धर्त्तुं शरत्काले समुद्योग इति, तमेव वर्णयन्नाह, वनस्पतीनामिति ।—स रामः तस्याः पुरः अयोध्यायाः, निर्याय निर्गत्य, समन्तात् सर्वतः शरदं ददर्श दृष्टवान् । कालस्याप्रत्यक्षत्वात् कार्य्याणां दर्शनात्तद्दर्शन-मिति मन्यते । श्रियं दधानां धारयन्तीम् । केषां ? वनस्पतीनां, पारस्करादिदर्शनात् सुट् । अत्र लोकप्रतीत्या वृक्षा द्रष्टव्याः, न तु पारिभाषिकाः । तथा सरसां तड़ागानां नदीनां गङ्गा-दीनां तेजस्विनां चन्द्रतारादीनां कान्तिं नैर्मल्यं बिभ्रतां दिशाञ्च, तदा हि निर्मला दिशो भवन्ति इति भावः । वनस्पत्या-दीनां श्रियं दधानां शरदं ददर्श ॥ १ ॥ ज० म०

वनस्पतीनामिति ।—स रामः तस्याः पुरः अयोध्याया निर्गत्य समन्तात् सर्वतः शरदं ददर्श । यद्यपि कालस्य प्रत्य-

तरङ्गसङ्गाच्चपलैः पलाशै-
र्ज्वालाश्रियं सातिशयां दधन्ति ।
सधूमदीप्ताग्निरुचीनि रेजु-
स्ताम्रोत्पलान्याकुलषट्पदानि ॥ २ ॥

चता नास्ति, तथाऽपि तद्व्यञ्जकादर्शनात् तथा व्यपदेशः। किम्भूताम्? वनस्पत्यादीनां श्रियं दधानां वनस्पतयो वृक्षाः, परस्परं व्यतिलुनन्तीति ज्ञापकात् क्वचिदभिधानात् सकारागम इति बोध्यम्। "वानस्पत्येतरद्वौ स्यात् द्रुमाचेऽपि वनस्पतिः" इति रभसः। तेजो विद्यते येषां ते तेजस्विनश्चन्द्रादयः,"अस्मायामेधास्स्रजो विनिः—"इति विन्। एषां कान्तिभृतामिति सम्बन्धः, कान्तिं बिभ्रतीति क्विप् "ह्रस्वस्य तुक् पिति" इति तुक्। वनस्पतीनां पुष्पसम्बन्धात् सरसां विकसितपद्मादिमत्त्वात् नदीदिक्तेजस्विनाम् अन्यत् कान्तिभृत्त्वम् ॥ १ ॥ भ० म०

तां रामव्यापारं विना सामान्येन वर्णयन्नाह, तरङ्गेति।— तरङ्गसङ्गात् सलिलोर्मिसम्पर्काच्चपलैः चञ्चलैः पलाशैः पत्रैः ज्वालाश्रियं सातिशयां दधन्ति। सधूमदीप्ताग्निरुचीनि सधूमदीप्ताग्नेरिव रुचिर्येषां रक्तोत्पलानां तानि रेजुः दीप्यन्ते स्म। राजेर्लिटि "फणाञ्च सप्तानाम्" इति एत्वाभ्यासलोपौ। आकुलाः इतस्ततो यायिनः षट्पदाः येषु इति, चलितपत्राणामग्निशिखातुल्यत्वात् षट्पदानाञ्च धूमतुल्यत्वात् "सधूमदीप्ताग्निरुचीनि" इत्युक्तम् ॥ २ ॥ ज० म०

तरङ्गेति।—ताम्रोत्पलानि रक्तोत्पलानि रेजुः। 'राजृ दीप्तौ' फणादित्वात्"तॄफलभजत्रप—"इति सूत्र एत्वं खिलोपश्च। कीदृशानि? तरङ्गसङ्गाच्चपलैश्चञ्चलैः पलाशैः पत्रैः सातिशयां ज्वालाश्रियं दधन्ति धारयन्ति। धूमेन सह वर्त्तमानस्य

बिम्बागतैस्तीरवनैः समृद्धिं
निजां विलोक्यापहृतां पयोभिः।
कूलानि सामर्षतयेव तेनुः
सरोजलक्ष्मीं स्थलपद्महासैः ॥ ३ ॥

निशातुषारैर्नयनाम्बुकल्पैः
पत्रान्तपर्य्यागलदच्छबिन्दुः।

दीप्ताग्नेः कचिरिव रुचिर्येषाम्। आकुलाश्चञ्चलाः षट्पदा भ्रमरा यत्र, रक्तोत्पलदलानां वह्निज्वालासादृश्यं भ्रमरस्य धूमसादृश्यमिति भावः ॥ २ ॥ भ० म०

बिम्बेति।—बिम्बं प्रतिबिम्बं तेनागतैर्निपतितैरिति "तृतीया—" इति योगविभागात् समासः। तीरवनैः कुसुमितैरित्यर्थात्, तैः करणभूतैः पयोभिः कर्त्तृभिः समृद्धिं विभूतिं निजामात्मीयाम् अपहृतां विलोक्य कूलानि कर्त्तृभूतानि सामर्षतयेव सक्रोधतयेव सरोजलक्ष्मीं कमलशोभां पयःसम्बन्धिनीं तेनुः विस्तारितवन्ति। "अत एकहल्मध्ये—" इत्यादिना एत्वाभ्यासलोपौ। कूले सरोजासम्भव इति चेदाह—स्थलपद्महासैरिति स्थलकमलविकाशैरित्यर्थः ॥ ३ ॥ ज० म०

बिम्बेति।—प्रतिबिम्बेनागतैस्तीरवनैः करणभूतैः पयोभिः कर्त्तृभिरात्मीयां समृद्धिं सम्पत्तिम् अपहृतां विलोक्य नद्यादीनां कूलानि सामर्षतया सक्रोधतया स्थलपद्महासैः स्थलकमलविकाशैः पयःसम्बन्धिनीं सरोजलक्ष्मीं पद्मशोभां तेनुः। 'तनु दुञ् विस्तारे'। इव उत्प्रेक्षायाम् ॥ ३ ॥ भ० म०

निशेति।—निशायां तुषारैः हिमैः, नयनाम्बुकल्पैः अश्रुतुल्यैः, नयनानुकारिषु पत्रेषु स्थितत्वात्; तैर्हेतुभूतैः पत्रान्त-

उपारुरोदेव नदत्पतङ्गः
कुमुद्वतीं तीरतरुर्दिनादौ ॥ ४ ॥
वनानि तोयानि च नेत्रकल्पैः
पुष्पैः सरोजैश्च निलीनभृङ्गैः।

पर्य्यागलदच्छबिन्दुः पत्रान्तात् पर्य्यागलन्तः अच्छास्तुषारबिन्दवो यस्य तीरतरोः, स दिनादौ दिनारम्भे कुमुद्वतीमुपारुरोदेव आक्रन्दितवानिव भाति, शशिवियोगादीदृशी त्वं भूतासीति। रोदनक्रियया आक्रन्दनविशिष्टया कुमुद्वत्या ईप्सिततमत्वात् रुदिः सकर्मकः। तदाक्रन्दनं योजयन्नाह—नदत्पतङ्ग इति कूजत्पक्षीत्यर्थः। 'पतेरङ्गच् पक्षिणि' इत्यौणादिकः। कुमुद्वती "कुमुदनड—" इत्यादिना ड्मतुप्, "झयः" इति वत्वम्, उगित्त्वात् ङीप् ॥ ४ ॥ ज० म०

निशेति।—रात्रिसम्बन्धिहिमैर्नयनाम्बुतुल्यैर्हेतुभिः पर्य्यान्तपर्य्यागलदच्छबिन्दुः * सन् दिनादौ प्रातःकाले तीरस्थितो वृक्षः कुमुद्वतीम् उपारुरोद इव चन्द्रस्य विरहात् त्वमीदृशी जातेति क्रन्दितवानिव। पर्य्यान्तेभ्यः समन्तात् गलन्तः अच्छाः निर्मला हिमानां बिन्दवो यस्य, एतेन नयनाम्बुतुल्यत्वं सूचितम्। नदन्तः कूजन्तः पतङ्गाः पक्षिणो यत्र, एतेन पतङ्गशब्दैरेव रोदनं सूचितम्। आह्वानविशिष्टाया रोदनक्रियायाः सकर्मकत्वं केवलायास्त्वकर्मकत्वमिति वृद्धाः। वतो कुमुदस्यातो लोपो निपातनात् ॥ ४ ॥ भ० म०

वनानीति।—वनानि पुष्पैर्निलीनभृङ्गैः स्थितभ्रमरैः। "लीयतेः" "स्वादय ओदितः" इति निष्ठानत्वम्। नेत्रकल्पैः नेत्रतुल्यैः, तोयानि च सरोजैः निलीनभृङ्गैर्नेत्रकल्पैः, विस्मयवन्ति

* "पर्य्यान्तपर्य्याः" इति पाठान्तरस्येयं व्याख्या।

परस्परां विस्मयवन्ति लक्ष्मी-
मालोकयाञ्चक्रुरिवादरेण ॥ ५ ॥
प्रभातवाताहतिकम्पिताकृतिः
कुमुद्वतीरेणुपिशङ्गविग्रहम्।
निरास भृङ्गं कुपितेव पद्मिनी
न मानिनीसं * सहतेऽन्यसङ्गमम् ॥ ६ ॥

जातविस्मयानि। परस्परामन्योऽन्यस्य लक्ष्मीं शोभाम् आलोकयाञ्चक्रुरिव। आदरेण तात्पर्य्येण ॥ ५ ॥ ज० म०

वनानीति।—नेत्रसदृशैः पुष्पैर्वनानि सरोजैस्तोयानि च परस्पराम् अन्योऽन्यस्य लक्ष्मीं शोभाम् आदरेण आलोकयाञ्चक्रुरिव, शोभातिशयात् विस्मययुक्तानि। परस्परामिति क्रियाव्यतीहारे निपातः। "परस्परम्" इति पाठेऽपि तथा, क्रियाविशेषणं वा। नेत्रसादृश्ये हेतुगर्भविशेषणमाह—निलीना आश्लिष्टा भृङ्गा येषु तैः ॥ ५ ॥ भ० म०

प्रभातेति।—प्रभाते यो वातस्तस्याऽऽघातेन कम्पिता चालिता आकृतिः आकारो यस्याः पद्मिन्याः सा भृङ्गं निरास निरस्तवती। कुमुद्वतीरेणुना पिशङ्गः कपिशः विग्रहो यस्य भृङ्गस्य। कुपितेव यथा अन्यया स्त्रिया सम्भोषितं तदङ्गसंक्रान्तपरिमलकण्ठमाल्यमात्मदयितं काचित् कुपिता निरस्यति तद्वत्। सा किमिति निरस्यति—यतो मानिनी मानवती अन्यसङ्गमम् अन्यया सह सङ्गमं न संसहते आत्मसङ्गादन्यसङ्गमं न क्षमते ॥ ६ ॥ ज० म०

प्रभातेति।—पद्मिनी कुपितेव भृङ्गं निरास निरस्यति स्म।

* "न मानिनी संसहते" इति जयमङ्गलासम्मतः पाठः।

दत्तावधानं मधुलेहिगीतौ
प्रशान्तचेष्टं हरिणं जिघांसुः।
आकर्णयन्नुत्सुकहंसनादान्
लक्ष्ये समाधिं न दधे मृगावित् ॥ ७ ॥

कीदृशम्? कुमुदवत्या रेणुभिः पिशङ्गः कपिलो विग्रहः शरीरं यस्य तादृशम्। कीदृशी? प्रातःकालसम्बन्धिवाताभिघातेन कम्पिता आकृतिर्यस्याः सा, यथा कुपिता स्त्री अन्ययोषिता सह शयितरात्रिं पतिं तदङ्गलग्नचन्दनचिह्नेन निर्णीय क्रोधात् कम्पितवती निरस्यति तथेयमपीति भावः। यतः प्रशस्तमानवती स्त्री अन्ययोषित्सङ्गमम् ईशं पतिं न सहते। अन्याशब्दस्य "पुंवत् स्रे."इति पुंवत्। "संसहते" इति पाठे—अर्थात् पत्युरन्यस्त्रीसंसर्गं न सम्यक् सहते ॥ ६ ॥ भ॰ म॰

दत्तेति।—मधुलेहिगीताविति मधु लेढुं शीलमेषामिति णिनिः। "मधुलिहगीतौ"इति पाठान्तरम्। तत्र लिहन्तीति लिहाः पचाद्यच्, मधुनो लिहा इति षष्ठीसमासः, मधु लिहन्तीति वा कर्मण्यण्। दत्तावधानं दत्तमानसं हरिणं प्रशान्तचेष्टं जिघांसुः हन्तुमिच्छुरपि मृगावित् व्याधः। मृगान् विध्यतीति क्विप्। "ग्रहि-ज्या—"इत्यादिना सम्प्रसारणं, "नहिवृति—"इत्यादिना दीर्घः। लक्ष्ये वेध्ये समाधिं चित्तैकाग्रतां न दधे न धारितवान्। अित्त्वात्तङ्, लिटः कित्त्वे आतो लोपः। उत्सुकानां हंसानां नादान् आकर्णयन् शृण्वन्। तत्राभिरतचित्तकत्वात् वर्त्तमानकालो भूतेनाभिसम्बध्यमानः साधुः, "धातुसम्बन्धे प्रत्ययाः" इति च। आकर्णयन्निति 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति णिच् "लक्षणहेत्वोः"इति शतृप्रत्ययः ॥ ७ ॥ ज॰ म॰

गिरेर्नितम्बे मरुता विभिन्नं
तोयावशेषेण हिमाभमभ्रम्।
सरिन्मुखाभ्युच्चयमादधानं
शैलाधिपस्यानुचकार लक्ष्मीम्॥ ८॥

दत्तावधानमिति।—प्रशान्ता चेष्टा शरीरक्रिया यस्य तादृशमपि हरिणं जिघांसुर्हन्तुमिच्छुर्मृगावित् व्याधः उत्सुकानां हंसानां नादान् आकर्णयन् शृण्वन् लक्ष्ये शरव्ये हरिणे समाधिम् अवधानं न दधे न धृतवान्, हंसध्वनिश्रवणेन स्वश्रोत्रकण्ठितत्वात्। प्रशान्तचेष्टत्वे हेतुगर्भविशेषणमाह—मधुलेहिनां भ्रमराणां गीतौ दत्तमवधानं येन। मधुलेहीति ग्रहादित्वात् णिन्। मृगं विध्यतीति क्विप् "वीरुहो धङ् क्वौ" इति दीर्घनिर्देशात् क्वचित् क्विबन्ते पूर्वपदस्य दीर्घत्वं स्यादिति सूचितं, तेनात्र दीर्घत्वम्, आङ्पूर्वस्य विध्यते रूपं वा; 'व्यधौ ताड़े'इत्यस्य दन्त्यवत्वात् न जवत्वं,तेन"भ्रभान्तस्यादिजवाम्—" इत्यस्य न विषयः। 'कर्णक भिदि' इत्यस्याङ्पूर्वस्य श्रवणार्थकत्वम्। "वेध्यं लक्ष्यं शरव्यञ्च" "इष्टार्थोद्युक्त उत्सुकः" इति चामरः। शाकटायने तु उन्मनसि उत्सुकः साधितः॥७॥ भ० म०

गिरेरिति।—गिरेः कस्यचित् नितम्बे मध्यभागे स्थितमभ्रं कर्तृ, मरुता विभिन्नं विश्लेषीकृतं तोयावशेषेण पयसोऽवशिष्टतया हिमाभं हिमसदृशं सरिन्मुखानां गिरिनदीनिर्गमाणामभ्युच्चयं वृद्धिम् आदधानं कुर्वाणं शैलाधिपस्य हिमवतः लक्ष्मीं शोभामनुचकार अनुकृतवत्॥ ८॥ ज० म०

गिरेरिति।—पर्वतस्य नितम्बे शिखरे स्थितम् अभ्रं मेघः शैलाधिपस्य हिमालयस्य लक्ष्मीं शोभामनुचकार सदृशीः

लतानुपातं कुसुमान्यगृह्णात्
स नद्यवस्कन्दमुपास्पृशच्च।
कुतूहलाच्चारुशिलोपवेशं
काकुत्स्थ* ईषत् स्मयमान आस्त ॥११॥

वान् संसर्गवान्, अत एव सुगन्धः शोभनो गन्धोऽस्य इति "सुत्सुरभिपूतेर्गन्धादिः—" इति समवेतस्यैव गन्धस्य ग्रहणम्, अत्र तु परम्परया गन्धसम्बन्धान्न इप्रत्ययः। "सुगन्धिः" इति पाठे—"विकारसङ्घ—" इत्यादिना सुगन्धशब्दात् स्वार्थे णिः। क्वचित्तु समवायाध्याहारात् 'सुगन्धिः समीरणः' इति प्रयोगः इति पाणिनीयाः। 'अगन्धादेर्वा' इति कालापाः। अट्टतादिषु कर्मणि टो। अट्टतेत्यत्र "इगुङ्मंढी—" इति अनिम्-सेः किर्त्वान्न गुः, "आन्तोऽदनतः" इत्यन्तस्य अत्। आम्रायोत्यत्र "र-तमोर्यमिणो" इति इण्, ततो लोपः, "यन् जृणात्—" इति यन् ॥ १० ॥ भ० म०

लतेति।—"विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः" इति द्वितीयान्त उपपदे णमुल् विधीयते। तत्र व्याप्यमाने द्रव्यवचनस्य आसेव्यमाने च क्रियावचनस्य "नित्यवीप्सयोः" इति द्विर्वचनं विधीयते, अत्र तु समासेनैवोक्तत्वात् नोपयुज्यते इति स्थितम्। स काकुत्स्थो रामो गच्छन् लतां लताम् अनुपात्य कुसुमानि अगृह्णात् गृहीतवान्, लताम् अनुपात्यानुपात्य च, "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति समासः। ग्रहेर्लङ्, श्नाप्रत्ययस्य अपिदिति ङित्त्वे "ग्रहिज्या—" इत्यादिना सम्प्रसारणम्। नद्यवस्कन्दमिति नदीं नदीम् अवस्कन्द्य सर्वां नदीम्

* काकुत्स्थः इति भरतसम्मतः पाठः।

अवस्कन्द्य ढौकित्वा, नदीं वा अवस्कन्द्यावस्कन्द्य उपास्पृशत् आचमनं स्नातवान्। कुतूहलादिति सर्वत्र योज्यम्। चारुशिलोपवेशमिति चारुशिलाः चारुशिलाः उपविश्य, चारुशिलाः उपविश्योपविश्य वा आस्त आसितवान्। आसेर्लङि रूपम्। ईषत् स्मयमानः ईषद्धसन्॥ ११॥ ज० म०

लतेति।—स काकुत्स्थो रामः लतानुपातं कुसुमानि पुष्पाणि अगृह्णात् गृहीतवान्। लतानां पातस्य पश्चात् लतानुपातमित्यव्ययीभावः, लतानां पातमनुक्रम्येति लतानां पतनमनतिक्रम्येति वा, अव्ययानामनेकार्थत्वादनुशब्दोऽनतिक्रमेऽपि। नद्यवस्कन्दम् उपास्पृशत् स्नातवान्, नद्यामवस्कन्दोऽवगाहो यत्र, स्नानक्रियायां नदीयमिति बोधो यत्रेति वा। "उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि" इति विश्वः। कुतूहलादिति सर्वत्र योज्यम्। चारुशिलोपवेशमास्त चारुशिलाया-मुपवेशो वसनं यत्रासनक्रियायां, चारुशिलानां रत्नशिलाना-मुपगता वेशा यस्मादिति वा। एतेन रामस्थित्या रत्नशिलानां सौन्दर्यं सूचितम्। ईषत् स्मयमान ईषद्धसमानः। यद्यपि स्मिङ्धातोरीषद्धसनमेवार्थः, तथाऽपि ईषच्छब्देन अत्यन्तानुपलभ्यहास्यत्वेन गाम्भीर्यं सूचितम्। पातादयो घञन्ताः, लतानुपातमादयो णमन्ता इति पाणिनीयाः। तन्मते लतां लतामनुपात्य नदीं नदीमवस्कन्द्य गत्वा चारुशिलायाम् उपविश्येत्यर्थः। स्वमते णमम्, समूलघातमित्यत्र व्याख्यातः। अगृह्णादित्यादिषु घो। वृषरूपस्य इन्द्रस्य ककुदि स्थितत्वात् ककुत्स्थ इक्ष्वाकुः, पृषोदरादित्वाद्दकारलोप इति रायमुकुटादयः। स्वमते मनीषादित्वादिति। यथा देवीदासचक्रवर्त्ती— "कदाचिद्दानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्तामघु काकुत्स्थार्थिनः प्रार्थना क्रियतां सफलेति वानरपुङ्गवानादिशत्"

तिग्मांशुरश्मिच्छुरितान्यदूरात्
प्राञ्चि प्रभाते सलिलान्यपश्यत्।
गभस्तिधाराभिरिव द्रुतानि
तेजांसि भानोर्भुवि सम्भृतानि ॥ १२ ॥

इति मलचम्पूश्लेषः, तेन निस्तकारककुस्थशब्द इति बोध्यम्। "प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्" इत्यमरः। केचित्तु निपातनात् ककुदशब्दस्यातो लुकि ककुत्स्थशब्दस्तकारवान् इत्याहुः। तेसु निपातनात् ककुदशब्दस्यातो लुगिति हृथोक्तं, दान्त-ककुद्-शब्दस्य विद्यमानत्वात्, तथाहि "ककुदोऽस्त्री ककुच्च स्त्री वृषाङ्गे राजलक्ष्मणि" इति भूरिप्रयोगः। 'ककुद्यंसे' इत्यागमश्च। निस्तकार एव ककुस्थशब्द इति कश्चित्, तन्न,तकारवतोऽपि प्रयोगस्य दृश्यमानत्वात्। तथाच राघवपाण्डवीये—"सार्द्धं द्विजैः संव्रतधाम्नि जिष्णावुपेयुषि ख्यातककुत्स्थवंश्यः" इति। "इनजनात्—" इति तिष्ठतेर्डः, ततोऽपत्ये ण्णः ॥ ११ ॥ भ० म०

तिग्मांश्विति।—अदूरात् समीपे सलिलानि अपश्यत्। दृशेर्लङि "पाघ्रा—" इति पश्यादेशः। तिग्मांशोरादित्यस्य रश्मिभिः छुरितानि रञ्जितानि, प्राञ्चि पूर्वस्यां दिशि अवस्थितानि। प्रपूर्वादञ्चतेः "ऋत्विग्—" इत्यादिना क्विप्, अनुषङ्गलोपः, शिः, नपुंसकस्य नुम्। भानोरिव तेजांसि भुवि सम्भृतानि पिण्डीकृतानि। गभस्तिभिः रश्मिभिः धाराभिरिव द्रुतानि गलितानि। धारा प्रपात इति भिदादिपाठात् द्रष्टव्यम् ॥ १२ ॥ ज० म०

तिग्मांश्विति।—रामोऽदूरात् समीपे सलिलानि अपश्यत्,

दिग्व्यापिनीर्लोचनलोभनीया
मृजान्वयाः स्नेहमिव स्रवन्तीः।
ऋज्वायताः शस्यविशेषपङ्क्ती-
स्तुतोष पश्यन् वितृणान्तरालाः ॥१३॥

"घ्रा-ध्मा-पा—" इति दृशः पश्यादेशः। किम्भूतानि ? प्रभाते तिग्मांशोः सूर्य्यस्य रश्मिभिस्फुरितानि प्राचि पूर्वदिगव-स्थितानि। अत्रोत्प्रेक्ष्यते, भानोस्तेजांसि गभस्तीनां रश्मीनां धाराभिः द्रुतानि द्रवीभूतानि सन्ति भुवि सम्भृतानि। धाराभि-रिति भ्रुवः "तुलेच्छा—" इत्यादौ निपातः॥ १२ ॥ भ० म०

दिग्व्यापिनीरिति।—शस्यविशेषाणां शाल्यादीनां पङ्क्तीः पश्यन् तुतोष तुष्टवान्। दिग्व्यापिनीः सर्वदिग्व्यापनशीलाः। लोभयन्तीति लोभनीयाः, बहुलवचनात् कर्त्तर्य्यनीयः। लोच-नानां लोभनीया इति षष्ठीसमासः। मार्जनं मृजा शुद्धिः, "षिद्भिदादिभ्योऽङ्", तया अन्वयो अनुगमो यासां, शुद्धयनुगता इत्यर्थः। ततः स्नेहमिव स्रवन्तीः। ऋजवश्च ताः आयताश्च, वितृणान्तरालाः उत्पाटितानि तृणानि अन्तराले मध्यभागे यासां ताः॥ १३ ॥ ज० म०

दिग्व्यापिनीरिति।—स रामः शस्यविशेषाणां धान्यादीनां पङ्क्तीः पश्यंस्तुतोष। किम्भूताः ? दिशं व्याप्नुवन्तीति शस्यादि-त्वात् णिन्, शीलार्थे णिनिरित्यन्ये। लोचनानां लोभनीयाः आकाङ्क्षणीयाः "तव्यानीयरा—"इत्यनीयः। यद्वा—लोचनानां लोभनीयं लोभो दर्शनेच्छारूपो यत्र, पूर्ववत् भावेऽनीयः। लोच-नानि लोभयन्तीति कर्त्तर्य्यनीय इति केचित्, स्वमतेऽपि नियोक्तुमर्हतीति नियोग्यः प्रभुरिति वाक्यात् क्वचित् कर्त्त-र्य्यपि तव्यादयः स्युरिति सूचितम्। 'मृजू ल ष शुद्धौ' षित्वात्

वियोगदुःखानुभवानभिज्ञैः
काले नृपांशं विहितं ददद्भिः।
आहार्य्यशोभारहितैरमायै-
रैक्षिष्ट पुम्भिः प्रचितान् स गोष्ठान् ॥१४॥

"भीषिचिन्ति—" इत्यादिना ङः, स्त्रियामाप्। अनुयन्तीति अन्वयाः, पचादित्वादन्। मृजाया: अन्वयाः शुद्धानुगता इत्यर्थः, मृजाया: अन्वयः सम्बन्धो यत्र इति वा। स्नेहं स्निग्धताम् अनुरागं वा स्रवन्तीरिव, अतिस्निग्धत्वादुत्प्रेक्षा। ऋजवः सरलाश्च ता आयता दीर्घाश्चेति, उत्पाटिततृणत्वात् तृणरहितम् अन्तरालम् अभ्यन्तरं यासाम् ॥ १३ ॥ भ० म०

वियोगेति।—पुम्भिः गोपैः प्रचितान् व्याप्तान् गोष्ठान् गावस्तिष्ठन्ति येष्विति "सुपि स्थ." इति कः, "अम्बाम्ब—" इत्यादिना मूर्द्धन्यः, तान् स रामः ऐक्षिष्ट दृष्टवान्। अनुदात्तेत्त्वात् तङ्, इट्। वियोगदुःखस्य योऽनुभवः अनुभवनं तस्यानभिज्ञैः, तेषां पुत्रदारैः सहैव सर्वत्र गमनात्। एतावता कालेन एतावद्देयमिति विहितं कृतं, दधातेः क्तिः, नृपांशं करं ददद्भिः। आहार्य्या कटकादिभिः आहरणीया या शोभा दीप्तिः तया रहितैः, अमायैः ऋजुभिः। आहार्य्येति "ऋहलोर्ण्यत्", शोभयतीति शोभा पचाद्यच्। "ण्यासश्रन्थो युच्" इति युच् न भवति, तस्य स्त्रीलिङ्गे भावे अकर्त्तरि च कारके विधानात्। नन्द्यादिपाठात् ल्युर्न भवति, तस्य "वा सरूपोऽस्त्रियाम्" इति विकल्पितत्वात्। अथवा—शोभनं शोभा, स्त्रीलिङ्गे भावे घञ्। "कृत्यल्युटो बहुलम्" इति बहुलवचनादन्येऽपि कृतः प्रायमपि स्वाभिधेयं व्यभिचरन्ति ॥ १४ ॥ ज० म०

वियोगेति।—स रामो गोष्ठान् गोस्थानानि ऐक्षिष्ट दृष्टवान्।

स्त्रीभूषणं चेष्टितमप्रगल्भं
चारूण्यवक्राण्यपि वीक्षितानि।
ऋजूंश्च विश्वासकृतः स्वभावान्
गोपाङ्गनानां मुमुदे विलोक्य॥ १५॥

'दृशिङ् दर्शने'। किम्भूतान्? पुम्भिः पुरुषैः प्रचितान् व्याप्तान्। किम्भूतैः? प्रवासित्वात् वियोगेन स्त्रीपुत्रादिविच्छेदेन यो दुःखानुभवस्तत्रानभिज्ञैः, एतावति काले एतावद्देयमिति विहितं नृपस्यांशं करं ददद्भिः, आहार्य्या अलङ्कारादिभिराहरणीया कलिमा या शोभा तया हीनैः। आहार्य्येति "हस्ययुजो." इति घ्यण्, शुभेवजन्तस्य स्त्रीलिङ्गत्वं क्वचिदभिधानात्। नास्ति माया येषां, "गमावादेः—" इति स्वः। गोष्ठशब्दोऽपि पुंलिङ्गोऽस्तीति प्राहुः। गावस्तिष्ठन्ति यत्रेति आदन्तात् "इनजनात्—" इति डः, "क्रडोः—" इत्युक्तेः, 'गोभूमिद्विवि—' इत्यादिना रामानन्दसूत्रेण षत्वं, मनीषादित्वाद्वा। गोष्ठान् गोष्ठसहितान् प्रदेशानिति केचित्॥ १४॥ भ० म०

स्त्रीभूषणमिति।—गोपाङ्गनानां चेष्टितं गमनागमनादि, अप्रगल्भं लज्जावत्, तच्च स्त्रीभूषणं स्त्रीणामलङ्कारः, तथा वीक्षितानि विलोकितानि अवक्राण्यपि कटाक्षादिरहितान्यपि चारूणि शोभनानि, स्वभावान् स्वाभिप्रायान् ऋजून् अकुटिलान् विश्वासकृतो विश्वासस्य जनकान् विलोक्य मुमुदे हृष्टवान् स रामः। लिङ्गोऽपिस्त्वात् किस्त्वे गुणाभावः। कार्य्याणां दर्शनात् स्वभावानां दर्शनमित्युक्तम्॥ १५॥ ज० म०

स्त्रीभूषणमिति।—रामो गोपस्त्रीणामेतानि विलोक्य दृष्ट्वा मुमुदे, 'जि मुदङ् हर्षे'। तानि कानि? इत्याह—स्त्रीभूषणं

विवृत्तपार्श्वं रुचिराङ्गहारं
समुद्वहच्चारुनितम्बरम्यम्।
आमन्द्रमन्थध्वनिदत्ततालं
गोपाङ्गनानृत्यमनन्दयत्तम्॥ १६॥

नेत्रलाकचक्षुरादिकं, चेष्टितं गमनादिकं, स्त्रीणां भूषणमिव, यतोऽप्रगल्भं सलज्जं, तथा अशक्राणि कटाक्षादिरहितान्यपि चारूणि वीक्षितानि विलोकितानि, तथा विश्वासजनकान् ऋजून् चापटरहितान्, तत्कार्य्यविलोकनादेव तद्विलोकनव्यपदेशः। गोपाङ्गनानां विलासवत्त्वाभावेऽपि स्वभावसिद्धचरितान्येव हर्षजनकानि भवन्ति। तथाहि "विलासा नागरस्त्रीणां न तथा रमयन्ति नः। यथा स्वभावसिद्धानि वृत्तानि वनयोषिताम्॥" इति कौमुदी। अन्येनाप्युक्तं—"सर्वः प्रियः खलु भवेदनुरूपचेष्टः" इति॥ १५॥ भ० म०

विवृत्तेति।—गोपाङ्गनानां दधिमन्थनाय यत् स्थानं कृतं तत् नृत्यमिवेति गोपाङ्गनानृत्यं कर्त्तृ तं रामम् अनन्दयत् असन्तोषितवत्। नन्देर्ण्यन्तस्य लङि रूपम्। विवृत्ते तिर्य्यक् चलिते पार्श्वे यत्र नृत्ये। रुचिरः शोभनोऽङ्गहारोऽङ्गविक्षेपो यत्र। समुद्वहता तिर्य्यक् समुच्छ्रिता चारुनितम्बेन कटिभागेन रम्यं मनोहरम्। आमन्द्रः ईषद्गम्भीरो यो मन्थकृतो ध्वनिः तेन दत्तस्तालो यत्र॥ १६॥ ज० म०

दधिविलोडनावसरे गोपाङ्गनानां गात्रविक्षेपो नृत्यत्वेन वर्ण्यते, विवृत्तेति।—गोपस्त्रीणां नृत्यमिव नृत्यं कर्त्तृ तं राममनन्दयत् अतोषयत्। कीदृशम्? विवृत्तं तिर्य्यक् चलितं पार्श्वं यत्र, रुचिरो मनोहरोऽङ्गहारोऽङ्गविक्षेपो यत्र। समुद्वहता

विचित्रमुच्चैः प्लवमानमारात्
कुतूहलं वस्नु ततान तस्य।
मेघात्ययोपात्तवनोपशोभं
कदम्बकं वातमजं मृगाणाम्॥ १७॥

तिर्य्यगूर्द्धमधश्चलता चारुणा नितम्बेन रम्यम्, आमन्द्रेण ईषद्गम्भीरेण दधिमन्थनदण्डध्वनिना दत्तस्तालो यत्र। एतेन नृत्यसादृश्यं व्यज्यते॥ १६॥ भ० म०

विचित्रमिति।—मृगाणां कदम्बकं वृन्दं तस्य रामस्य कुतूहलं ततान विस्तृतवत्। विचित्रं कृष्णश्वेतत्वात्, उच्चैः प्लवमानम् ऊर्द्धं जिहानम्। आरात् समीपे वस्नु वसनशीलं, "वसि-गृधि—" इत्यादिना क्नुः। मेघात्ययेन मेघापगमेन उपात्तवनोपशोभम् उपात्तं गृहीतं वनम् उपशोभा च येनेति व्यधिकरणबहुव्रीहिः। वातमजति वातमजं वाताभिमुखं गच्छतीत्यर्थः, 'वात-शुनी-तिल-शर्द्धेषु—' इति खश्, "अरु-र्द्दिषत्—" इति मुम्॥ १७॥ ज० म०

विचित्रमिति।—मृगाणां कदम्बकं समूहस्तस्य रामस्य कुतूहलं ततान विस्तारितवत्। कीदृशम्? विचित्रं नानावर्णम्, उच्चैः प्लवमानं 'प्लुङ् सर्पणे', विचित्रं यथा स्यात्तथा उच्चैः प्लवमानं वा, आरात् समीपे, वस्यतीति वस्नु "क्षिप-वस—" इति कर्त्तरि क्नुः, शीलार्थे क्नुरित्यन्ये। मेघात्ययेन शरत्कालेन मेघापगमेन वा प्राप्तं वनम् उपशोभा च येन, प्राप्तेन वनेन उपशोभते इति वा, वातमजं वायोरनुगामि अभिमुखधावि वा। "तृभृवृदृजि—" इत्यादिना खः, परस्मैपदवत्॥ १७॥ भ० म०

सितारविन्दप्रचयेषु लीनाः
संसक्तफेनेषु च सैकतेषु।
कुन्दावदाताः कलहंसमालाः
प्रतीयिरे श्रोत्रसुखैर्निनादैः॥ १८॥
न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तत् यदलीनषट्पदम्।

सितेति।—सितारविन्दानां प्रचयेषु समूहेषु "एरच्" "सङ्घे चानौत्तराधर्य्ये" इति घञ् कौ न भवतः, प्राणिषु सङ्घशब्दस्य रूढ़त्वात्। लीनाः कलहंसमालाः, तथा संसक्तफेनेषु च सैकतेषु पुलिनेषु लीनाः, सिकताः येषु विद्यन्ते इति "देशे लुबिलचौ च" इति चकारादण्। कुन्दावदाताः कुन्दमिवावदाताः शुक्लाः "उपमानानि—" इत्यादिना समासः। प्रतीयिरे ज्ञाताः, तेन रामेणेति विभक्तिविपरिणामेन सम्बन्धः। कर्मणि लिट्। "इणो यण्", "द्विर्वचनेऽचि" इति स्थानिवद्भावात् द्विर्वचनम्। श्रोत्रसुखैर्मधुरैर्निनादैः करणभूतैः। "नौ गद—" इत्यादिना घञ्॥ १८॥ ज० म०

सितारविन्देति।—अर्थात् रामेण कर्त्रा श्रवणसुखकारिभिर्निनादैः कलहंसमालाः प्रतीयिरे ज्ञाताः। कर्मणि ठौ, "यिणोऽच्यणौ" इति इणो यादेशः। निनादश्रुतिव्यतिरेकेणाप्रत्यये हेतुगर्भविशेषणमाह—शुक्लपद्मसमूहेषु फेनयुक्तेषु सैकतेषु च लीनाः शुभ्राः कुन्दपुष्पवत् शुक्लाः, सिकताशब्दात् "विकारसङ्घ—" इत्यादिना इदमर्थे विकारार्थे अस्त्यर्थे वा णः। सैकतं वालुकामयस्थानमुच्यते। "कादम्बे कलहंसः स्याद्राजहंसे च दृश्यते"॥ १८॥ भ० म०

न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः ॥ १९ ॥
तं यायजूकाः सह भिक्षुमुख्यै-
स्तपःकृशाः शान्त्युदकुम्भहस्ताः।
यायावराः पुष्पफलेन चान्ये
प्रानर्चुरर्च्यां जगदर्चनीयम् ॥ २० ॥

शरद्वर्णनमुपसंहरन्नाह, न तज्जलमिति।—किं बहुना उक्तेन, सर्व्वथा न तज्जलं यत् सुचारुपङ्कजं न बभूव। पङ्कजमपि यदलीनषट्पदं तदपि न। असौ षट्पदोऽपि तथाविधो नाभूत् यः कलं मधुरं न जुगुञ्ज न गुञ्जितवान्। 'गुजि अव्यक्ते शब्दे' "इदितो नुम् धातोः" इति नुमि लिटि रूपम्। गुञ्जितमपि तत् नैवासीत् यन्मनो न जहार न हृतवत् रामस्य लोकस्य वा ॥ १९ ॥ ज० म०

शरद्वर्णनमुपसंहरन्नाह, न तदिति।—शरदि तज्जलं नास्ति यत्र न सुचारूणि पङ्कजानि सन्ति, तत् पङ्कजमपि नास्ति यत्र षट्पदा न लीनाः अनाश्लिष्टाः, 'लीङ् श्लेषे' "स्वाद्यो —" इति निष्ठा नत्वम्। असौ षट्पदोऽपि नास्ति यः कलं मधुरास्फुटं न जुगुञ्ज 'गुजि कूजने'। तद्गुञ्जितमपि नास्ति यन्मनो न जहार ॥ १९ ॥ भ० म०

तमिति।—यायजूकाः भृशार्थं यजनशीलाः, "यज-जप-दशां यङः" इत्यूकः, "अतो लोपः", "यस्य हलः"। ते तपोवनस्थितास्तं राममागच्छन्तं प्रानर्चुः सुष्ठु पूजितवन्तः। अर्चेर्लिटि द्विर्वचनम्, "अत आदेः" इति दीर्घत्वं, "तस्मान्नुड् द्विहलः" इति नुट्। सह भिक्षुमुख्यैः, भिक्षणशीलाः भिक्षवः परि-

व्राजकाः । "सनाशंसभिक्ष उः", तेषां ये प्रधानाः तैः सह, तपःकृशाः तपसा दुर्बलाः । शान्त्यर्थमुदकं तेन पूर्णः कुम्भः "एकहलादौ—"इत्यादिना उदकस्य उदभावः, स हस्ते येषामिति बहुव्रीहिः, परनिपातश्चात्र वाहिताग्न्यादिदर्शनात्, प्रहरणार्थेभ्यश्च इति वा । शान्त्युदकुम्भस्तु अहितनिवारणसाधर्म्यात् उपचारेण प्रहरणम् । ते गिरःसूदकदानेन प्रानर्चुः । अन्ये मुनयो यायावराः एकत्रानियतनिलयाः । यातेर्यङन्तात् "यश्च यङः" इति वरच्, अतो लोपादि । पुष्पफलेन प्रानर्चुः । पुष्पाणि च फलानि चेति "जातिरप्राणिनाम्" इति एकवद्भावः । अर्च्याः अर्चनार्हाः । "अर्हे कृत्यः—", अर्चनीयमित्यत्रापि । जगतां जगद्भिश्च अर्चनीयं "कृत्यानां कर्त्तरि वा" इति पक्षे षष्ठी, न तु "कर्त्तृकर्मणोः कृति" इति षष्ठी ॥ २० ॥ ज० म०

तमिति ।—यायजूकाः पुनः पुनरतिशयेन वा यज्ञशीलाः भिक्षूणां परिव्राजकानां मुख्यैः सह जगतामर्चनीयं तं रामं प्रानर्चुः 'अर्च पूजायां' "स्यान्तादाट्टादाद्यश्नोः—" इति खेरान् । "जागृयङन्त—" इति ऊकः, "सन् भिक्षा—" इति भिक्षेरुप्रत्ययः । कीदृशाः ? तपोभिः कृशाः, शान्त्यर्थं यदुदकं तस्य कुम्भो हस्ते येषाम्, एतेन शान्तिजलेनार्चा प्रतीयते । उदकुम्भ इत्यत्र समासे 'उदकस्यासंयुक्तहलादौ पूर्य्ये' इति उदादेशो विकल्पेनेति परे, स्वमते उदशब्दोऽप्यस्ति । अन्ये मुनयः पुष्पफलेन प्रानर्चुः । यायावराः सन्तो नानावनभ्रमणशीलाः, यातेर्यङन्तात् "यायाय-भास-कस—"इति वरः, यङ्लुक्, 'गत्यर्थादक्रे यङ्' इति केचित् । यातिरत्र ज्ञानार्थः, 'सर्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्च' इति न्यायादत्यर्थज्ञानशीला इत्यर्थः । अर्च्याः स्तुत्यर्हाः 'ऋच् श स्तुत्यां' "ते ल्याः शक्यार्हप्रैषा—" इति घ्यण्, सेमत्वात् न "च-जोः क-गौ—" इति कत्वम् ॥ २० ॥ भ० म०

विद्यामथैनं विजयां जयाञ्च
रक्षोगणं क्षिप्नुमविक्षतात्मा।
अध्यापिपद्गाधिसुतो यथावत्
निघातयिष्यन् युधि यातुधानान्॥ २१॥

विद्यामिति।—तपोवनं प्राप्तः गाधिसुतः एनं रामं, "द्वितीया-टौ—" इत्येनादेशः। विद्यां नाम्ना विजयां जयाञ्च यथावत् यथाविधि अध्यापिपत् पाठितवान् "णौ च संश्चङोः" इति गाङभावपक्षे रूपम्, अधिपूर्वादिङो हेतुमण्णिचि "क्रीङ्जीनां णौ" इत्यात्वं, पुगादिविधयः। रक्षोगणं क्षिप्नुं प्रेरयितारं, "त्रसि-गृधि—"इत्यादिना क्नुः, "न लोका—"इति षष्ठीप्रतिषेधात् द्वितीयैव। अविक्षतात्मा रागादिभिरनभिभूतचित्तवृत्तिः। तस्य हि विद्या अमोघा भवति। युधि सङ्ग्रामे यातुधानान् रक्षांसि निघातयिष्यन् मारयिष्यन्। हन्तेर्हेतुमण्णिच्, घत्वं, लृट्, लृटः सदादेशः॥ २१॥ ज० म०

विद्यामिति।—अथानन्तरं युधि सङ्ग्रामे यातुधानान् राक्षसान् रामद्वारा निघातयिष्यन् गाधिसुतो विश्वामित्रः एनं रामं नाम्ना विजयां जयाञ्च विद्यां यथावत् यथाविधि अध्यापिपत् पाठयामास। किम्भूताम्? रक्षोगणं क्षिप्नुं 'क्षिप श ओ नुदि' "क्षिप-त्रस—"इति कर्त्तरि क्नुः, शीलार्थे क्नुरित्यन्ये। "ढचे क्त्व—"इति सूत्रे उदन्तक्नुप्रत्ययवर्ज्जनात् न ढे षी। कीदृशः? अविक्षतो बाधादिभिरनुपहत आत्मा यस्य। एन-मिति इदं-समानार्थकस्य एनशब्दस्य रूपं, "द्वितौसे—"इति सूत्रस्यानूक्तिविषयत्वात्। "जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः" इति भारविः। अध्यापिपदिति 'अधीङ्'

आयोधने स्थायुकमस्त्रजात-
ममोघमभ्यर्णमहाहवाय ।
ददौ वधाय क्षणदाचराणां
तस्मै मुनिः श्रेयसि जागरूकः ॥ २२ ॥

---

अध्यायने' "जि: प्रेरणे" इति जि:, "क्रोजीङाऽजा—"इति आ, "क्रोलो—"इति पण्, "जिश्री—"इत्यङ्, "नाजन्तादेः—"इति निषेधात् "धुड्डिष्ठाडि" इति णेत्यस्यैव द्वित्वं, ञेर्लोपः। निघातयिष्यन्निति पूर्ववत् जि:, "हनस्तङ्—"इति तङ्, "खेर्हो घो—" इति घ: ॥ २१ ॥ भ० म०

आयोधने इति।—स मुनि: तस्मै रामायास्त्रजातम् अस्त्रसमूहं ददौ दत्तवान्। ददातेर्लिट् णल्, "आत औ णल:"। आयुध्यन्ते अस्मिन्निति आयोधनं सङ्ग्रामः, अधिकरणे ल्युट्, तत्र स्थायुकं स्थितिकरणशीलं, जयावहत्वात्। "लष-पत—" इत्यादिना उकञ्, आतो युक्। अत एवामोघम् अवन्ध्यम्, अव्यर्थामोघत्वात्। अभ्यर्णो निकटो महाहवो यस्य तस्मै, अभिपूर्वादर्देर्निष्ठायाम् "अभेश्चाविदूर्ये" इतीट्प्रतिषेधः, "रदाभ्याम्—" इति नत्वम् अभ्यर्णः। आहव इति आहूयन्ते अस्मिन् युद्धायेति ह्वयतेराङ्पूर्वात् "आङि युद्धे" इति सम्प्रसारणम्, अप्प्रत्ययः, गुणावादेशौ। वधाय क्षणदाचराणामिति क्षणदा रात्रिः, तत्र चरन्तीति "चरेष्टः"। तत्र हि महाहवे रामो राक्षसान् हनिष्यतीति "हनश्च वधः" इति वधादेशः। कृत्प्रयोगे क्षणदाचराणामिति कर्मणि षष्ठी। श्रेयसि जागरूकः तत्कल्याणे सावधानः; जागर्त्तेरूकः ॥ २२ ॥ ज० म०

तं विप्रदर्शं कृतघातयत्ना
यान्तं वने रात्रिचरी डुढौके।
जिघांसुवेदं धृतभासुरास्त्र-
स्तां ताड़काख्यां निजघान रामः ॥ २३ ॥

आयोधने इति।—मुनिः क्षणदाचराणां राक्षसानां वधाय हिंसार्थं तस्मै रामाय अस्त्रजातं ददौ। कीदृशम्? आयोधने युद्धे स्थायुकं स्थितिशीलं, जयावहत्वात्; "लषपतपद-स्थाभूवृषहनकमगमशृभ्य उकञ्" इति उकञ्, "यन् उणित्—" इति यत्न। अमोघम् अव्यर्थम्। तस्मै कीदृशाय? अभ्यर्णः समीपवर्त्ती महानाहवः युद्धं यस्य, अभ्यर्णेति अभिपूर्वस्यार्दतेः क्तान्तरूपं, "क्षुब्धस्वान्त—" इति निपातः। आह्वयन्ते योद्धारोऽस्मिन् इति आहवः, अभि-धानाज्जिः। कीदृशः? रामस्य साधूनां वा श्रेयसि कल्याणे जागरूकः सावधानः, "जागृ-यङन्त—" इति जागरूकः। आयुध्यन्तेऽस्मिन् योद्धार इत्यायोधनम् आधारेऽनट्। हन्तेः "कृभावेऽसो" इत्यलि कृते "हनो वधश्चोल्यलि—" इति वधादेशः। "समूहार्थस्य जातस्य चवर्गादित्वमीरितम्" इति विश्वः॥ २२॥ भ॰ म॰

तमिति।—विद्याम् अस्त्रजातञ्च आदाय यज्ञकर्माणि विघ्नोपशमनार्थं वने यान्तं रामं रात्रिचरी राक्षसी ताड़काख्या ताड़काभिधाना डुढौके ढौकते स्म। ढौकतेरात्मनेपदिनो लिटि रूपम्। ताञ्च रामो निजघान निहतवान्। विप्रदर्शं कृत-घातयत्ना विप्रान् ब्राह्मणान् दृष्ट्वा कृतमारणाभियोगा रात्रिचरी। रामोऽपि जिघांसुवेदं धृतभासुरास्त्रः जिघांसुं विदित्वा धृतं भासुरं भासनशीलम् अस्त्रं येनेति बहुव्रीहिः। विप्रदर्शं जिघांसु-

अथाऽऽलुलोके हुतधूमकेतु-
शिखाञ्जनस्निग्धसमृद्धशाखम्।
तपोवनं प्राध्ययनाभिभूत-
समुच्चरच्चारुपतत्त्रिशिञ्जम् ॥ २४ ॥

वेदमिति "कर्मणि दृशि-विदोः साकल्ये" इति णमुल् ॥ २३ ॥ ज० म०

तमिति।—वने यान्तं गच्छन्तं तं रामं रात्रिचरी डुढौके प्राप्तवती,: 'ढौकृङ् गत्यां' "अभ्यस्य—"इति खेरौकारस्य ह्रस्व उकारः। रात्रौ चरतीति पचादित्वादच्, ततो नदादित्वाद्ङीप्। कीदृशी? विप्रदर्शं विप्रं दृष्ट्वा दृष्ट्वा घाते यत्ना यस्याः, घात इति हन्तेर्घञन्तस्य रूपं, यत्न इति "यजयाच—"इति यतेर्नङ्। जिघांसुं विदित्वा धृतं भासुरं दीप्तमस्त्रं येन स रामः तां ताड़का-नाम्नीं रात्रिचरीं निजघान। 'भासृङ् दीप्तौ' "भिद-भास-भञ्ज —"इति घुरः। विप्रदर्शं जिघांसुवेदमिति"णमुल् वाऽऽभीक्ष्ण्ये—" इत्यत्र योगविभागाण्णमुल्। यद्वा—विप्राणां दर्शो दर्शनं यस्मात्, रामस्य विशेषणम्; एतेन रक्षोभिया पलायमानानां विप्राणां पूर्वं दर्शनं नासीत्, रामागते तु विप्रदर्शनमिति व्यज्यते। जिघांसुं वेत्तीति "ढात् षण्", पचादित्वादच् वा, इदमपि रामस्य विशेषणम् ॥ २३ ॥ भ० म०

अथेति।—अथासौ रामो राक्षसीं हत्वा तपोवनम् आलुलोके दृष्टवान्। कथम्भूतम्? हुतधूमकेतुशिखाऽञ्जनस्निग्धसमृद्ध-शाखं हुतश्चासौ धूमकेतुरग्निश्च हुतधूमकेतुः, तस्य शिखा-ऽञ्जनेन स्निग्धाः समृद्धाश्च फलादिना शाखा यस्य तपो-वनस्य। प्राध्ययनेन वेदपाठेन अभिभूता तिरस्कृता समुच्चरन्ती चार्वी शोभना पतत्त्रिणां पक्षिणां शिञ्जा ध्वनिर्यत्र। 'शिजि

क्षुद्रान्न जक्षुर्हरिणान् मृगेन्द्रा
विशश्वसे पक्षिगणैः समन्तात् ।
नंनम्यमानाः फलदित्सयेव
चकाशिरे तत्र लता विलोलाः ॥ २५ ॥

अव्यक्ते शब्दे' शिञ्जनं शिञ्जा "गुरोश्च हलः" इत्यकारप्रत्ययः । पतन्तं त्रायन्ते इति पतत्त्राणि पक्षाः, "आतोऽनुपसर्गे कः", तानि येषां सन्तीति पतत्त्रिणः । "पतङ्गशिञ्जम्" इति पाठान्तरम् ॥ २४ ॥ ज० म०

अथेति ।—ताड़कावधानन्तरं रामस्तपोवनम् आलुलोके, 'लोकृ दर्शने' । कीदृशम् ? हुतस्य धूमकेतोरग्नेः शिखाया यदञ्जनं तेन स्निग्धा समृद्धा फलपुष्पवती शाखा यत्र तथा । "धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः" इति विश्वः । प्राध्ययनेन प्रकृष्टाध्ययनेन आभृता समुच्चरन्ती उद्गच्छन्ती चारूणां पतत्त्रिणां पक्षिणां शिञ्जा अस्फुटशब्दो यत्र 'शिजि ल अव्यक्तस्फुटध्वनौ' "सेमन्तात् सरोः" इति ङः स्त्रीत्वञ्च, अमरकोषे तु "भूषणानान्तु शिञ्जितम्" इत्युपलक्षणम् ॥ २४ ॥ भ० म०

क्षुद्रानिति ।—तत्र तस्मिंस्तपोवने तपोधनानां मित्रभावात् क्षुद्रानितरानपि हरिणान् मृगेन्द्राः सिंहाः न जक्षुः न बाधितवन्तः । क्षुद्यन्ते इति क्षुद्राः, 'स्फायितञ्चि—' इत्यादिना औणादिको रक्, "लिट्यन्यतरस्याम्" इति अदेर्घस्लृ "गमहन —" इत्युपधालोपः, "खरि च" इति चर्त्वं, "शासि-वसि—" इत्यादिना षत्वम् । पक्षिगणैः समन्तात् सर्वत्र विरुद्धैरपि काकोलूकादिभिः परस्परं विशश्वसे विश्वस्तम् । भावे लिट् । लताश्च विलोलाश्चपलाश्चकाशिरे शोभन्ते स्म । फलदित्सयेव

अपूपुजन् विष्टरपाद्यमाल्यै-
रातिथ्यनिष्ठा वनवासिमुख्याः ।
प्रत्यग्रहीष्टां मधुपर्कमिश्रं
तावासनादि क्षितिपालपुत्रौ ॥ २६ ॥

मुनिभ्यः फलं दातुमिच्छयेव नंनम्यमानाः अत्यर्थं नमन्त्यः, दातुमिच्छा दित्सा, ददातेः सन् "सनि मी-मा—" इत्यादिना इस्, "अत्र लोपोऽभ्यासस्य" इति अभ्यासलोपश्च । "सः सि—" इत्यादिना सकारस्य तकारः, "अः प्रत्ययात्" इत्यकारप्रत्ययः । फलानां दित्सेति कर्मणि षष्ठीं विधाय कृद्योगे समासः । नंनम्यमाना इति नमेर्यङि "नुगतोऽनुनासिक—" इति नुक्, यङन्ताच्छानच्, आने मुक् ॥ २५ ॥ ज०म०

क्षुद्रानिति ।—तत्र तपोवने मृगेन्द्राः सिंहाः क्षुद्रान् हरिणान् न जक्षुः 'अद् लो भक्षे' "घ्नां वा" इति घसादेशः "गमहन—" इत्युपधालोपः, "झलां जश्—" इति घस्य कः, "शासिवसि—" इति षः । पक्षिगणैः समन्तात् सर्वतो विश्रब्धैः तपःप्रभावात् नित्यविरोधस्याप्यभावात्, भावे क्तः । विलोलाश्चञ्चला लताश्चकाशिरे 'काशृङ् द्युतौ', फलानि दित्सयेव नंनम्यमाना अतिशयेन नताः, नमेर्यङन्तस्य "जपजभ—" इति नुक् । फलभारनतानामुत्प्रेक्षेयम् । दातुमिच्छा दित्सा, ददातेः सनि "मिमीमादा—" इतीस् अभ्यासलोपश्च, "स स्यार्धधातुके" इति तः, "अः प्रत्ययात्", स्त्रियामाप् ॥ २५ ॥ भ०म०

अपूपुजन्निति ।—वनवासिमुख्याः महर्षयो विष्टरादिभिः अपूपुजन् पूजितवन्तः, तौ क्षितिपालपुत्रावित्यर्थात्, द्वितीयान्तेन योज्यम् । वनवासीति "शयवास—" इत्यादिना विकल्पेन

सप्तम्या अलुक्, पूजेः स्वार्थिकण्यन्तस्य णौ चङि ह्रस्वः, "दीर्घो लघोः" इति अभ्यासस्य दीर्घः। विष्टरमासनं, "वृक्षासनयोर्विष्टरः" इति निपातनात्। पाद्यं पादार्थमुदकं "पादार्घाभ्याञ्च" इति यत्, तदर्थत्वात् पद्भावाभावः। माल्यानि कुसुमानि, मालायां साधूनि, "तत्र साधुः" इति यत्। आतिथ्यनिष्णाः अतिथ्यर्थम् आतिथ्यम्, "अतिथेर्ञ्यः", तत्र निष्णाः कुशलाः, "नि-नदीभ्यां स्नातेः कौशले" इति षत्वम्। तौ च क्षितिपालपुत्रौ रामलक्ष्मणौ तदासनादि प्रत्यग्रहीष्टां प्रतिगृहीतवन्तौ, प्रतिपूर्वात् ग्रहेर्लुङ् तमस्ताम्, "ग्रहोऽलिटि—" इति दीर्घः, षत्व-ष्टुत्वे। मधुपर्कमिश्रं मधुपर्केण सहेत्यर्थः॥ २६॥ ज०म०

अपूपुजन्निति।—वनवासिनां मुनीनां मुख्या विष्टरपाद्यमाल्यैरपूपुजन् अर्थात् रामलक्ष्मणौ,'पूजतक् पूजे' टौ,"ञिश्री—" इत्यङ्, "ञङ्ङः खौ—" इति खः,"खेः सन्वत्—"इत्यादिना खेर्घः। विष्टरम् आसनं,'वेस्तो नाम्नि'इति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वम्। 'वृक्षासनयोर्विष्टरः' इति क्रमदीश्वरः। "आसने कुशमुष्टौ च विष्टरः" इति विश्वः। "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्यमरः। पादार्थं जलं पाद्यं, "विकारसङ्घ—" इति ष्णः। "पाद्यं पादाय वारिणि"इत्यमरः। मालैव माल्यं, स्वार्थे ष्णः, मालायां साधूनि माल्यानि कुसुमानि वा। किम्भूताः? आतिथ्यनिष्णाः अतिथ्यर्थम आतिथ्यम्, अतिथिशब्दात् तादर्थ्ये ष्णः, 'स्वार्थे ष्णः' इति केचित्। "क्रमादातिथ्यातिथेये ह्यतिथ्यर्थेऽत्र साधुनि" इत्यमरः; वस्तुतस्तु आतिथ्यशब्देन अतिथिसेवनमुच्यते, तत्र निष्णाः कुशलाः। 'नदीस्नाति-निस्नात्योदीच्ये' इति रामानन्दसूत्रेण मनीषादित्वाद्वा षत्वम्। 'निनदीभ्यां स्नः कौशले' इति षत्वविधायकं क्रमदीश्वरसूत्रम्। क्षितिपालस्य पुत्रौ रामलक्ष्मणौ मधुपर्केण

दैत्याभिभूतस्य युवामवोढं
मग्नस्य दोर्भिर्भुवनस्य भारम्।
हवींषि सम्प्रत्यपि रक्षतं तौ
तपोधनैरित्थमभाषिषाताम्॥ २७॥

सहितम् आसनादि प्रत्यग्रहीष्टाम्। "ग्रां सिः", "ग्रहेरिमो घोऽव्याम्" इति घः, "क्विलात्—" इति षः, "ष्टुभिः—" इति तस्य टः॥ २६॥ भ० म०

दैत्येति।—दितेरपत्यानि दैत्याः, "दित्यदित्या—"इत्यादिना ण्य, तैरभिभूतस्य मग्नस्य ग्ररणस्य भुवनस्य भारमिति-कर्त्तव्यतालक्षणं दोर्भिर्भुजैः युवामवोढम् ऊढवन्तौ, नर-नारायणौ युवामित्युक्तौ, त्वञ्च त्वञ्चेति एकशेषः। अवोढमिति वहेर्लुङ् थसस्तम्, हलन्तलक्षणा वृद्धिः, सिज्लोपः, "सहिवहोः—" इत्योत्वं, ढत्व-ष्टुत्व-ढलोपा, दोरिति 'दमेर्डोस्' इत्यौणा-दिको डोस्। हवींषि होतव्यानि सम्प्रत्यपि रक्षतम् 'अर्चि-शुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' इत्यौणादिक इसिः। राक्षसैः उपहन्यमानानि रक्षतम्। प्रार्थनायां लोट्, शप्, थसस्तम्। इत्थमिति "इदमस्थमुः", अनेनोक्तप्रकारेण तपोधनैः तप एव धनं येषामिति अभाषिषाताम् अभिहितौ। भाषतेः कर्मणि लुङ्, सिजिटौ॥ २७॥ ज० म०

दैत्येति।—तप एव धनं येषां तैस्तपोधनैस्तपस्विभिस्तौ राम-लक्ष्मणौ इत्थमभाषिषातां 'भाषङ वाचि' इति कर्मणि टौ। इदं प्रकारम् इत्थं,निपातनात्। किं तत? इत्याह,युवां भुवनस्य भारं परिरक्षणं दोर्भिर्भुजैः अवोढं, वहेर्ल्लुङस्तं, "झलस्लात्—" इति सलुक्, "हो ढो भो" इति हस्य ढ, "ढभात्तथोः—" इति तस्य धः, "ष्टुभिः—" इत्यादिना धस्य ढः, "सहवहोऽदो ढि" इत्योत्वं,

तान् प्रत्यवादीदथ राघवोऽपि
यथेप्सितं प्रस्तुत कर्म धर्म्यम्।
तपोमरुद्भिर्भवतां शराग्निः
सन्धुक्ष्यतां नोऽरिसमिन्धनेषु॥ २८॥

'ढो ढ्रे—" इति ढस्य लोपः। कीदृशस्य? दैत्याभिभूतस्य अत एव मग्नस्य नष्टप्रायस्य,दितेरपत्यानि दैत्याः,"बाह्वाद्यत—" इत्यादिना गर्गादित्वात् ण्यः। मस्जेरोदित्वात् "सूत्वाद्यो—" इत्यादिना क्तस्य नः,"स्वादेः सो लोपः—"इत्यनेन सलोपः, "चजोः कगौ—" इति सूत्रे "अनिम् यज्ञाङ्गयज" इति कृते ये अनिम्धातवस्तेषां चजाः कगौ स्यातामिति सर्वं सङ्गतं भवति; तथाऽपि यतः "असेम" इति कृतं, चजोर्घिति क्ते च परे चजोः कगौ भवत इति सूचनार्थम्; तेन मग्न-रुग्ण-भुग्नादयः सिध्यन्ति, "व्रस्चेः कङ् च"इति कङ्विधानं "ग्रच्छ्राज—" इति षङ्विधाननिरासार्थं, तेन सृजस्तु सृष्ट इत्यत्र षङ् विशेषविधित्वादिति देवीदासचक्रवर्त्तिना व्याख्यातम्। तेनैव सूत्रेण जस्य गः, मनीषादित्वाद्वा। सम्प्रत्यपि हवींषि होतव्यानि राक्षसेभ्यः रक्षतं, "विधिनिमन्त्रणा—" इति प्रार्थनायां णौ, 'हुलि होमेऽदने' "त्रासुस्—" इति इस्॥ २७॥ भ० म०

तानिति।—अथ एतस्मिन् प्रस्तावे राघवोऽपि रघुसुतः तान् मुनीन् प्रत्यवादीत् "वद-व्रज—" इत्यादिना वृद्धिः। यथेप्सितं यथाऽभिमतम्, आप्नोतेः "आप्ज्ञप्यधामीत्" इतीत्वम् अभ्यासलोपश्च, सनन्तात् कर्मणि निष्ठा। धर्मादनपेतं धर्म्यं यागादि कर्म, प्रस्तुत प्रारभध्वम्; प्रपूर्वस्तौतिः प्रारम्भे वर्त्तते, तस्मान्निमन्त्रणे नियोगकरणे लोट्, थस्य तः, शपो लुक्। तपांसि मरुत इव तैः तपोमरुद्भिः भवतां तपोमरुद्भिः नः अस्माकं,

प्रतुष्टुवुः कर्म ततः प्रक्लृप्तै-
स्ते यज्ञियैर्द्रव्यगणैर्यथावत्।

"बहुवचनस्य वस्नसौ" इति नसादेशः। शरान्निः शरोऽग्निरिव सन्धुच्यतां दीप्यताम्। 'धुच धिच सन्दीपन-क्लेदन-जीवनेषु' तस्मात् कर्मणि लोट्। अरिसमिन्धनेषु अरिकाष्ठेषु, समिध्यते एभिरिति समिन्धनानि करणे ल्युट्। अरयः समिन्धनानीव ॥२८॥ ज०म०

तानिति।—अथ तद्वचनानन्तरं रघोरपत्यं रामोऽपि तान् प्रत्यवादीत् प्रत्युक्तवान्। वदेर्लुङि सौ "व्रजवद—" इति वृद्धिः। यूयं यथेप्सितं धर्मादनपेतं कर्म प्रस्तुत आरभध्वम्; "विधि-निमन्त्रण—" इति विधौ लोट्, "लुगङ्गरोऽपः" इत्यदादित्वात् शपो लुक्। 'आप्लृ नौ कि व्यापने' सनि "आपज्ञप्यामीत्" इति इ-खिलोपौ। भवतां तपोवायुभिर्नोऽस्माकं शराग्निः अरि-समिन्धनेषु शत्रुकाष्ठेषु सन्धुच्यतां 'धुचङ् सन्दीपने' "समर्थना-शिषोर्लोट्" इति आशिषि कर्मणि लोट्। तपांसि मरुत इव, शरोऽग्निरिव, अरयः समिन्धनानीव इति 'व्याघ्रादिभिस्तद्गुण-स्तुत्यस्य' इति समास इति क्रमदीश्वरादयः, स्वमते इवादेर्द्योतक-त्वात् एकार्थताऽस्त्येव। 'अविशेषणस्यास्मदो बहुत्वमेकत्व-द्वित्वयोर्विकल्पेन' इति पाणिन्यादयः। स्वमते "बहुत्वान्येक-द्वि-बहुष्वेकशः" इति सूत्रे एक-द्वि-बहुत्वविवक्षया साक्षात्सम्बन्धेन परम्परासम्बन्धेन वेति व्याख्यानादस्मद्गुणानां बहुत्वेनैव बहुजनसाध्यकार्यकारित्वात् द्वित्वे बहुत्वम् ॥२८॥ भ०म०

प्रतुष्टुवुरिति।—ततो रामवचनादनन्तरं तपोधनाः कर्म यागक्रिया प्रतुष्टुवुः यथावत् यथाविधि प्रारब्धवन्तः। यज्ञियैः यज्ञकर्माहैंः द्रव्यगणैः प्रक्लृप्तैः मिलितैः। "क्लृपो रो लः"।

दक्षिण्यदिष्टं कृतमार्त्विजीनै-
स्तद्यातुधानैश्चिचिते प्रसर्पत् ॥ २८ ॥
आपिङ्गरूक्षोर्ध्वशिरस्यबालैः
शिरालजङ्घैर्गिरिकूटदघ्नैः ।

दक्षिणामर्हन्तीति दक्षिण्याः महामुनयः, "कडङ्करदक्षिणाच्छ च" इति चकारात् यत्, तैरिष्टमुक्तं कृतमार्त्विजीनैः ऋत्विक्कर्मार्हैरनुष्ठितम्। ऋत्विजश्च ब्रह्मादयः षोड़श पठिताः। तच्च कर्म प्रसर्पत् वृद्धिं गच्छत् यातुधानैः राक्षसैः चिचिते ज्ञातं, 'चितौ संज्ञाने' इत्यस्मात् कर्मणि लिट्। यज्ञियैरार्त्विजीनैरिति "यज्ञर्त्विग्भ्यां घ-खञौ" इति "तत्कर्मार्हति" इति ॥२८॥ ज० म०

प्रतुष्टुवुरिति।—ततो रामवचनानन्तरं ते मुनयो द्रव्यगणैः स्रुवादिभिः करणभूतैर्यथाविधि यागकर्म प्रतुष्टुवुः प्रारब्धवन्तः। किम्भूतैः? प्रक्लृप्तैर्विरचितैः, "कृपः कृपोऽक्लपादौ" इति क्लृपादेशः। यज्ञियैः यजेः "स्वपरक्षयत—" इति नङ् ञिनिषेधश्च; यज्ञाय साधवो यज्ञिया "ढघे कात्—" इति इयः। तत् कर्म यातुधानैः राक्षसैश्चिचिते ज्ञातं, 'चितौ संज्ञाने' कर्मणि ठौ। कीदृशम्? दक्षिण्यदिष्टं दक्षिणामर्हन्ति "ढघे कात्—"इति ण्यः, तस्यानित्यत्वविवक्षया न ञिः। दक्षिण्या ब्रह्मत्वेनारोपिता मुनयः तैरिष्टम्, आर्त्विजीनैः ऋत्विक्कर्मार्हैः कृतम्। ऋतौ यजतीति क्विप्, 'ग्रहस्वप—' इति जिः। ऋत्विजः कर्म आर्त्विजं, कर्मार्थे "विकारसङ्घ—" इत्यादिना णः; तदर्हतीति "ढघे कात्—" इत्यादिना णीनः, ऋत्विक्शब्दात् स्वार्थे णीनो वा। प्रसर्पत् वृद्धिं गच्छत् ॥ २८ ॥ भ० म०

आपिङ्गेति।—ततः कर्मप्रवर्त्तनात् अनन्तरं, क्षपाटैः

ततः क्षपाटैः पृथुपिङ्गलाक्षैः
खं प्रावृषेण्यैरिव चानशेऽब्दैः ॥ ३० ॥

निशाचरैः, अटन्तीत्यटाः पचाद्यच्, क्षपायामटा इति सप्तमीति योगविभागात् समासः। खम् आकाशमानशे व्याप्तम्। अश्नातेः कर्मणि लिट् "अश्नोतेश्च" इति नुट्। शिरसि जाताः शिरस्याः, "शरीरावयवाद्यत्"। आपिङ्गा आ समन्तात् पिङ्गा विद्युदिव, रूक्षाः सूक्ष्माः (शुष्काः ?) ऊर्द्ध्वशिरस्या बाला येषां तैः। अन्योऽपि शिरस्यो भवति इति बालग्रहणम्, अमङ्गलबाला इत्यर्थः। शिराः सन्ति यासामिति "प्राणिस्थादातो लजन्यतरस्याम्" इति लच्; शिराला जङ्घा येषां तैः, गिरिकूटदघ्नैर्गिरिकूटप्रमाणैः, "प्रमाणे द्वयसच्—" इति दघ्नच्। पृथूनि विस्तीर्णानि पिङ्गलानि चाक्षीणि येषां तैः। "बहुव्रीहौ सक्थ्यक्ष्णोः—" इति षच्। प्रावृषेण्यैरिवेति "प्रावृष एण्यः", अब्दैर्मेघैः, कृष्णसाधर्म्यात्, अपो ददतीति अब्दाः। चकारः पादपूरणार्थः ॥३०॥ ज० म०

आपिङ्गेति।—ततस्तज्ज्ञानानन्तरं क्षपाटैः राक्षसैः खम् आकाशम् आनशे व्याप्तम्। 'अशूङ् न व्याप्तिसंहत्योः' कर्मणि ठौ "अश्नोतेश्च—"इति खेरान्। कीदृशैः ? आपिङ्गा ईषत्कपिला रूक्षा ऊर्द्ध्वाः शिरस्याः शिरसि भवाः केशा येषां, शिरस्यग्रहणं श्रवणकुण्डलादिवत् तदारूढिप्रतिपत्त्यर्थम्। "शिरस्यवस्त्रैः (?)" इति क्वचित् पाठः। शिरा नाडी तया व्याप्ता जङ्घा येषां, शिराशब्दात् "गोष्ठणमिधा—"इत्यादिना चूडादित्वाल्लः। गिरिकूटदघ्नैः गिरिशृङ्गप्रमाणैः, "दघ्न मात्र-द्वयसस्थाने" इति दघ्नः। पृथूनि पिङ्गलानि च अक्षीणि येषां, "सक्थ्यक्ष्णः षः स्वाङ्गे" इति बहुव्रीहौ षः। प्रावृषेण्यैर्वर्षाकालीनैः अब्दैर्मेघैरिव, प्रावृष एण्यः भवार्थे अभिधानात्। अपो ददातीत्यब्दः, आदन्तात्

अधिज्यचापः स्थिरबाहुमुष्टि-
रुदञ्चिताक्षोऽञ्चितदक्षिणोरुः।
तान् लक्ष्मणः सन्नतवामजङ्घो
जघान शुद्धेषुरमन्दकर्षी ॥ ३१ ॥

"ह्ननजनात्—"इति डः। न केवलं चिचिते च, आनन्दे च इति चार्थः। पादपूरणे च इति केचित् ॥ ३० ॥ भ० म०

अधीति।—तान् अपाटान् गगनस्थान् लक्ष्मणो जघान हतवान्। कीदृशः? अधिज्यचापः अध्यारूढा उत्कलिता ज्या गुणो यस्य चापस्य तदधिज्यं, 'प्रादिभ्यो धातुजस्य—' इति समासः। अधिज्यं चापो यस्य लक्ष्मणस्य, स्थिरो निश्चलो बाहुर्मुष्टिश्च यस्य, उदञ्चिते उत्क्षिप्ते अक्षिणी येन स उदञ्चिताक्षः आकाशस्थापितदृष्टिरित्यर्थः। अञ्चितः सङ्कोचितो दक्षिणोरुर्येन सोऽञ्चितदक्षिणोरुः, "अञ्चेः पूजायाम्" इतीटोऽनुत्पन्नत्वात् व्यक्तस्य रूपम्; न चात्र पूजा गम्यते, किन्तु गतिविशेष एव, अनुषङ्गलोपोऽपि न भवति, णिलोपस्य स्थानिवद्भावात्। समन्तात् नता वामजङ्घा यस्य स सन्नतवामजङ्घः शुद्धेषुः निशितबाणः, अमन्दमत्यन्तं कष्टुं शीलमस्यासावमन्दकर्षी कर्णान्ताकृष्टचाप इत्यर्थः ॥ ३१ ॥ ज० म०

अधिज्येति।—लक्ष्मणस्तान् राक्षसान् जघान। कीदृशः? अधिरूढा ज्या गुणो यत्र तादृशश्चापो यस्य। स्थिरो निश्चलो दृढो वा बाहुर्मुष्टिश्च यस्य स लक्ष्मणः, दर्शनार्थम् उदञ्चिते ऊर्द्ध्वमुखार्पिते,(सुत्थापिते ?) अक्षिणी येन आकाशक्षिप्तदृष्टिरित्यर्थः। अञ्चितः सङ्कुचितो दक्षिणोरुर्येन। णेर्लोपेऽपि स्थानिवद्भावात् नाङ्गेर्नलोपः। सन्नता वामजङ्घा यस्य, शुद्धो निशितः इषुर्यस्य,

गाधेयदिष्टं विरसं रसन्तं
रामोऽपि मायाचणमस्त्रचुञ्चुः।
स्थास्नुं रणे स्मेरमुखो जगाद
मारीचमुच्चैर्वचनं महार्थम् ॥ ३२ ॥

थमन्दं यथा स्यात्तथा धनुः कर्षतीति ग्रहादित्वात् णिन्। क्रष्टुं शीलमस्येति परे ॥ ३१ ॥ भ० म०

गाधेयेति।—गाधेरपत्यं गाधेयो विश्वामित्रः, इञच इत्यनुवर्त्तमाने "इतश्चानिञः" इति ढक्। तेन दिष्टं कथितं मारीचं नाम राक्षसं रामो जगाद गदितवान्। रसन्तं वदन्तं, विरसमश्राव्यमिति क्रियाविशेषणम्। मायाचणं मायया वित्तम्, अस्त्रचुञ्चुः अस्त्रैः प्रतीतो रामः। "तेन वित्तश्चुञ्चुप्चणपौ"इति। स्थास्नुं रणे स्थितिशीलं, तस्य सेनापतित्वात्। स्मेरमुखः चित्तस्याक्षोभादीषद्धसनशीलवदनः, "नमिकम्पि—"इत्यादिना रः। उच्चैस्तरां जगादेति क्रियाविशेषणं, वचनं वक्ष्यमाणं महार्थं प्रधानार्थं, 'ब्रुविशासि—' इत्यत्र ब्रुवीत्यर्थग्रहणात् द्विकर्मकता, मारीचं वचनञ्च ॥ ३२ ॥ ज० म०

गाधेयेति।—रामः अपिशब्दात् लक्ष्मणोऽपि महार्थमुच्चैर्वचनं मारीचं जगाद। "याच्ञार्थदुह—" इति सूत्रे ब्रुवीत्यर्थस्य ग्रहणं, तेन द्विकर्मकत्वं, पचादित्वाद्वा। कीदृशं मारीचम्? गाधेयेन विश्वामित्रेण दिष्टं कथितं, गाधेरपत्यार्थे "बाह्वाद्यत—"इत्यनेन मतादित्वात् ष्णेयः। विरसं कठोरं यथा स्यात्तथा रसन्तं शब्दायमानं, मायया ख्यातं मायाचणं, "वित्ते चुञ्चुचणौ" इति चणः। रणे स्थास्नुं स्थितिशीलं, "ग्लाजिस्था—" इति स्नुः। रामः कीदृशः? अस्त्रचुञ्चुः अस्त्रेण ख्यातः, स्मेर-

आत्मम्भरिस्त्वं पिशितैर्नराणां
फलेग्रहीन् हंसि वनस्पतीनाम्।
शौवस्तिकत्वं विभवा न येषां
व्रजन्ति तेषां दयसे न कस्मात्? ॥ ३३ ॥

शीघ्रदमनशीलं मुखमस्य, "हिंसदीपकम्प—" इति रः ॥३२॥ भ० म०

आत्मम्भरिरिति।—नराणां पिशितैर्मांसैः आत्मानं बिभर्षि पुष्णासि, नान्यदपि शरीरस्थितिहेतुर्भवतीति भावः। स त्वमात्मम्भरिः आत्मभरणाय फलानि गृह्णन्ति ये वनस्पतीनां तान् फलेग्रहीन् फलाशिनो मुनीन् हंसि मारयसि। शपो लुक्। "फलेग्रहिरात्मम्भरिश्च" इति निपातितौ। श्वो भवितारः शौवस्तिकाः, "श्वसस्तुट् च" इति ठञ् तुडागमश्च, द्वारादित्वादैजागमः। शौवस्तिकत्वं तद्येषां विभवा न व्रजन्ति तेषामश्वस्तनिकवृत्तीनां कस्मान्न दयसे? न रक्षसि? "अधीगर्थदयेशाम्" इति कर्मणि षष्ठी ॥ ३३ ॥ ज० म०

आत्मम्भरिरिति।—त्वं वनस्पतीनां फलेग्रहीन् मुनीन् हंसि, फलानि गृह्णन्ति तन्मात्रभोजित्वेन स्वीकुर्वन्तीति "शकृत्स्तम्बात्—" इत्यादिना इप्रत्ययः। 'फले' इति सूत्रे निर्देशादेत्वम्। वनस्पतीनां मध्ये फलेग्रहीन् मुनीन् हंसि उन्मूलयसीति च्चित्। त्वं कीदृशः? नराणां पिशितैर्मांसैरात्मम्भरिः आत्मानं बिभर्तीति "कुक्ष्यात्मोदरात् भृञः खिः" इति खिः, "खित्यनव्ययस्य—" इति मुम्। येषां विभवाः सम्पदः शौवस्तिकत्वं भवेदिनस्थितत्वं न व्रजन्ति तेषां कस्मान्न दयसे? समार्थेना—" इति कर्मणि षो। श्वो भवः शौवस्तिकः श्वसो भवार्थेति

अद्मो द्विजान् देवयजीन् निहन्मः
कुर्मः पुरं प्रेतनराधिवासम् ।
धर्मो ह्ययं दाशरथे ! निजो नो
नैवाध्यकारिष्महि वेदवृत्ते ॥ ३४ ॥

कथभिधानात्, क्वणि मनीषादित्वात् त्वागमः, "द्वार-स्वर—" इति छम्, "णित्ते ञिः—" इति ञिः। "त्वतौ भावे" इति त्वम्। देवोदास-चक्रवर्त्ती तु श्लोकान्ते स्वस्तिकः 'तिलञ्च मत्वान्' इत्युक्त्वात् "कुगुप्राप्रो—" इति कः, ततः स्वार्थे णः। अन्यत् पूर्ववद्-व्याख्येयम् ॥ ३३ ॥ भ० म०

अद्म इति।—राक्षसः प्राह—द्विजान् ब्राह्मणक्षत्रियवैश्यान् अद्मः भक्षयामः, देवयजीन् देवान् यजन्ति आराधयन्ति ये तान् निहन्मः 'अच इः' इत्यनुवर्त्तमाने 'खनि—' इत्यादिषु ऊह्यमानेषु औणादिकेषु सूत्रेषु यद्यपि यजिर्न पठितस्तथाऽपि 'यजेरिः प्रकृतेश्च तदूह्यम्' इति वचनात्। "जासि-निप्रहण—" इत्यत्र सङ्घातविगृहीतविपर्यस्तग्रहणात् षष्ठी प्राप्ताऽपि न भवति, कर्मणः शेषत्वेनाविवक्षितत्वात्। पुरं नगरं प्रेतनराणां मृतनराणाम् अधिवासमवस्थानं कुर्मः, नित्यहननेन श्मशानतुल्यम् इत्यर्थः। कस्मादेवम्? इत्याह, धर्म इति।—दशरथस्यापत्यं दाशरथिः "अत इञ्"। हे दाशरथे! हि यस्मादर्थे वर्त्तते, यस्मादयं धर्मः आचारः निजो नित्यः, न इत्यस्माकं, वेदविरुद्ध इति चेत्? नैवाध्यकारिष्महि वेदवृत्ते वेदविहितं वृत्तमिति मध्यमपदलोपी समासः। यत् ब्राह्मणानाम् उक्तमनुष्ठानं तत्र वयं नैवाधिकृत इत्यर्थः। अधिपूर्वात् करोतेः कर्मणि लुङ् "स्यसिच्—" इत्यादिना चिण्वदिट् ॥ ३४ ॥ ज० म०

धर्मोऽस्ति सत्यं तव राक्षसाय-
मन्यो व्यतिस्ते तु ममापि धर्मः।
ब्रह्मद्विषस्ते प्रणिहन्मि येन
राजन्यवृत्तिर्धृतकार्मुकेषु: ॥ ३५ ॥

अद्म इति।—पूर्व्वापरपरामर्शात् मारीचप्रत्युत्तरमिदम्। वयं द्विजान् अद्मः भक्षयामः, देवयजीन् देवपूजकान् निहन्मः। "ब्रहेरिमो र्घोऽत्र्यां" "व्रजेर्वदे:—" इत्यादिनिर्देशात् सर्व्वधातुभ्य इप्रत्ययः स्यादिति सूचितं, तेन यजिरिति सिद्धः वातप्रमीवत्। दीर्घान्तोऽयमित्येके। पुरं मृतमनुष्याधिवासं श्मशानतुल्यं कुर्मः "कुरुव्लोपो व्स्ये" इति कञ उपो लोपः, "कञोऽहणौ रे" इत्युकारः। हे दाशरथे! हि यस्मात् अयमेव अस्माकं निजो नित्यो धर्मः स्वभावः आचारो वा। "धर्माः पुण्ययमन्याय-स्वभावाचारसोमपाः" इत्यमरः। वेदवृत्ते वेदविहिते कर्म्मणि नैव अध्यकारिष्महि वयं नाधिकृताः विधात्रा इत्यर्थः। कर्म्मणि टौ, "हनग्रहदृशच:—" इति मिण् ॥ ३४ ॥ भ० म०

धर्म्म इति।—रामः प्राह, हे राक्षस! रक्ष एव राक्षसः, प्रज्ञादित्वादण्। स्वार्थिकाः प्रत्यया लिङ्गवचनानि अतिवर्त्तन्ते इति पुंलिङ्गता। तवायं पूर्व्वोक्तः पराभिद्रोहलक्षणो धर्म्मः अस्ति इति सत्यमेतत्, किन्तु ममापि रामस्य अन्यो धर्म्मः अशिष्टनिग्रहलक्षणो व्यतिस्ते व्यतिभवते। इदमुक्तं भवति—यद्यप्येवम्प्रकारस्त्वद्धर्म्मो भविष्यति, तथाऽपीदानीमेव या त्वद्धर्म्मेण विद्यमानतया निष्पाद्या सा अस्मद्धर्म्मेणैव निष्पादकत्वेन व्यतिस्ते; ततश्चान्यसम्बन्धिनीं क्रियामन्यः करोति इतर-सम्बन्धिनीमितर इति धर्म्मव्यतीहारसम्भवात् अस्तेः कर्म्मव्यतीहारे तङ्। तथाहि, यो यदवसरे यां काञ्चित् क्रियां करोति

इत्थं प्रवादं युधि सम्प्रहारं
प्रचक्रतू रामनिशाविहारौ ।

स तत्क्रियाकारी इत्युपचारात् लोके उच्यते, येन धर्मेण हेतुना अह्नाहिषस्ते प्रणिहन्मि मारयामि स व्यतिस्ते इति योज्यम् । "नेर्गद—" इत्यादिना णत्वं, "जासि-नि—" इत्यादिना कर्मणि षष्ठी । तथा कथं तव धर्म इति चेत् ? आह, राजन्यवृत्तिरिति—क्षत्रियवृत्तिः, ततो राज्ञोऽपत्यं "राजश्वशुराद्यत्" "ये च—" इति प्रकृतिभावः । धृतं कार्मुकम् इषवश्च येन सः । यतः अहं राजन्यवृत्तिः, ततोऽहं धृतकार्मुकेषुरिति । "धृतकार्मुकेषु" इति पाठान्तरम् । क्व राजन्यवृत्तिः ? सायुधेष्वित्यर्थः ॥ ३५ ॥

ज० म०

धर्म इति ।—रामवाक्यमिदम् । हे राक्षस ! तव अयं धर्मोऽस्तीति सत्यं, रक्षःशब्दात् "विकारसङ्घ—" इत्यादिना स्वार्थे अण् । त्रैलोक्यमित्युदाहरणेन स्वार्थिकाः प्रकृतितो लिङ्ग-वचनान्यतिवर्त्तन्तेऽपीति सूचितं, तेन पुंस्त्वम् । किन्तु ममापि अन्यो धर्मो व्यतिस्ते, अस्तेः "व्यतीहारे गतिहिंसा—" इति मं, "लोपोऽस्त्यसोः—" इत्यकारलोपः । यथा तव हिंसारूपो धर्मोऽस्ति, तथा मम हिंसकहिंसाकारित्वरूपो धर्मोऽस्ति इत्यर्थः । धर्मं प्रकाशयति, येन धर्मेण हेतुना अह्नाहिषस्ते तव प्रणिहन्मि, कर्मणि षी, "प्राग्वतो णोऽन्तर—" इति णत्वम् । कुतस्तेऽयं धर्मः ? इत्याह, यतो राजन्यानां वृत्तिः धृतं कार्मुकमिषुश्च यत्र तथा भवति, क्षत्रियाणां धनुर्बाणधारित्वं हिंसनार्थमेव । राजन्येति "मन्वर्ज्ञान्—" इत्यादिना नलोपनिषेधः ॥ ३५ ॥

भ० म०

इत्थमिति ।—इत्थम् अनेन प्रकारेण प्रवादः अन्योन्याभि-

तृणाय मत्वा रघुनन्दनोऽथ
बाणेन रक्षः प्रधनान्निरास्थत् ॥ ३९ ॥
जग्मुः प्रसादं द्विजमानसानि
द्यौर्वर्षुका पुष्पचयं बभूव ।

यातो यत्र सम्प्रहारे तं सम्प्रहारं परस्पराभिभवलक्षणं प्रक्रान्तवन्तौ। युधि रणभूमौ, युध्यन्ते अस्यामिति सम्पदादित्वादधिकरणे क्विप्। रामनिशाविहारी रामो निशाविहारी निशाचरो मारीचश्चेत्यर्थः, निशायां विहारो यस्येति समासः। अथानन्तरं रघुनन्दनो रघुवंशस्य नन्दयिता रामो रक्षः मारीचं बाणेन तस्मिन्बलिनि सत्यपि तृणाय मत्वा तृणमिव अवमत्य, "मन्यकर्मण्यनादरे—" इति चतुर्थी। तत्र 'प्रकृष्टकुत्सितग्रहणं कर्त्तव्यम्' इह माभूत् तृणं मत्वेति, प्रधनात् सङ्ग्रामात् निरास्थत् अपनीतवान् ॥ ३९ ॥ ज० म०

इत्थमिति।—उक्तप्रकारं प्रवादं, तदनन्तरं युधि युद्धे सम्प्रहारं रामनिशाविहारौ प्रचक्रतुः। निशायां विहारोऽस्येति निशाविहारो मारीचः, सम्यक् प्रहारः यस्मात् इति सम्प्रहारं प्रवादविशेषणमित्येके। अथ रघुनन्दनो रामः रक्षः मारीचं तृणाय मत्वा बाणेन प्रधनात् युद्धात् निरास्थत्। "गत्यर्थमन्यढ़े—" इति चौ, तृणापमानेनैवावज्ञा गम्यते, तेन तृणादेव चतुर्थी ॥ ३९ ॥ भ० म०

जग्मुरिति।—यागविघ्नकारिषु निरस्तेषु द्विजानां मानसानि, मनांस्येव मानसानि "प्रज्ञादि—" इति अण्। प्रसादम् अव्याकुलत्वं जग्मुः गतानि। "गमहन—" इत्युपधालोपः। द्यौः पुष्पचयं वर्षुका वर्षणशीला बभूव भवति स्म। "लष-पत-पद—" इत्यादिना उकञ्, "न:लोका—" इति षष्ठीप्रतिषेधः।

निर्व्याजमिज्या ववृते वचश्च
भूयो बभाषे मुनिना कुमारः ॥ ३७ ॥
महीय्यमाना भवताऽतिमात्रं
सुराध्वरे घस्मरजित्वरेण ।
दिवोऽपि वज्रायुधभूषणाया
ह्रिणीयते वीरवती न भूमिः ॥ ३८ ॥

निर्व्याजं निर्विघ्नम् इज्या यागः, "व्रजयजोर्भावे क्यप्" । ववृते वृत्तः । लिट् । भूयः पुनरपि मुनिना गाधेयेन कुमारः रामः अकृतदारकर्मत्वात् वचो वक्ष्यमाणं बभाषे । कर्मणि लिट्, ब्रुवीत्यर्थग्रहणात् द्विकर्मकता, वचः कुमारश्च ॥३७॥ ज० म०

जग्मुरिति ।—असुरवधात् द्विजानां मानसानि प्रसादम् अव्याकुलत्वं जग्मुः, "हनगम—" इत्युङ्लोपः । द्यौः स्वर्गः पुष्पस्य चयं समूहं वर्षुका बभूव । वर्षतीति वर्षुका, वृषेः "लृष्पभूकमगम—" इति उकः, "ढवे क्षति—" इति सूत्रे उकवर्जनात् न कर्मणि षष्ठी । निर्व्याजं निर्विघ्नं यथा स्यात्तथा मुनीनाम् इज्या यज्ञो ववृते निष्पन्ना । यजेः "श्री-व्रज-यज—" इति क्यप् स्त्रियाम् । मुनिना विश्वामित्रेण कुमारो रामः भूयः पुनरपि बभाषे, ब्रुवीत्यर्थात् द्विकर्मकत्वं, 'कुमारक केलौ' पचादित्वादच् । "कुमारो बालके स्कन्दे युवराजेऽश्ववारके" इति विश्वः ॥ ३७ ॥ भ० म०

महीय्येति ।—भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना, अतिमात्रं सुष्ठु सम्यक् पालनाद्दिवोऽपि स्वर्गस्य न ह्रिणीयते न लज्जते, किन्तु प्रतिस्पर्द्धते इति भावः। 'ह्रिणी' 'महीङ्' इति कण्ड्वादिपाठाद्यक्, ङित्त्वात्तङ्, अवयवे कृतं लिङ्गं

बलिर्बबन्धे जलधिर्ममन्थे
जह्रेऽमृतं दैत्यकुलं विजिग्ये।
कल्पान्तदुःस्था वसुधा तथोहे
येनैष भारोऽतिगुरुर्न तस्य ॥ ३९ ॥

समुदायस्य विशेषकं भवतीति महीयशब्दात् कर्मणि लकारः शानच्, यक्, अतो लोपः, मुक्, महीय्यमाना इति रूपम्। सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र, ये घस्मराः अदनशीलाः राक्षसाः, "सृघस्यदः क्मरच्," तेषां जित्वरेण जयशीलेन भवता "इण्नशजि—" इत्यादिना क्वरप्। वज्रायुधभूषणायाः शक्र एवालङ्कारो यस्या दिवः वीरवती त्वद्विधो वीरो यस्यां भूमाविति ॥३८॥ ज० म०

महीय्येति।—भूमिर्दिवोऽपि स्वर्गादपि न ह्रिणीयते न लज्जते, तामपि स्पर्द्धते इत्यर्थः, यतो भवता अतिमात्रम् अतिशयेन वीरवती प्रशस्तवीरान्विता, अत एव लोकैर्महीय्यमाना पूज्यमाना, 'महीङ् वृद्धिपूजनयोः' 'ह्रिणीङ् लज्जायाम्' आभ्यां कण्ड्वादित्वात् "नमस्तपोवरिवः—" इत्यादिना क्यः। कीदृशेन भवता? सुराध्वरे देवानां यज्ञे घस्मराणां बहुभक्षणशीलानां राक्षसानां जित्वरेण, 'घ्लृ घसी भक्षे' इत्यस्मात् "घसस्दः क्मरः" इति क्मरः, "क्वरप् सृजोत्वश—" इति जेः क्वरप्, "खस्य तन्विति" इत्यनेन तन्। दिवः कीदृश्याः? वज्रमायुधमस्येति वज्रायुधः इन्द्रः स एव भूषणं यस्याः, इन्द्रो यथा दिवः परिपालकस्तथा त्वं भूमेरिति भावः। आयुध्यतेऽनेनेति आयुधम् इगुपधत्वात् "कृगुप्रीज्ञ—" इति कर्त्तरि विहितप्रत्ययः करणेऽपि बोध्यः। "आङो: कभावे" इत्युक्तेरन्यत्रापि प्रयोगत इत्यतः ॥ ३८ ॥ भ० म०

इति ब्रुवाणो मधुरं स्मितञ्च
तमाश्रिहन्मैथिलयज्ञभूमिम्।
रामं मुनिः प्रीतमना मखान्ते
यशांसि राज्ञां निजिघृक्षयिष्यन्॥ ४०॥

सङ्क्षेपेण स्तुतिमाह, बलिरिति।—येन भवता बलिर्बबन्धे बद्धः, जलधिर्ममन्थे मथितः, मन्दरं दोर्भिर्गृहीत्वा। 'मन्थ विलोड़ने' इत्यस्य रूपं, संयोगान्तत्वाल्लिटोऽकित्त्वे अनुनासिकलोपो न भवति। जह्रे अमृतं स्त्रीरूपधारिणा। दैत्यकुलं विजिग्ये विजितमनेकधा। "सन्-लिटोर्जेः—"इति कुत्वम्, "एरनेकाचः—" इति यणादेशः। तथा कल्पान्ते प्रलये दुःस्था दुःस्थिता वसुधा पृथिवी ऊहे उद्धृता वराहरूपिणा। वहेर्यजादित्वात् सम्प्रसारणम्। तस्य भवत एष भारो मुनिजनरक्षणम् अतिगुरुः न भवति। सर्वत्र कर्मणि लिट्॥३८॥ ज०म०

बलिरिति।—येन भवता वामनावस्थायां बलिनामासुरो बबन्धे बद्धः, जलधिः समुद्रो ममन्थे मथितः। मन्थेः "स्नात् ध्यदित् क्ङिः" इति किद्भावपक्षे उङो लोपाभावः। स्त्रीरूपेण असुरगृहीतममृतं जह्रे हृतं, दैत्यवंशो विजिग्ये विजितः, "जेर्गिः सन्ल्योः" "श्वुध्वोरवुचो—"इति यत्वम्। कल्पान्ते प्रलयकाले दुःस्था जलप्लाविता वसुधा पृथिवी वराहरूपेण ऊहे उद्धृता। सर्वत्र कर्मणि ठौ। वहेर्यजादित्वात् "व्यधग्रह—"इति खिजिः, "ग्रहस्वपाद्योः—"इति प्रसृतिजिः। दुःखेन तिष्ठतीति दुःस्था। "हनजनात्—"इति डः, खमयुक्तग्रासि विसर्गस्य वा लोपो मनीषादित्वात्। तस्य भवत एष भारो मुनिरक्षणरूपो नातिगुरुर्भवति॥ ३८॥ भ० म०

इतीति ।—इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितञ्च ब्रुवाणः अभिदधानः,"लक्षणहेत्वोः—"इति शानच्। मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं रामं मैथिलस्य यज्ञभूमिम् आञ्जिहत् गमितवान् । मिथिलानां राजेति "जनपदशब्दात् क्षत्रियादञ्"इत्यत्र "तस्य राजन्यपत्यवत्"इत्यतिदेशादञ् । 'अहि गतौ' "इदितो नुम्" प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोपः, "द्विर्वचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति हिशब्दस्य द्विर्वचनं,"न न्द्राः—"इति नकारस्य प्रतिषेधः, अभ्यासकार्येण आञ्जिहदिति रूपम् । राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुम् अभिभवितुमिषयिष्यन्, ग्रहेः सन् "सनि ग्रहगुहोश्च" इति इट्प्रतिषेधः, द्विर्वचनादिः, "रुदविद—" इत्यादिना सनः कित्त्वं, "ग्रहिज्या—"इत्यादिना सम्प्रसारणं, ढत्व-भष्भावौ, गकारस्य घकारः, कत्व-षत्वे, पश्चाण्णिच्, तदन्तात्भविष्यत्सामान्यविवक्षायां ऌट्, तेन भविष्यदनद्यतने लुट् न भवति ॥ ४० ॥

ज० म०

इतीति ।—उक्तप्रकारेण मधुरं हितं ब्रुवाणो मुनिः प्रीतमना मखस्य यज्ञस्यान्ते तं रामं मैथिलस्य जनकस्य यज्ञभूमिम् आञ्जिहत् प्रापयामास । राज्ञां यशांसि निग्रहीतुम अभिभवितुम् इच्छां कारयिष्यन्, राम एव प्रयोज्यकर्त्ता । मिथिलाया राजा मैथिलः, "विकारसङ्घ—"इति ण्णः, 'अहिङ् गतौ' इदितो नुम्, "णि. प्रेरणे" "णिश्रि—"इत्यङ्, "नाजन्तादेः—"इति "स्यादौ नवद्रोऽये" इति निषेधात् हिशब्दस्य द्वित्वं, "खेभ्रमखथ—" इति हस्य जः, ञेर्लोपः, ग्रहेः सन "नेमुगुहग्रहः" इतीम्निषेधः,"ग्रहस्वप—"इति जिः,हो ढः,"भभान्तस्यादिजवाम्—" इति घः, "षढोः क. से" इति ढस्य कः, "क्विलात्—"इति षः, "सन्यङन्तो द्विः," खेरादचो लोपः, "भमखय—"इति

इतः * स्म मित्रावरुणौ किमेतौ ?
किमश्विनौ सोमरसं पिपासू ? ।
जनं समस्तं जनकाश्रमस्थं
रूपेण तावौजिहतां नृसिंहौ ॥ ४१ ॥

खित्वस्य जत्वम्, ऋकारस्य श्रत्वञ्च ; "ष्यस्येत् सनि" ततो जि', ततः ष्वह ॥ ४० ॥ भ० म०

इत इति।—एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव जनकाश्रमस्थं जनं रूपेण स्वरूपतया औजिहतां वितर्कं कारितवन्तौ। 'ऊह वितर्के' इत्यस्माद्धातोः ण्यन्तात् कर्त्तुः क्रियाफलाविवक्षायां "णिचश्च" इति तङ् न भवति, चङि णिलोपस्य स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति द्विर्वचनम्। ऊहमाह, मित्रावरुणौ आदित्यवरुणौ, "देवताद्वन्द्वे च" इत्यानङ्, तयोर्महानुभावत्वात्, सोमरसं पिपासू पातुमिच्छू "न लोक—" इति षष्ठीप्रतिषेधः। एतावागतौ, आङ् पूर्वस्येणो निष्ठायां रूपम्। किमश्विनौ ? अश्विनीकुमारौ सोमरसं पिपासू एतौ ? इति एवं जनम औजिहताम्। "स्म" इत्यत्र "सु" इति पाठे "एतौ सुमित्रावरुणौ" इति पाठः। एतौ स्म मित्रेति स्मशब्दो निपातः पादपूरणार्थः ॥४१॥ ज० म०

इत इति।—तौ नृसिंहौ मनुष्यश्रेष्ठौ रामलक्ष्मणौ रूपेण सौन्दर्य्येण समस्तं जनकाश्रमस्थं जनम् औजिहतां वितर्कं कारितवन्तौ। 'ऊहङ् वितर्के' "जिः प्रेरणे" "णिश्रि—" इत्यङ्, "नाजन्तादेः—"इति निषेधात् हेर्द्वित्वं "वोऽचो जे:—" इति ज्ञानार्थत्वात् कर्त्तुः कर्मत्वम्। वितर्कमाह—किमेतौ मित्रावरुणौ ? सूर्य्यवरुणौ सोमरसं पातुमिच्छावन्तौ इतः स्म ?

* "इतः"इत्यत्र "एतौ" इति जयमङ्गलाधृतः पाठः।

अजिग्रहत्तं जनको धनुस्तत्
येनार्दिदद्दैत्यपुरं पिनाकी।
जिज्ञासमानो बलमस्य बाह्वो-
र्हसन्नभाङ्क्षीद्रघुनन्दनस्तत् ॥ ४२ ॥

अमुं देशं प्राप्तवन्तौ ? 'इण् गतौ' "को स्मेनातीति" इति कौ। किंवा एतौ अश्विनौ अश्विनीकुमारौ नासत्यदस्रौ, "नासत्यश्चैव दस्रश्च स्मृतौ तौ नामतोऽश्विनौ" इति मार्कण्डेयपुराणम्। केचित्तु स्मशब्दः पादपूरणे ; इतोऽस्मिन् देशे एतौ आगतौ,आङ्पूर्वादिणः क्त इत्याहुः। मित्रश्च वरुणश्चेति द्वन्द्वे सहचरितदेवताद्वन्द्वे पूर्वपदस्यादन्तता निपातनात्। देवोदासचक्रवर्त्ती तु "एकादश"इत्युदाहरता "विश्वराजोऽदा" इत्यस्य योगविभागात् क्वचित् समासे पूर्वपदस्य दीर्घत्वं सूचितमित्याह ॥ ४१ ॥ भ० म०

अजिग्रहदिति।—येन धनुषा दैत्यपुरं पिनाकी महादेवः आर्दिदत् हिंसितवान्, अर्देः स्वार्थिकण्यन्तात् चाङ "अजादेर्द्वितीयस्य" इति दिशब्दो द्विरुच्यते, रेफस्य प्रतिषेधः, तद्धनुः तं रामं जनकः अजिग्रहत् बोधितवान्, अनेन धनुषा त्रिपुरं दग्धमिति, ग्रहेर्हेतुमण्यन्ताच्चङि णिलोप, णौ चङि ह्रस्वः, सन्वद्भावादित्वं, ग्रहेश्च बुद्ध्यर्थत्वात् "गतिबुद्धि—" इत्यादिना रामस्य कर्मसंज्ञा। अस्य रामस्य बाह्वोर्भुजयोर्बलं जिज्ञासमानो जनकः। एवम्भूतं धनुः हसन् स्मयमानो रघुनन्दनो रामः अभाङ्क्षीत् भग्नवान्। भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः, तत्र हि 'हल्ग्रहणं समुदायप्रतिपत्त्यर्थम्' इत्युक्तम् ॥ ४२ ॥ ज० म०

अजिग्रहदिति।—जनको राजा तं रामं तद्धनुरजिग्रहत् ग्राहयामास, धातूनामनेकार्थत्वात् ग्रहिरत्र ज्ञानार्थं इत्यन्ये,

ततो नदीष्णान् पथिकान् गिरिज्ञा-
नाह्वायकान् भूमिपतेरयोध्याम्।
दित्सुः सुतां योधवरैस्तुरङ्गै-
र्व्यसर्जयन्मैथिलमर्त्यमुख्यः॥ ४३ ॥

"घोऽणौ णेः—" इति प्रयोज्यकर्त्तुः कर्म्मत्वं, "आऽद्युङः ख्णौ—" इति ह्रस्वः, "ख्णेः सन्वत्—" इति सन्वत्। येन धनुषा पिनाकी शिवो दैत्यानां पुरं त्रिपुरम् आर्दिदत् हतवान्, 'अर्दिक् वधे' "ष्यादौ नवद्रोऽये" इति निषेधात् दर्द्दित्वम्। केचित्तु धनुषा प्रयोज्यकर्त्रा घातयामास इत्यर्थमाहुः। जनकः कीदृशः? अस्य रामस्य बाह्वोर्बलं जिज्ञासमानः ज्ञातुमिच्छन्, "स्मृदृशनुज्ञा—" इति सनन्तज्ञो मं, हसन् लीलयैव तद्धनुरभाङ्क्षीत, 'भन्ज धौ मोटने' "व्यां सिः" अनिमत्वात् "व्रजवद—" इति व्रिः, चुङ्—" इति कुङ् ॥ ४२ ॥ भ० म०

तत इति।—धनुर्भङ्गादनन्तरं महानयमिति ज्ञात्वा जनकः सुतां दुहितरं दित्सुः दातुमिच्छुः, ददातेः "सनि मीमा—" इत्यादिना अच इस् द्विर्वचनम्, "अत्र लोपो—" इत्यभ्यासलोपः "सः सि—" इति तत्वं, "सनाशंसभिच्च उः।" भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्त्तरि णवुल् "आतो युक्—" कृत्प्रयोगे भूमिपतेः कर्मणि षष्ठी; तान् अयोध्यां व्यसर्जयत् विसर्जितवान्, विपूर्वस्य सृजेर्हेतुमण्यन्तस्य लङि रूपं, गत्यर्थत्वात् द्विकर्मकता। नद्यां स्नातीति नदीष्णाः, "सुपि स्थः" इति योगविभागात् कः, "आतो लोपः—" "निनदीभ्यां स्नातेः—" इति षत्वं, नदीं तरीतुं कुशलान् इत्यर्थः। पथिकान् पथि कुशलान्, "तत्र कुशलः

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी
यविष्ठवत् वृद्धतमोऽपि राजा।
आख्यायकेभ्यः श्रुतसूनुवृत्ति-
रम्लानयानो मिथिलामगच्छत् ॥ ४४ ॥

पथः" इति ठक्, गिरिज्ञान् यथाप्रदेशं गिरिज्ञान् "इगुपध—" इत्यादिना कः। तुरङ्गैः अश्वैः कारणभूतैः, युध्यन्ते इति योधाः, पचाद्यच्, तान् हन्तुं चमैः, "वयसि च" इत्यच्। 'हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्' इत्यौणादिकस्तन्। म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः तत्र भवा मर्त्या मनुष्याः, दिगादेराकृतिगणत्वात् यत्। आकृतिगणत्वस्य लिङ्गं "देवमनुष्यपुरुषपुरुमर्त्येभ्यः—" इति निर्देशः। मुखमेव मुख्यः प्रधानं, "शाखादिभ्यो यत्"। मर्त्यानां मुख्यो मर्त्यमुख्यः, मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषणसमासः, जनक इत्यर्थः ॥ ४३ ॥ ज० म०

तत इति।—धनुर्भङ्गानन्तरं मिथिलासम्बन्धिमनुष्यश्रेष्ठो जनकः रामाय सुतां दित्सुर्दातुमिच्छुः सन् भूमिपतेर्दशरथस्य आह्वायकान् दूतान् तुरङ्गैर्योध्यां व्यसर्जयत् प्रेरयामास। तुरङ्गैः कीदृशैः? योधघ्नैः योधान् हन्तुं चमैः, हनः पचादित्वादच्, 'वयोवोधकवहनार्थेऽन्' इति क्रमदीश्वरादयः। एतेन शीघ्रगमनं दर्शितम्।"गर्वंजश्रो—"इत्यादिना तुरङ्गो निपातितः। किम्भूतान्? नदीष्णान् नदीसन्तरणकुशलान्, नदीस्नानिति 'स्नात्योर्दाच्ये' इति रामानन्दसूत्रेण मनीषादित्वात् वा षत्वम्। 'नदीष्णो नदीज्ञः' इति पुरुषोत्तमः। पन्थानं गच्छति वेत्ति वा इति निपातनादकः, ष्णान्तात् स्वार्थे को वा। पथि कुशलः पथिक इति केचित्। गिरिं जानन्तीति गिरिज्ञाः, "ज्ञनजनात् —" इति डः ॥ ४३ ॥ भ० म०

क्षिप्रमिति।—आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता सूनुवृत्तिर्येन स राजा दशरथः, सूयते इति सूनुः पुत्रः, 'दाभाभ्यां नुः' इति वर्त्तमाने 'सुवः कित्' च इत्यौणादिको नुप्रत्ययः। ततोऽनन्तरमेव क्षिप्रं शीघ्रं, "स्फायितञ्चि—" इत्यादिना रक्, क्रियाविशेषणञ्चैतत्। मिथिलामगच्छत् भरत-शत्रुघ्नाभ्यां सहेत्यर्थादनुषक्तव्यं, गमेर्लङि "इषुगमियमां छः"। अध्वानम् अलङ्गामिनो ये तुरङ्गा अश्वाः ते अध्वन्याः अल-ङ्गामीत्यस्मिन्नर्थे "अध्वनो यत्खौ"इति यत्,"ये चाभावकर्मणोः" इति प्रकृतिभावः; तैः साधु यातीति साधुकारिणि णिनिः, अध्वन्यतुरङ्गयायी, एवञ्च कृत्वा अम्लानयानः न विद्यते म्लानं म्लानिर्यस्मिन् याने तत् अम्लानम्, अम्लानं यानं यस्य तादृशः तुरङ्गैः सुखयानः। म्लानमिति भावे निष्ठा,"संयोगादेरातः—" इति नत्वम्। वृद्धतमोऽपि यविष्ठवत्, युवशब्दस्येष्ठनि "स्थूलदूर—" इत्यादिना यणादिपरलोपः, पूर्वस्य च गुणः, पश्चात् "तेन तुल्यं—" इति वतिः॥ ४४॥ ज० म०

क्षिप्रमिति।—ततोऽनन्तरम् आख्यायकेभ्यः श्रुता सूनोः पुत्रस्य वृत्तिर्व्यवहारो येन स राजा दशरथः मिथिलां जनकपुरीं शीघ्रमगच्छत्। कीदृशः? अध्वन्यैस्तुरङ्गैर्यातीति ग्रहादित्वाणिनि, शीलार्थे णिन् इत्येके,आवश्यके णिन् इति केचित्। अध्वानमलमर्थं गच्छतीति खः, अनित्यविवक्षया न खः, "मन्वर्जान् वर्म—" इति नलोपाभावः, अध्वनि कुशलोऽध्वन्यो वा। वृद्धतम इति अयमेषामतिशयेन वृद्धोऽपि यविष्ठवत् प्रकृष्टयुववत्, "गुणात् वेष्ठेयसू" इतीष्ठः, "बाढान्तिक—"इति यूनो युवादेशः, "ओमंश्च डित्वेकाचः" इति डित्वात् टेर्लोपः। अम्लानमक्लिष्टं यानं यस्य, 'म्लै कान्तिक्षये' क्तः, यण्युक्तादन्तत्वात् "संयोगादे—" इति क्तस्य नत्वम्॥ ४४॥ भ० म०

वृन्दिष्ठमार्चीत् वसुधाऽधिपानां
तं प्रेष्ठमेतं गुरुवद्गरिष्ठम्।
सदृङ्महान्तं सुकृताधिवासं
बंहिष्ठकीर्त्तिर्यशसा वरिष्ठम्॥ ४५॥

वृन्दिष्ठमिति।—तं राजानमेतमायान्तं जनक आर्चीत् पूजितवान्, अर्चेर्लुङि रूपम्। वृन्दिष्ठं वृन्दारकतमं, प्रशस्ततममित्यर्थः। केषाम्? वसुधाधिपानां पृथ्वीपतीनां, प्रेष्ठं प्रियतमं, गुरुवत् गुरुणा तुल्यं वर्त्तमानं, गरिष्ठं गुरुतमं, सदृक् "समानान्ययोश्च" इत्युपसङ्ख्यानात् दृशेः क्विप्। रूढ़िशब्दश्चायं, नात्र दर्शनक्रिया विद्यते। अभिजनादिभिस्तुल्यो जनक इत्यर्थः, महान्तं महानुभावं, सदृशां मध्ये महान्तं, सुकृताधिवासं सुकृतनिलयम, अधिवसत्यस्मिन्निति अधिकरणे घञ्, बंहिष्ठा बहुलतमा कीर्त्तिर्यस्य स बंहिष्ठकीर्त्तिः, यशसा वरिष्ठं गुरुतमम्। अत्र वृन्दारक-प्रिय-गुरु-बहुलोरुणामिष्ठनि यथासङ्ख्य "प्रियस्थिर—" इत्यादिना वृन्द-प्र गर-बंह-वर इत्येते आदेशा भवन्ति॥ ४५॥ ज० म०

वृन्दिष्ठमिति।—अर्थात् जनकस्तमागतं दशरथम् आर्चीत् पूजितवान्। किम्भूतम्? वसुधाधिपानां राज्ञां मध्ये वृन्दिष्ठं प्रशस्ततमं, प्रेष्ठं प्रियतमं, गुरुवत् उपदेष्टृवत् पितृवद्वा गरिष्ठं गुरुतमं, महान्तं महाशयं, सुकृतानि पुण्यानि अधिवसन्त्यस्मिन्निति आधारे घञ्। यशसा वरिष्ठम् उरुतमं, बृहत्तममित्यर्थः। जनकः कीदृशः? सदृक् अर्थात् दशरथस्य समानः इव दृश्यते योऽसाविति, "त्यदादिभवत्समान—"इति क्विप्, "समानेदं—" इति सादेशः, 'सदृशां महान्तम्' इत्यन्ये। बंहिष्ठा बहुतमा

त्रिवर्गपारीणमसौ भवन्त-
मध्यासयन्नासनमेकमिन्द्रः ।
विवेकदृश्वत्वमगात् सुराणां
तं मैथिलो वाक्यमिदं बभाषे ॥ ४६ ॥

कीर्त्तियंस्य तथा, वृन्दिष्ठादौ "गुणाद्देष्ठेयसू" इतीष्ठः, "वाढा-न्तिक—"इत्यादिना वृन्दारक-प्रिय-गुरु-बहुलोरुणां वृन्द-प्र-गर-बंह-वरादेशः, "ओमंश्च—" इति डित्वात् टेर्लोपः । प्रेष्ठमित्यत्र एकाच्त्वाच डित्वम् ॥ ४५ ॥ भ० म०

त्रिवर्गेति ।—तं दशरथं मैथिलो जनकः वाक्यमिदं बभाषे, ब्रुवीत्यर्थग्रहणात् द्विकर्मकता । किन्तद्वाक्यम् ? इत्याह—असा-विन्द्रो भवन्तम् एकासनमध्यासयन् आरापयन् विवेकदृश्वत्व-मगादिति सम्बन्धः । आसनस्य "अधिशीङ्—"इत्यादिना अधि-करणे कर्मसंज्ञा, भवन्तमिति "गतिबुद्धि—"इत्यादिना आस्ते-रण्यन्तावस्थायामकर्मकत्वात् । पारं गामीत्यस्मिन् वाक्ये "अवार-पार—"इत्यादिना पारशब्दात् खः, तत्र विगृहीत-विपर्य्यस्तग्रहणात् । त्रिवर्गस्य धर्मार्थकामस्य पारीणमिति षष्ठी-समासः । त्रिवर्गपारीणं भवन्तं, सुराणां मध्ये स एवैको विवेक-दृश्वत्वं विवेकज्ञतामगात्, "इणो गा लुङि" "गातिस्था—" इत्यादिना सिचो लुक् । विवेकं दृष्टवानिति दृशेः क्वनिप् ॥ ४६ ॥ ज० म०

त्रिवर्गेति ।—मैथिलो जनकः तं दशरथम् इदं वाक्यं बभाषे, ब्रुवीत्यर्थत्वात् द्विकर्मकता । किन्तत् ? इत्याह—भवन्तमेक-मासनमध्यासयन्नुपवेशयन् इन्द्रः सुराणां विवेकदृश्वत्वं सदसद्भेदज्ञत्वम् अगात् प्राप्तवान् । कीदृशम् ? त्रिवर्गस्य पारं

हिरण्मयी साललतेव जङ्गमा
च्युता दिवः स्थास्नुरिवाचिरप्रभा।
शशाङ्ककान्तेरधिदेवताकृतिः
सुता ददे तस्य सुताय मैथिली ॥ ४७ ॥

गच्छतीति "ढवे कात्—" इति णोनः। "त्रिवर्गो धर्मकामार्थैः" इत्यमरः। असाविति बुद्धिस्थनिदर्शनं, विवेकं दृष्टवानिति "दृशेः क्वनिप्—" इति क्वनिप्, भवन्तमिति अध्यासेः प्रागविवक्षित-कर्मत्वादकर्मकत्वेन प्रयोज्यकर्तुः कर्मत्वम्, आसनमिति "कर्म-क्रिया—" इत्यादिना आधारस्य कर्मत्वम् ॥ ४६ ॥ भ० म०

हिरण्मयीति।—तस्य दशरथस्य सुताय रामाय, सूयते इति सुतः, 'षु प्रसवैश्वर्ययोः' इत्यस्मात् कर्मणि निष्ठा। सुता मैथिली सीता ददे जनकेनेत्यर्थात्। कर्मणि लिट्। मैथिलस्यापत्यम् "अत इञ्" तदन्तात् "इतो मनुष्यजातेः" इति ङीष्। रामस्य ज्येष्ठत्वात्तस्यैव कविना परिणय उक्तः, न शेषाणां, तेन अन्या अपि तदैव दुहितरो दत्ताः। हिरण्मयी सुवर्णनिर्मितेव साल-लता वृक्षलता, सुवर्णच्छवित्वात् तस्याः। हिरण्यविकार इति मयटि "दाण्डिनायन—" इत्यादिना यलोपनिपातनम्। जङ्गमा सञ्चारिणी, न तु स्थावरा, भृशं गच्छतीति यङि "नुगत—" इति नुक्, यङन्तात् पचाद्यचि "यङोऽचि च" इति यङो लुक्। च्युता दिवः आकाशात् पतिता अचिरप्रभेव विद्युदिव, तेजस्वि-त्वात् तनुत्वाच्च, किन्तु स्थास्नुरचञ्चला, सा तु चञ्चलेति व्यतिरेकः, "ऊङुतः" इति ऊङ् न भवति क्रियाशब्दत्वात्, तत्र मनुष्यजाते-रिति वर्त्तते। शशाङ्ककान्तेर्या अधिदेवता अधिष्ठात्री देवता तस्या आकृतिर्यस्याः सौम्यत्वात्, आक्रियते अनयेत्याकृतिः संस्थानम्, "अकर्त्तरि च कारके—" इति स्त्रियां क्तिन् ॥ ४७ ॥ भ० म०

लब्धां ततो विश्वजनीनवृत्ति-
स्तामात्मनीनामुदवोढ़ रामः।
सद्रत्नमुक्ताफलभर्मभूषां *
संवृंहयन्तीं रघुवंश्यलक्ष्मीम्॥ ४८॥

हिरण्मयीति।—अर्थात् जनकेन तस्य दशरथस्य सुताय मैथिली सुता ददे। मैथिलस्यापत्यं स्त्रीति ष्णः। यद्वा—मिथिलायां नगर्य्याम अर्थात् मिथिलाख्यभूभागे जाता, अयोनिसम्भवत्वात् पार्थिवीत्यर्थः, अयोनिसम्भवत्वेन दिव्यत्वाल्लक्ष्मीत्वं सूचितम्। रामसमीपे सीता कीदृशी? हिरण्मयी स्वर्णमयी बालवृक्षसम्बन्धिनी लतेव, एतेन रामस्य बालवृक्षतुल्यत्वं सूचितम। मयटि हिरण्यस्य यलोपो निपातनात्। जङ्गमा सञ्चारिणी, अन्या लता स्थिरेति विशेषः। यद्यपि गत्यर्थाद्धक्रतायां यङ् स्यात्तथाऽपि जङ्गमशब्दोऽयं रूढः। दिवः च्युता अचिरप्रभा विद्युदिव स्थास्नुः स्थितिशीला, विद्युच्चञ्चला इति विशेषः। "ग्लाजिस्थश्च—"इति स्नुः। अतिसौम्यत्वात् चन्द्रकान्तेरधिदेवताया अधिष्ठातृदेवताया इवाकृतिर्यस्याः॥ ४७॥ भ० म०

लब्धामिति।—ततो दानानन्तरं लब्धां तामात्मनीनाम् आत्मने हिताम्, "आत्मन्-विश्व—"इति खः; रामः उदवोढ़, वहेः स्वरितत्वात् कर्त्तृ क्रियाफलविवक्षया तङ्। विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्तिर्यस्य रामस्य सः, पूर्ववत् खः। सती उत्कृष्टा रत्नादिशोभा यस्याः, तैरलङ्कृतत्वात् तां सद्रत्नमुक्ताफलभर्मशोभां, भर्म स्वर्णं, "सर्वधातुभ्यो मनिन्।" "भर्मभूषाम्" इति पाठान्तरम्। सद्रत्नादि भूषा अलङ्कारो यस्या

* "भूषाम्" इत्यत्र "शोभाम्" इति जयमङ्गलासम्मतः पाठः।

सुप्रातमासादितसम्मदं तत्
वन्दारुभिः संस्तुतमभ्ययोध्यम् ।
अश्वीयराजन्यकहास्तिकाढ्य-
मगात् सराजं बलमध्वनीनम् ॥ ४९॥

इति योज्यम् । "गुरोश्च हलः" इत्यकारः । सम्बहयन्तीं सम्यक्-स्थामतिस्थिरां कुर्वाणां, बहुलशब्दात् 'तत्करोति—' इति णिचि इष्ठवद्भावात् "प्रियस्थिर—" इत्यादिना बंहादेशः, पश्चात्तदन्तस्य सम्पूर्वस्य सांवर्तन योगः । कामित्याह, रघुवंश्यलक्ष्मीमिति—रघुवंशे भवां विभूतिं, "वर्गान्ताच्च" इत्यनुवृत्तौ "अशब्दे यत्-खावन्यतरस्याम्" इति यत् ॥ ४८ ॥ ज० म०

लब्धामिति ।—ततोऽनन्तरम् आत्मने हितां लब्धां तां सीतां राम उदवोढ़, उत्पूर्ववहः परिणये, "सहवहोरदोढ़ि" इति अत ओत्वं, ढत्वघत्वात् भत्वाभावः । विश्वेषां जनानां हिता दृष्टिर्व्यवहारो यस्य, "विकारसङ्घ—" इत्यादिना हितार्थे ईनः । "मन्वर्ज—" इत्यादिना आत्मनो नलोपाभावः । मद्रत्नानि मुक्ता-फलानि भर्माणि भूषा अलङ्कारो यस्याः, "शोभाम्" इति पाठे तेः शोभते, पचादित्वादच् ; सती वर्त्तमाना रत्नादीनां शोभा यस्येति वा ; "हेम स्वर्णं जातरूपं सुवर्णं भर्म हाटकम् । शात-कुम्भम्" इति हलायुधः ; रघुवंश्यलक्ष्मीं सम्बहयन्तीं सम्यक् बहुलीकुर्वतीं, "लेः कृत्याख्याने णिः", "बाढ़ान्तिक—" इति बंहादेशः ॥ ४८ ॥ भ० म०

सुप्रातमिति ।—विवाहं निर्वर्त्य प्रभाते अयोध्याभिमुखं तत् बलं दशरथस्यागात् गतवत् । सुप्रातं निरुपद्रवत्वात् शोभनं

प्रातर्दिनमुखं यस्य बलस्य। "सुप्रातसुश्व—" इत्यादिना समा-सान्तष्टिलोपश्च निपात्यते। आसादितसम्मदं प्राप्तहर्षं, "प्रमद-सम्मदौ हर्षे" इति निपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम् अभ्ययोध्यम् अयोध्याभिमुखं, "लक्षणेनाभिप्रती आभिमुख्ये" इति अव्ययीभावः। अश्वानां समूहः आश्वीयं, "केशाश्वाभ्यां यञ्छौ" इति छः। राजन्यानां क्षत्रियाणां समूहो राजन्यकं, "गोत्रोक्ष—" इत्यादिना वुञ्, 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति प्रकृतिभावादपत्ययकारलोपो न भवति। हस्तिनां समूहो हास्तिकम्, "अचित्तहस्ति—" इति ठक्। एषां सेनाङ्गत्वात् द्वन्द्वे एकवद्भावः। तेनाढ्यमुपचितमिति, तृतीयेति योगविभागात् समासः। सह राज्ञेति विगृह्य साकल्यवचने यौगपद्ये वा अव्ययी-भावः, "अव्ययीभावे चाकाले" इति सभावः, "अनश्च" इति टच् समासान्तः। अध्वनीनमध्वानमलङ्गामीति "अध्वनो यत्-खौ" "आत्माध्वानौ खे" इति प्रकृतिभावः॥४८॥ ज० म०

सुप्रातमिति।—तत् बलं दशरथसैन्यम् अभ्ययोध्यम् अयोध्या-मभिमुखीकृत्य अगात्, इणो गा लुङि। शोभनं प्रातर्यस्य तत् सुप्रातं, निष्पन्नत्वात्, निपातनेन स्वार्थे ष्यञ् वा साध्यम्। आसादितः प्राप्तः सम्मदो हर्षो येन, वन्दारुभिः स्तुतिपाठकैः संस्तुतं, 'वदिङ् स्तुत्यभिवादयोः' "शृवन्द्योरारुः"। अश्वराजन्य-हास्तिनां समूहेन आढ्यं प्रभूतं, "विकारसङ्घ—" इत्यादिना समूहार्थे अश्वादीयः, राजन्यहस्तिभ्यां कण्। राज्ञा सह विद्यमानं सराजं राजसहितम् अनवशिष्टं युगपद्वा इत्यर्थः। 'वः कमासौप्ये' इति साकल्ये यौगपद्ये वा अव्ययीभावः, "अनः" इत्यनेनाप्रत्ययः, "सहः सोऽकाले" इति सः, अध्वानमनुगच्छति "ढघे कात्—" इति ईनः, "मनूवजान्—" इत्यादिना नलोपा-भावः॥४८॥ भ० म०

विशङ्कटो वक्षसि बाणपाणिः
सम्पन्नतालद्वयसः पुरस्तात्।
भीष्मो धनुष्मानुपजान्वरत्नि-
रैति स्म रामं पथि जामदग्न्यः ॥ ५० ॥

विशङ्कट इति।—एवमस्य गच्छतः पथि मार्गे, सप्तम्यां "अस्य टेर्लोपः" पुरस्तादग्रतः, "अस्ताति च" इति पूर्वस्य पुरादेशः। रामो जामदग्न्यः जमदग्नेरपत्यं रामोऽयं, गर्गादिपाठात् यञ, स ऐति स्म आगतवान्, आङ्पूर्वादिणो लट् "एत्येधत्यूठ्सु" इति वृद्धिः। विशङ्कटो वक्षसि विशाल उरसि "वेः शालच्छङ्कटचौ", इति शङ्कटच्। बाणः पाणावस्येति बाणपाणिः, "प्रह-रणार्थेभ्यः" इत्यादिना सप्तम्यन्तस्य परनिपातः। सम्पन्नो निष्पन्नो यस्तालद्वयः स प्रमाणं यस्य स तथोक्तः, "प्रमाणे द्वयसच्"। भीयते अस्मादिति भीष्मः 'भियः षुग् वा' इति औणादिको मक्प्रत्ययः वा षुगागमश्च। "भीमादयोऽपादाने" इत्यपादाने साधुः। धनुष्मान् धनुषा युक्तः, संसर्गे मतुप्। जानुनोः समीपमुपजानु, सामीप्येऽव्ययीभावः, उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः ॥५०॥ ज० म०

विशङ्कट इति।—अथ जामदग्न्यः परशुरामः पुरस्तात् पूर्वस्यां दिशि अग्रतो वा पथि रामम् ऐति स्म आगतः। जमदग्नेरपत्यमिति गर्गादित्वात् यञ्, पुरस्तादिति "दिक्शब्दात् दिग्देशकाले स्तात्" इति स्तात्, "पूर्वाधरावरा—" इति पुरादेशः। वक्षसि विशङ्कटो विशालः, बाणः पाणौ यस्य बाणयुतः पाणि-र्यस्येति वा, सम्पन्नो विशालो यस्तालद्वयः स परिमाणं यस्य "दघ्नमात्रद्वयसच्प्रमाणे" इति द्वयसः, बिभेत्यस्मात् भीष्मो निपात-नात्, धनुष्मान् प्रशस्तधनुर्युक्तः, मतुरस्त्यर्थे, जानुनोः समीप-

उच्चैरसौ राघवमाह्वतेदं *
धनुः सबाणं कुरु माऽतियासीः ।
पराक्रमज्ञः प्रियसन्ततिस्तं
नम्रः क्षितीन्द्रोऽनुनिनीषुरूचे ॥ ५१ ॥

मुपजानु तत्रारत्निर्यस्य, दीर्घबाहुत्वात्, "अरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । "रत्नयस्तौ स्त्रियौ हस्तौ बद्धमुष्टितताङ्गुली" इत्यमरमाला ॥५०॥ भ० म०

उच्चैरिति ।—उच्चैर्महता ध्वनिना राघवं दाशरथिम् एवं वक्ष्यमाणमाह्वत आह्वतवान्, "स्पर्द्धायामाङः" इत्यात्मनेपदम्, "आत्मनेपदेष्वन्यतरस्याम्" इति च्लेरङ् । धनुः सबाणं कुरु धनुषि बाणमारोप्य युद्धाय सज्जीभवेत्यर्थः । माऽतियासीः माऽतिक्रम्य गमनं कार्षीः, यातेर्माङि लुङ् अड्भावः, "यम-रम-नमातां सक् च" इति इट्, "इट ईटि" इति सिचो लोपः । अथ क्षितीन्द्रो दशरथः तमूचे "ब्रुवो वचिः", आदेशस्य स्थानिवद्भावेन कर्त्तुः क्रियाफलविवक्षायां तङ्, वचेः परस्मैपदित्वात् "वचि-स्वपि—"इत्यादिना सम्प्रसारणम् । पराक्रमज्ञः यतस्तस्य पराक्रमं जानाति राजा, प्रियसन्ततिः प्रिया सन्ततिर्यस्य, रामे व्यापादिते मा भूत् सन्तानविच्छेद इति नम्रः प्रणतो भूत्वा अनुनिनीषुः अनुनेतुमिच्छुः ॥ ५१ ॥ ज० म०

उच्चैरिति ।—असौ परशुरामः उच्चैर्महाशब्देन राघवं राममाह्वत स्पर्द्धयामास, आह्वानं कृतवान् । "स्पर्द्धायामाङः" इति ह्वेञो मं "वत्यय्यख्यालिप—"इति ङः । इदं मदीयं धनुः सबाणं कुरु अनेन बलं ज्ञात्वा युद्धं करिष्यामि, एतावतैव पराजितोऽस्मीमिति भावः । अन्ये तु इदं त्वदीयं धनुः सबाणं कुरु धनुषि बाणमारोप्य

* "आह्वतेदम्" इत्यत्र "आह्वतैवम्" इति जयमङ्गलासम्मतः पाठः ।

अनेकशो निर्जितराजकस्त्वं
पितॄनताप्सीर्नृपरक्ततोयैः।
सङ्क्षिप्य संरम्भमसद्विपक्षं
काऽऽस्थाऽर्भकेऽस्मिंस्तव राम! रामे? ॥५२॥

युद्धाय सक्षोभवेत्यर्थ इत्याहुः। इदमिति इस्तामादेष्टत्वादुक्तम्। माऽतियासीः माऽतिक्रम्य गच्छ, मेत्यव्ययं निषेधे, तद्योगेऽम्-निषेध,"यमरमनम—"इति इम्-सनौ। अथ क्षितीन्द्रो दशरथस्तं जामदग्न्यमूचे, "वचोऽर" इति ब्रूञो वचादेशः, स्थानिवद्भावात् कर्त्तुः क्रियाफलवत्त्वविवक्षायां मं, "व्यथग्रह—"इति खोर्जि, "ग्रहस्वपायोः—"इति प्रकृतिर्जिः। स किम्भूतः? पराक्रमज्ञः परशुरामस्य पराक्रमं जानाति, प्रिया सन्ततिः सन्तानो यस्य प्रियसन्तानः, अत एव नम्रः प्रणतः सन् अनुनिनीषुः अनुनेतुमिच्छुः॥ ५१॥ भ० म०

तदनुनयमाह, अनेकश इत्यादि।—संरम्भं क्रोधं सङ्क्षिप्य उपसंहर, क्षिपेः लोटि मध्यमैकवचने रूपं श्यन्। एकमेकमिति विग्रह्य "बह्वेकवचनाच्च—"इति शस्, पश्चाद्बहुब्रीहिसमासः, अनेकशोऽनेकवारमिति क्रियाविशेषणमेतत्, निर्जितं पराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः,"गोत्रोक्ष—"इत्यादिना वुञ्, त्वं पुनः पितॄनताप्सीः प्रीणितवानसि। कैः? नृपरक्ततोयैः, 'तृप प्रीणने' इत्यस्माल्लुङ् सिच्, हलन्तलक्षणा वृद्धिः। असद्विपक्षम् असन्नविद्यमानो विपक्षो यस्मिन् संरम्भे, निर्जितराजकत्वात्, रामो विपक्ष इति चेदाह, काऽऽस्थाऽर्भकेऽस्मिंस्तव राम! रामे हे परशुराम! अर्भके बालके रामे तव का आस्था? क आदरोऽस्ति? नैवेत्यभिप्रायः॥ ५२॥ जं० म०

अनेकश इति,—हे राम! हे परशुराम! संरम्भं क्रोधं

अजीगणद्दाशरथं न वाक्यं
यदा * स दर्पेण तदा कुमारः।
धनुर्व्यकार्षीत् गुरुबाणगर्भं
लोकानलावीद्विजितांश्च तस्य ॥ ५३ ॥

सङ्क्षिप्य संहर, 'ष्णप्यौ नुदि', अनेकवारं निर्जितं राजकं येन तथाभूतस्त्वम्, अतः क्रोधो न युक्तः। नृपाणां रक्तानि रुधिराण्येव तोयानि तैस्त्वं पितॄन् अतार्प्सीः प्रीणितवान्, एकविंशतिवारान् निःक्षत्रीकृत्य तद्रक्तैः पितृतर्पणकरणं तस्य प्रसिद्धम्। 'तृप तृप प्रीणने' "कृषमृषस्पृशतृप—" इति विकल्पात् सिः। "वेसूदित्—" इति वधादित्वाद्विकल्पेमभावपक्षे "व्रजवद—" इति व्रिः। संरम्भं कीदृशम्? असन्नवर्त्तमानो विपक्षो यत्र तादृशं, निर्जित-राजकत्वात्, रामो विपक्ष इति चेदाह, अस्मिन् मत्पुत्त्रे रामे अर्भके बालके तव का आस्था? क आदरो यत्नो वा? न काऽपीति भावः। "आस्था चालम्बनास्थानयत्नापेक्षासु कथ्यते" इति विश्वः। रामपदद्वयेन नामसाम्यादपि क्रोधो नोचित इति व्यज्यते। अनेकश एकमेकम् इति विगृह्य "सङ्ख्यैकार्थाद्वीप्सायाम्" इति शस्, पश्चान्नञ्समासः। अनेकस्यापि सङ्ख्यावाचित्वात् तत एव शस् इत्येके। राजकमिति "विकारसङ्घ—" इति राज्ञः समूहार्थे कण् ॥५२॥ भ० म०

अजीगणदिति।—दाशरथं दशरथस्येदं दाशरथं, "तस्येदम्" इत्यण्, वाक्यं वचनं यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् न गणितवान्, 'गण सङ्ख्याने' इत्यस्यादन्तत्वान्न वृद्धिः, "चङि" इति द्विवचनम्, "ई च गणः" इति अभ्यासस्ये-कारः; तदा कुमारो रामो धनुर्व्यकार्षीत् आकृष्टवान्,

* 'स दर्पेण' इत्यत्र "स्वदर्पेण" इति जयमङ्गलानुमतः पाठः।

जिते नृपारौ सुमनोभवन्ति
शब्दायमानान्यशनैरशङ्कम् ।
वृद्धस्य राज्ञोऽनुमते बलानि
जगाहिरेऽनेकमुखानि मार्गान् ॥ ५४ ॥

'कृष आकर्षणे' 'स्पृशमृश—'इत्यादिनोपसङ्ख्यानेन सिचिपक्षे रूपं, हलन्तलक्षणा वृद्धिः, "षढोः कः सि" इति कत्वम्। कृतदारकर्माऽपि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते। गर्भयतीति गर्भः, गुरुर्वाणो गर्भो यस्य धनुषः। लोकांश्च स्वप्रभावाद्विजितान् तस्य परशुरामस्य अलावीत् छिन्नवान्। लुनातेर्लुङि सिचि वृद्धौ रूपम्। "समुच्छ्रियन्तामस्य लोकाः" इति अमोघमस्त्रं मुक्तवानित्यर्थः, ततः प्रश्चात तस्य सर्वं तेजोऽपहृतम् ॥५३॥ ज० म०

अजीगणदिति।—यदा स जामदग्न्यः दाशरथं वाक्यं दर्पेण दर्पात् न अजीगणत् न गणितवान्, दशरथस्येदमिति "विकारसङ्घ—"इत्यादिना ण्णः, 'गणत्र सङ्ख्याने' "वेङ् गणकथः खेर्ङः" इति खेरीङ्। तदा कुमारो युवराजो बालको रामो धनुर्व्यकार्क्षीत् आकृष्टवान्, 'कृषो त्वाकर्षे' "कृषमृष—" इति सिः, "व्रजवद—" इति त्रिः, "षढोः कः से" इति कः, "क्विलात्—" इति षः। कीदृशं धनुः ? गुरुर्महान् वाणो गर्भ इव मध्यवर्त्ती यत्र, बाणो गर्भे यस्येति वा, गुर्विति बाणविशेषणं वा। ततस्तस्य जामदग्न्यस्य विजितान् वशीकृतान् लोकान् सर्वानलावीत् छिन्नवान्, तत्र गमनं निषिद्धवानित्यर्थः। 'लुञ गि च्छिदि' टौ ॥ ५३ ॥ भ० म०

जिते इति।—जिते नृपारौ परशुरामे बलानि सैन्यानि

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं
द्रवयदतिरयेण प्राप्तमुर्वीविभागम्।
क्रमरहितमचेतन्नीरजोकारितक्ष्मां
बलमुपहितशोभां तूर्णमायादयोध्याम् ॥५५॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयो नाम
द्वितीयः सर्गः ॥ २ ॥

मार्गान् पथः जगाहिरे अवगाहन्ते, वृद्धस्य राज्ञो दशरथस्यानुमते सति गच्छन्तीति। जामदग्न्यभयादसुमनांसि सुमनांसि सन्ति सुमनोभवन्ति बलानि, "अरुमनः—"इत्यादिना च्व्यन्त्यस्य लोपे "अस्य च्वौ" इतीत्वे रूपम्। शब्दायमानानि अशनैः सुष्ठु शब्दं कुर्वाणानि, एवं जितस्तथा जितो नृपारिरिति, "शब्दवैर—"इत्यादिना क्यङ्, अशङ्कं निर्भयं जगाहिरे इति क्रियाविशेषणम्। अनेकमुखानि पृथग्भूतानि, पूर्वं भयेन बहुलीभूतत्वादनीकानां बहुवचनमिति ॥ ५४ ॥ ज० म०

जित इति।—नृपाणाम् अरौ परशुरामे रामेण जिते सति वृद्धस्य राज्ञो दशरथस्यानुमते अनुमतौ सत्यां बलानि सैन्यानि अशङ्कं यथा स्यात्तथा मार्गान् पथो जगाहिरे आक्रान्तवन्ति, 'गाहृङ् विलोड़'। कीदृशानि? पूर्वं जामदग्न्यभयात् असुमनांसि सुमनांसि भवन्ति, "च्विः अभ्वस्तभूततद्भावे—"इति च्विः, "मनसश्च:—"इति सलोपे अकारस्य ईः। अशनैरुच्चैः शब्दायमानानि जयशब्दं कुर्वाणानि, "शब्दसुखकष्टादे—"इति क्यङ्, "घ्रोऽकृद्यकरे" इति दीर्घः। अनेकमुखानि पूर्वं भयात् वर्तुलीभूय सम्प्रति पृथग्भूतानि ॥ ५४ ॥ भ० म०

अथेति।—अथेत्यानन्तर्ये, बलं दाशरथं तूर्णं शीघ्रं,

"क्षुभमत्वर—" इत्यादिना पक्षे इड्भावः, "ज्वरत्वर—"इति वकारोपधयोरूट्, "रदाभ्याम्—" इति नत्वम्, अयोध्यामायात् आगतम्, आङ्पूर्वाद्यातेर्लङि रूपम् । पुरुमंहान् जवः वेगः तेन योगात्, पूर्यते वर्द्धते इति पुरुः, 'कुर्भ्रश्च' इत्यधिकृत्य 'पृभिदिव्यधि—' इत्यादिना कुप्रत्ययः, दूरसंस्थं दूरे सन्तिष्ठत इति कः, उर्वीविभागं नेदयत् अन्तिकं कुर्वत्, अन्तिकशब्दात् समीपवाचिनः 'तत्करोति—' इति णिच्, इष्ठवद्भावात् "अन्तिकबाढयोर्नेदसाधौ" इति नेदादेशः, पश्चाल्लट् शतरि शप् अयादेशः, प्राप्तं विषयीकृतश्च उर्वीविभागं भूविभागम् अतिरयेण अतिवेगेन दवयत् दूरीकुर्वत् पश्चाद्भागेन, दूरशब्दात् पूर्ववण्णिचि इष्ठवद्भावे च "स्थूलदूर—"इत्यादिना यणादिपरलोपः पूर्वस्य च गुणः,पश्चात्तथा एव लडादयः,क्लमरहितम् अपगतश्रमम् अचेतत् कियद्दूरमागतोऽहमित्यबुध्यमानं, 'चिती संज्ञाने' इत्येतस्य शतरि रूपम्, अनीरजा नीरजाः कारितेति "अरुर्मन—" इत्यादिना च्वावन्त्यलोपः, "अस्य च्वौ" इतीत्वं, नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायां तां सिक्तसम्मृष्टभूतलामित्यर्थः, उपहितशोभां छत्रध्वजपताकाभिरारोपितशोभाम् ॥ ५५ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे सीतापरिणयो नाम द्वितीयः सर्गः ॥ २ ॥

अथेति।—अथानन्तरं बलं दशरथसैन्यं तूर्णं शीघ्रम् अयोध्याम् आयात्, आङ्पूर्वाद्यातेर्लङि । त्वरतेः क्ते "श्विवावमवज्वर—" इति ऊठा सह वस्य ऊट्, "लूल्वाद्यो—" इति क्तस्य नत्वम् । कीदृशम् ? पुरुजवयोगात् प्रचुरजवयोगात् दूरसंस्थं नेदयदन्तिकं कुर्वत्, "णेः कृत्याख्याने णिः" "बाढान्तिक—" इति नेदादेशः ; अतिरयेण अतिवेगेन प्राप्तम् उर्वीविभागं दवयत् दरं कुर्वत्, णिः दवादेशः ; क्लमरहितम्

## तृतीयः सर्गः ।

वधेन सङ्ख्ये पिशिताशनानां
क्षत्रान्तकस्याभिभवेन चैव ।
आढ्यम्भविष्णुर्यशसा कुमारः
प्रियम्भविष्णुर्न स यस्य नासीत् ॥ १ ॥

---

अतिहर्षात् अपगतश्रमम्, अत एव अचेतत् कियद्दूरमागतमित्यजानत्, 'चिती संज्ञाने' शब्दः । कीदृशीमयोध्याम? अनीरजा नीरजाः कारिता निर्धूलीकारिता क्ष्मा भूमिर्यस्यां, सिक्तसम्मृष्टभूतलामित्यर्थः, "मनश्चतुः—" इति च्वौ सलोपः, उपहितशोभां ध्वजपताकादिभिः प्रापितदीप्तिम् ॥५५॥ भ० म०

इति भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां
श्रीरामपरिणयो नाम द्वितीयः सर्गः ॥ २ ॥

---

वधेनेति ।—सङ्ख्ये सङ्ग्रामे पिशिताशनानां राक्षसानां, पिशितं मांसम् अशनं येषामिति तेषां, वधेन हननेन, "हनश्च वधः" इति अप्प्रत्यये वधादेशः, कृद्योगे कर्मणि षष्ठी, क्षत्रान्तकस्य परशुरामस्य अभिभवेन पराजयेन च, "ऋदोरप्", चैवशब्दो निपातसमुदायः समुच्चये, तेन हेतुभूतेन यशसा आढ्यम्भविष्णुः अनाढ्यः आढ्यो भूतः, "कर्त्तरि भुवः" इति खिष्णुच्, "अरुर्द्विषत्—" इति मुम्, कुमारो यस्य न प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियो भूतः स न आसीत् न बभूव ॥ १ ॥ ज० म०

वधेनेति ।—सङ्ख्ये युद्धे पिशिताशनानां राक्षसानां वधेन

ततः सुचेतीकृतपौरभृत्यो
राज्येऽभिषेक्ष्ये सुतमित्यनोच्चैः।
आघोषयन् भूमिपतिः समस्तं
भूयोऽपि लोकं सुमनीचकार ॥ २ ॥

क्षत्रियाणामन्तकस्य परशुरामस्य अभिभवेन च हेतुना यशसा आढ्यम्भविष्णुः समृद्धो भवन् कुमारो रामो यस्य न प्रियम्भविष्णुः स नासीदेव, सर्वस्यैव प्रिय इत्यर्थः। एवशब्दो नासीदित्यत्रान्वितः, चैवशब्दः समुच्चये वा। अनाढ्यः आढ्यो भवति इति प्रागप्रियोऽपि भूत्वा पश्चात् प्रियो भवति. "भुवो घे खिष्णुखुकञौ" इति घे खिष्णुः, "खित्यव्याजरुष—"इति मन्, अस्त्येर्यां "कदाद्यस्ति—" इति ईम् ॥ १ ॥ भ० म०

तत इति।—ततः प्रियम्भविष्णुतायाः अनन्तरं भूमिपतिर्दशरथो लोकं सुमनीचकार, किमयं सम्यक् पालयिष्यति न वेति असुचेतसः पौरा भृत्याश्च जाताः, ते सम्यक् पालनात् सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः,भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार। कथम्? इत्याह—राज्ये राजकर्मणि पालनलक्षणे सुतं रामम् अभिषेक्ष्ये तदभिषिक्तं करिष्यामीति, सिचेरुभयपदित्वात्तङ्; अनोच्चैर्महता ध्वनिना आघोषयन् घोषणां कारयन्। सुचेतो-सुमनोशब्दौ "अरुर्मन—" इत्यादिना साधू ॥२॥ ज० म०

तत इति।—ततोऽनन्तरम् अहं राज्ये राजकर्मणि सुतमभिषेक्ष्ये अभिषिक्तं करिष्ये इति अनोच्चैरुच्चैराघोषयन् भूमिपतिर्दशरथः समस्तं लोकं भूयः पुनरपि सुमनीचकार असुमनसं सुमनसं कृतवान्। कीदृशः? असुचेतसः सुचेतसः

आदित्सदादीप्तकृशानुकल्पं
सिंहासनं तस्य सपादपीठम् ।
सन्तप्तचामीकरवल्गुवज्रं
विभागविन्यस्तमहार्घरत्नम् ॥ ३ ॥

कृताः पौरा भृत्याश्च येन स तथा, अभिषेककाले किमयं सम्यक् परिपालयिष्यति न वेत्याशङ्कया पौरभृत्यानामसुचेतस्त्वमासीत्, सम्यक् पालनात् तेषां सुचेतस्त्वं कृतं, रामस्य प्रियम्भविष्णुतया तदभिषेकमदृष्ट्वा पुनः पुनरसुमना लोक आसीत्, रामाभिषेकघोषणया पुनः पुनः सुमनसं चकार, सुचेतो-सुमनोशब्दौ पूर्ववत् "मनसश्च—" इत्यादिना सिद्धौ, 'चिच परीञ्च् चरणे' "चुङ्—" इति कुङ् ॥ २ ॥ भ० म०

आदित्सदिति ।—तस्य रामस्य सिंहासनमादित्सत् आदिष्टवान् एवंविधं कारयेति, दिशिः स्वरितेतो लुङि "शल इगुपधात् —" इत्यादिना च्लेः क्सः, अकर्त्रगामिक्रियाफलत्वात्तिप् । आदीप्तकृशानुकल्पं ज्वलिताग्नितुल्यं, तस्य कारणमाह, सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वज्राणि यस्मिन्, तथा विभागेषु विन्यस्तानि महार्घाणि रत्नानि पद्मरागादीनि यत्र, सपादपीठं सह पादपीठेन ॥ ३ ॥ ज० म०

आदित्सदिति ।—दशरथस्तस्य रामस्य सिंहासनम् आदिक्षत् आदिष्टवान्, 'दिशो अश् अतिसर्जने' टी. "इशमोऽनिमित्रुड—" इति मक्, "शच्छ्राज—"इति षङ्, "षढोः कः से"इति कः । कीदृशम् ? सम्यक् ज्वलिताग्नितुल्यं, "त्यादेशोने —" इति कल्पः ; पादपीठेन सहितम, अग्नितुल्यस्वर्णशोभितहीरकं, विशिष्टदेशार्पितमहामूल्यपद्मरागादिकम् ॥३॥ भ०म०

प्रास्थापयत् पूगकृतान् स्वपोषं
पुष्टान् प्रयत्नादृढगात्रबन्धान् ।
सभर्मकुम्भान् पुरुषान् समन्तात्
पत्काषिणस्तीर्थजलार्थमाशु ॥ ४ ॥

---

प्रास्थापयदिति ।—तीर्थजलार्थं पुरुषान् प्रयत्नात् आदरेण समन्तात् सर्वासु दिक्षु आशु शीघ्रं प्रास्थापयत् प्राहिणोत् । प्रपूर्वस्तिष्ठतिर्गमने वर्त्तते, तस्य हेतुमण्ण्यन्तस्य लङि रूपम् । पूगकृतान् अपूगाः पूगाः कृता इति 'श्रेण्यादिषु च्व्यर्थवचनम्' इति समासः, सङ्घीकृतानित्यर्थः । स्वपोषं पुष्टान् "स्वे पुषः" इति णमुल्, "अमैवाव्ययेन" इति समासः यथाविध्यनुप्रयोगश्च । दृढो गात्रबन्धो येषां तान् संयतकायान्, महाभारोद्वहनक्षमत्वात्, सभर्मकुम्भान् ससुवर्णकलसान्, पत्काषिणः पादौ कषितं हिंसितं शीलं येषामिति "सुप्यजातौ णिनिः—", "हिमकाषिहतिषु च" इति पदादेशः, पदातीनित्यर्थः । आश्विति 'कृवापाजि—' इत्यादिना उण् ॥ ४ ॥ ज० म०

प्रास्थापयदिति ।—दशरथस्तीर्थजलार्थं समन्तात् सर्वासु दिक्षु आशु शीघ्रं पुरुषान् प्रयत्नात् आदरात् प्रास्थापयत्, प्रपूर्वस्था-धातुर्गत्यर्थः, णौ, "ञि: प्रेरणे" "क्रीङ्जी—"इति पुक् । पूगकृतान् अभिधानात् अपूगाः पूगाः कृता इति च्व्यर्थे समासः, सङ्घीकृता-नित्यर्थः । स्वपोषं यथा स्यात्तथा पुष्टान्, स्वाना ज्ञातीना पोषो यत्र पोषणक्रियायां, पोषो घञन्तः, 'गतार्थात् पोषणं, तदनु-प्रयोगश्च' इति पाणिनीयादयः, तस्मात् स्वेन धनेन पुष्टानित्यर्थः । दृढो गात्राणां बन्धो येषां भारोद्वहनक्षमत्वात्, स्वर्णकलस-सहितान्, पादकषणशीलान्, 'कष वधे' ग्रहादित्वाणिन्, पाद-

* उक्षाम्प्रचक्रुर्नगरस्य मार्गान्
ध्वजान् बबन्धुर्मुमुचुः स्वधूपान्।
दिशश्च पुष्पैश्चकरुर्विचित्रै-
रर्थेषु राज्ञा निपुणा नियुक्ताः॥ ५॥

चारिण इत्यर्थः। अत्र 'पादस्य पदादेशः' इति पाणिनीयादयः, स्वमते पद्-शब्दोऽस्ति। "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः। केन जलेन उभ्यते पूर्य्यते इति कुम्भो निपातनात्॥४॥ भ० म०

उक्षानिति।—ये निपुणा अर्थेषु कार्य्येषु राज्ञा दशरथेन नियुक्ताः अधिकृताः, ते नगरस्य मार्गान् पथः उक्षान् सेकवतः प्रचक्रुः। उक्षणमुक्षा, "गुरोश्च हलः" इत्यकारः, सा विद्यते येषामिति "अर्शआदिभ्योऽच्"। "इजादेश्च गुरुमतः—" इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयोगो न घटते, "कृञ् चानुप्रयुज्यते" इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात्। ध्वजान् बबन्धुः उच्छ्रायितवन्तः। मुमुचुः स्वधूपान् आकाशे घटिकादिभिर्धूपान् मुमुचुः प्रमुक्तवन्तः। दिशश्च पुष्पैश्चकरुः छादितवन्तः, 'कॄ विक्षेपे' इत्यस्य लिटि "ऋच्छत्यॄताम्" इति गुणः। विचित्रैः नानाप्रकारैः॥५॥ ज० म०

उक्षामिति।—अर्थेषु प्रयोजनेषु राज्ञा नियुक्ता निपुणाः कर्मकुशला जना नगरस्य मार्गान् उक्षाम्प्रचक्रुः सिक्तवन्तः। 'उक्ष सेचने' "इजादि—"इत्याम्, "आमः"इति लुक्। "कृञ्चानुप्रयुज्यते लिटि" इति सूत्रेणाम इति पञ्चम्यर्थेष्टसिद्धौ अनुग्रहणम् उपसर्गक्रियाविशेषणाव्यवधानेऽपि तदनुप्रयोगज्ञापनार्थमिति रामानन्दाचार्य्येण व्याख्यातं तेनात्र तेनैव सोपसर्गस्य कृञोऽनुप्रयोगः। क्रमदीश्वरेण तु

* "उक्षान् प्रचक्रुः" इति जयमङ्गलासम्मतः पाठः।

मातामहावासमुपेयिवांसं
मोहादपृष्ट्वा भरतं तदानीम्।
तत् कैकयी सोढुमशक्नुवाना
ववार रामस्य वनप्रयाणम्॥ ६॥

'सप्तमादिक्रमव्यस्तमिश्च' इति सूत्रं ज्ञात्वा अयमेव श्लोको निदर्शितः। केचित्तु नगरस्य उच्चां सेकं प्रचक्रुः, भग्नान् मार्गान् ध्वजांश्च बबन्धुरित्याहुः। जयमङ्गलादिभिस्तु उच्चानिति पठित्वा उच्चत्वमुच्चा सा अस्त्येषामिति अर्शआदित्वादच् इति व्याख्यातम्। ध्वजान् बबन्धुः उत्थापितवन्तः, खे आकाशे धूपान् मुमुचुः त्यक्तवन्तः, पुष्पैर्दिशश्चकरुः आच्छादितवन्तः। 'कॄ श विक्षेपे' "ऋतो णुः कित् ण्याम्" इति णुः॥५॥ भ० म०

मातामहेति।—तत् पूर्वोक्तमभिषेकसंविधानं सोढुमशक्नुवाना असहमाना कैकयी रामस्य वनप्रयाणं ववार प्रार्थितवती, राज्ञ इत्यर्थात्। सहेः शक्नोतावुपपदे "शक-धृष—" इत्यादिना तुमुन्, तत्र नञा शक्त्यर्थस्य प्रतिषेधेऽपि न दोषः, प्रतिषेधस्य बहिरङ्गत्वात्। शक्नोतेः परस्मैपदित्वात् शानज् नास्ति, "ताच्छील्यवयोवचन—" इत्यादिना चानश्, स्वादित्वाच्छ्नुः, "अचि श्नुधातु—" इत्यादिना उवङ्। किं कृत्वेत्याह—तदानीं प्रार्थनाकाले देशान्तरावस्थितत्वात् 'किमेवं क्रियते न वा?' इति न भरतं पृष्टवती। देशान्तरावस्थितिं दर्शयन्नाह, मातामहावासमिति।—मातुः पिता मातामहः, "पितृव्य-मातुल—" इत्यादिना निपातनात् डामहच्, आवासः निलयम्, आवसन्त्यस्मिन्निति अधिकरणे घञ्। उपेयिवांसम् "उपेयिवाननाश्वाननूचानश्च" इत्यादिना निपातितः। मोहादज्ञानात् दूतप्रेषणेनापृष्ट्वा। रामस्येति कर्त्तरि षष्ठी। वनाय

कर्णेजपैराहितराज्यलोभा
स्त्रैणेन नीता विकृतिं लघिम्ना।

प्रयाणं गमनमिति चतुर्थीति योगविभागात् समासः। "गत्यर्थकर्मणि—" इत्यादिना चतुर्थी। परत्वात् कृल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न, पुनर्द्वितीयाग्रहणात् परामपि षष्ठीं बाधित्वा द्वितीयैव यथा स्यादिति। यद्येवं द्वितीयैव स्यात् न चतुर्थी, नैष दोषः, द्वितीयाग्रहणस्योपलक्षणार्थत्वात्। तथाच वृत्तावुभयमुक्तं—"ग्रामं गन्ता ग्रामाय गन्ता" इति॥६॥ ज० म०

मातामहेति।—तदानीं तस्मिन् समये तत् पूर्वोक्तमभिषेकविधानं सोढुमशक्नुवाना असमर्था कैकयी मोहादज्ञानात् भरतम् अपृष्ट्वा रामस्य वनप्रयाणं ववार राजानं प्रार्थितवती। भरतं किम्भूतम्? मातामहावासमुपेयिवांसम् उपगतम्, अपृष्ट्वेत्यत्र हेतुरयम्, एतेन भरतदोषपरिहारः कृतः। 'मातृपितृभ्यां तत्पितरि डामहट्' निपातनात्। आवसन्त्यस्मिन् आवासो गृहम्, अधिकरणे घञ्। उपपूर्वादिणः क्वसुः, "वसोर्वसेकाजाद्घसाम्—"इति इम् "खेः किति घे" इति घेः, "यिनोऽच्यणौ" इति यादेशः, सहेस्तुमि "हो ढो भो" इति हस्य ढः, "ढभात्तथोः—" इति तस्य धः, "ष्टुभिः—" इति धस्य ढः। "सहवहोदो ढि" इति अत ओत्वं, "ढोर्ढि—" इति ढलोपः। 'शक्लिव शक्नो' "शक्तिवयस्ताच्छील्ये—" इति शतुः शानः। वनाय वनस्य वा प्रयाणं वनप्रयाणं, "गत्यर्थमन्यढे—" इति चतुर्थी। "ढघे कृति—" इति कृत्प्रयोगात् ढे षो. अनयोर्विवक्षाधीनत्वात् चतुर्थ्या षष्ठ्या वा विग्रहः॥६॥ भ० म०

कर्ण इति।—कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः, "स्तम्बकर्णयोः—" इत्यच्, "तत्पुरुषे कृति बहुलम्"

रामप्रवासे व्यमृशन्न दोषं
जनापवादं सनरेन्द्रमृत्युम् ॥ ७ ॥
वसूनि देशांश्च निवर्त्तयिष्यन्
रामं नृपः सङ्गिरमाण एव ।

इति सप्तम्या अलुक्, तेराहितः आरोपितो राज्यलोभो यस्याः सा, एवं स्त्रैणेन स्त्रिया अयं, "स्त्रीपुंसाभ्यां नञ्स्नञौ—" इति नञ्। लघोर्भावो लघिमा, "पृथ्वादिभ्यः—" इत्यादिना इमनिच् टिलोपः, तेन, विक्रतिम् अन्यथात्वं नीता प्रापिता कैकयी राम-प्रवासे सति दोषं न व्यमृशत् आलोचितवती,'मृश आमर्शने' इति तौदादिकस्य लङि रूपम्। किंस्वरूपं दोषम् ? जनापवादं लोक-वैमुख्यं, राज्यार्हो ज्येष्ठः पुत्त्रोऽनया प्रव्राजित इति। नरेन्द्रस्य दशरथस्य मृत्युना सह वर्त्तमानम् ॥ ७ ॥ ज० म०

कर्णेजपैरिति।—कैकयी रामप्रवासे जनापवादरूपं दोषं न व्यमृशत् नालोचितवती, 'मृश श्रौ मृशि'। राजार्हो ज्येष्ठोऽनया निष्कासित इति लोकापवादः। किम्भूतम् ? नरेन्द्रस्य दशरथस्य मृत्युना सहितं, दोषानालोचने हेतुगर्भविशेषण-माह, कर्णेजपैः पिशुनैर्मन्थरादिभिराहित आरोपितो राज्यस्य लोभो यस्याः। कर्णे जपन्ति इति पचादित्वादच, अभिधानात् सप्तम्या अलुक्। परकीयबुद्ध्या दोषकर्तृत्वे हेतुमाह, स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना लघुत्वेन विक्रतिं प्रकृतेरन्यथात्वं नीता प्रापिता। स्त्रिया अयं स्त्रैणः, "नञ् पुंस्त्रियोः" इति नञ्। लघोर्भावो लघिमा, "गुणादिमन् भावे" इति इमन्. "ओमंश्च डित्—" इति डित्त्वे टेर्लोपः ॥ ७ ॥ भ० म०

वसूनीति।—रामं निवर्त्तयिष्यन् रामं निवर्त्तयितुं वसूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति

केचिन्निनिन्दुर्नृपमप्रशान्तं
विचुक्रुशुः केचन सास्रमुच्चैः।
ऊचुस्तथाऽन्ये भरतस्य मायां
धिक् कैकयीमित्यपरो जगाद॥ १०॥

रामं प्रव्रज्या कारयितुमिच्छुः अस्य रामस्य रथेन वनाभिगमनम् आदिष्टवान्, "इषस—" इत्यादिना सक्। व्रजेः प्रेरणे अन्तात्, वनायेति "गत्यर्थमन्यढे—" इति कर्मणि चतुर्थी। श्रीपतिदत्तादयस्तु 'नित्यं कर्मणि तुमर्थयोगिनश्चतुर्थी' इत्याहुः, वनं गन्तुमित्यर्थः। कीदृशस्य रामस्य? सीतालक्ष्मणसहायस्य, सुमित्राया अपत्यम् इति बाह्वादित्वात् णिः। अनुचरतीति अनुचरः, कर्मप्रतिरूपकोऽयमनुशब्दः, तेन "इनचरगष्टक्" इति टक्। 'रेफे के स्त्री च परे' इति निर्दिशता स्त्रीपुंसयोस्तन्मात्र-कृतभेदयोरेकशेषः पुमान् भवतीति सूचितं, तेन अनुचरश्च अनुचरी च अनुचरौ, सौमित्रिसीते अनुचरौ यस्य स तथा; यद्वा—सौमित्रिसीताभ्यामनुचर्य्यते यः स तथा, "वजलनटोऽघे" इति कर्मणि अल्। प्राग्भावस्य विवक्षाधीनत्वात् सौमित्रेः प्राग्भावः, अभ्यर्हितस्य प्राग्भाव इति ये वदन्ति, तन्मते सदा सहचरत्वेन सौमित्रेरभ्यर्हितत्वम्। कीदृशेन रथेन? सुमन्त्रो नाम कश्चित् स नेत्रा नायको यस्येति तेन। "नेत्रं रथे च नाड्याञ्च नेत्रो नेतरि भेद्यवत्" इति विश्वः। सुमन्त्रो नेत्रं चक्षुरिव यस्येति केचित्। नीञः "त्रासुस्—" इति त्रः॥९॥ भ० म०

केचिदिति।—राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपं निनिन्दुः कुत्सितवन्तः। 'णिदि कुत्सायाम्'। अप्रशान्तं इहभाविऽपि स्त्रीवशम्। केचन केचित् सास्रं सबाष्पमुच्चैः सुष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः। तथा अन्ये भरतस्य मायां

गतो वनं श्वो भवितेति रामः
शोकेन देहे जनताऽतिमात्रम्।

शाठ्यमूचुः उक्तवन्तः, तत्कृतोऽयं प्रयोगो येनात्मरक्षणार्थं मातामहनिवासे स्थित इति भावः। अपरो धिक् कैकयीं, ययैव-मनुष्ठितमिति जगाद गदितवान्, 'धिगुपर्य्यादिषु त्रिषु' इति धिग्योगे द्वितीया ॥१०॥ ज० म०

केचिदिति।—राज्ञि रामस्य वनगमनमादिष्टवति सति केचिज्जना नृपं निनिन्दुः, 'णिदि कुत्सने'। कीदृशम्? अप्रशान्तं वार्द्धकेऽपि स्त्रीवशीभूतत्वात् शान्तिरहितम्। केचन सास्रं सबाष्पम् उच्चैर्महाध्वनिना विचुक्रुशुः क्रन्दितवन्तः। केचित् केचन इत्यत्र "किमः त्वयन्ताच्चिच्चनौ"इति विद्यानिवाससूत्रेण चिच्चनौ। किंवा 'असाकल्ये तु चिच्चनौ'इति कोषात् विभक्त्यन्त-किमः परमनयोः प्रयोगः। अन्ये भरतस्य मायां शाठ्यम् ऊचुः, मातरमेव राज्यलाभाय नियुज्य स्वदोषहरणार्थं मातामहगृहं गतवानिति मायार्थः। अपरः कश्चित् कैकयीं धिगिति जगाद, "धिक् समया—" इति द्वितीया, धिगिति निन्दायाम्। अपर इत्यत्र एकत्र एकवचनात् अल्प एव लोकः कैकयीं निन्दति, बहवस्तु राजानं. कैकय्याः स्त्रीत्वेन स्वभावतो मन्दबुद्धित्वं, नृपस्य तु तथाविधस्यापि स्त्रीवचनात्यतिक्रम इति महान् दोष इति व्यज्यते, तेन प्रक्रमभङ्गोऽत्र न दोषावहः ॥१०॥ भ० म०

गत इति।—श्व आगामिनि दिवसे वनं गतो रामो भवितेति ताम्। जनता जनसमूहः, "ग्रामजनबन्धु—"इत्यादिना तल्, देहे दग्धा, कर्मणि लिट्, "अत एकहल्—"इत्येत्वाभ्यास-लोपौ। गत इति भूतकालः श्वो भवितेति भविष्यत्कालेन सम्बध्यमानः साधुः, "धातुसम्बन्धे प्रत्ययाः" इति। ये तु तत्र

धीरास्तु तत्र च्युतमन्यवोऽन्ये
दधुः कुमारानुगमे मनांसि ॥ ११ ॥
प्रस्थास्यमानावुपसेदुषस्तौ
शोशुच्यमानानिदमूचतुस्तान् ।

धीराः ते च्युतमन्यवो विगतशोकाः सन्तः कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्तः. राममनुव्रजाम इति, निमित्तात् कर्मसंयोगे सप्तमीति मनांसीति कर्मणा योगात् ॥ ११ ॥ ज० म०

गत इत्यादि ।—रामः श्वो भाविदिने वनं गतो भविता इति हेतोः शोकेन जनता जनसमूहोऽत्यर्थं देहे दग्धा । दहेः कर्मणि ठो, "तृफल—"इति अत एत्वं खिलोपश्च । "जनखला-दि—" इति जनात्तः सङ्घे,स्त्रीत्वमभिधानात् । भवितेति"भवद्भूत-भव्ये—" इति भविष्यति डो, श्वः प्रभृति भविष्यत्कालमात्रे अभिधानात् श्व इति न व्यर्थं, तत्सम्बन्धात् गत इति 'धातुसम्बन्धे प्रत्ययाः' इति वचनात् भविष्यत्कालेऽपि साधुः । अन्ये तु तत्र ये धीरास्ते च्युतमन्यवो विगतशोकाः सन्तः कुमारस्य रामस्य पश्चाद्गमने मनांसि दधुर्धृतवन्तः। धाजच्या रूपम्, अनुगमे इति "ढेनार्थात्" इति सप्तमी विषयसप्तमी वा ॥ ११ ॥ भ० म०

प्रस्थास्यमानाविति ।—तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ, "समवप्रविभ्यः स्थः"इति तङ्, जनान् इदं वक्ष्यमाण-मूचतुः उक्तवन्तौ। ब्रुवीत्यर्थग्रहणात् वचेर्द्विकर्मकता, उपसेदुष-स्तान् ढौकितवतः जनान्,"भाषायां सदवस—"इत्यादिना क्वसुः। शोशुच्यमानान् अत्यर्थं शोकं कुर्वतः, भृशार्थे यङ् । किमूचतु-रित्याह, किं शोचत ? इति हे जनाः ! कस्मादस्मान् शोचत ?

किं शोचतेहाभ्युदये बतास्मान्
नियोगलाभेन पितुः कृतार्थान् ॥१२॥
असृष्ट यो यश्च भयेष्वरक्षीत्
यः सर्वदाऽस्मानपुषत् स्वपोषम् ।

परिदेवयध्वम् ? विधिविपूर्वार्थप्रकाशने लोट् । इहाभ्युदये, बतशब्दो विस्मये, अस्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम् । कुतः ? इत्याह, पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान, कृतार्थत्वादशोच्या वयमित्यर्थः ॥१२॥ ज० म०

प्रस्थास्यमानाविति ।—प्रस्थास्यमानौ गमिष्यन्तौ तौ रामलक्ष्मणौ उपसेदुषः उपसन्नान् जनानिदं वक्ष्यमाणम् ऊचतुः । किम्भूतान् ? शोशुच्यमानान् पुनः पुनरतिशयेन शोचतः, "सूत्र-सूत्र—"इत्यादिना यङ्, खिणुः । प्रस्थास्यमानावित्यत्र "प्रतिज्ञा-निर्णय—"इत्यादिना सम्पूर्वात् तिष्ठतेर्मे स्यमानः । उपसेदुष इति उपपूर्वात् सदेः "ठोपसवत्—"इति क्वसुः, "वसोर्घसि—" इतीम्, "तृफल—"इति अत एत्वं, खिलोपश्च, "वसोर्वः सेमपि—"इति उः । किमूचतुरित्याह, इहाभ्युदये वृद्धौ सत्यां किमस्मान् यूयं शोचत ? "विधिनिमन्त्रण—"इत्यत्रादिशब्दात् विधावपूर्वप्रकाशने गो । बतेति "खेदानुकम्पासन्तोषविस्मयामन्त्रितेष्वपि"इति वर्द्धमानः । अभ्युदयः कुतः ? इत्याह, पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान्, अस्मानिति 'द्वयोरप्यस्मदोः बहुत्वम्'इति परः, स्वमते वाह्याध्यात्मिकभावबहुत्वविवक्षया सीताऽन्वितत्वाद्वा ॥ १२ ॥ भ० म०

असृष्टेति ।—असृष्ट जनितवान्, सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपं, न तौदादिकस्य परस्मैपदित्वात् "सृजिदृशोः—"इत्यम् । यश्च भयेषु सत्सु अरक्षीत् पालितवान्, 'रक्ष

महोपकारस्य किमस्ति तस्य
तुच्छेन यानेन वनस्य मोक्षः ? ॥१३॥
विद्युत्प्रणाशं स वरं प्रनष्टो
यद्दोर्द्धृशोषं तृणवद्विशुष्कः ।
अर्थे दुरापे किमुत प्रवासे
न शासनेऽवास्थित यो गुरूणाम् ॥ १४ ॥

पालने' इत्यस्य लुङि रूपं, यः सर्वदा सर्वकालं, "सर्वैकान्य—" इत्यादिना दाप्रत्ययः, अस्मानपुषत् पुष्टवान्, स्वपोषं धनेनापुषत्, पुषेर्लुङि रूपं, "पुषादि—" इत्यङ्, "स्वे पुषः" इति णमुल्, "अमैवाव्ययेन" इति समासः, "यथाविध्यनुप्रयोगश्च" । तस्य पितुः सम्बन्धिनो महोपकारस्य किमस्ति मोक्षः ? प्रत्युपकारः ? नैवेति भावः, केनेत्याह, तुच्छेन असारेण वनस्य यानेन । यातेर्भावे ल्युट् । वनस्येति शेषसामान्ये षष्ठी, कर्मत्वविवक्षायास्तु षष्ठ्या गत्यर्थकर्मणि चतुर्थी बाध्यमानत्वात् ॥ १३ ॥ ज० म०

असृष्टेति ।—योऽस्मान् असृष्ट जनितवान्, 'सृजो श विसर्गे', यश्च भयेषु अरक्षीत्, रक्षेर्लुङि रूपं, यः सर्वदा सर्वकालम् अस्मान् स्वपोषम् अपुषत् स्वेन धनेन पुष्टवान्, स्वपोषम् इति "कषम् वाऽऽभीक्ष्ण्ये—" इत्यत्र वाशब्दस्य व्यवस्थावाचित्वाण्णमुल्, तदनुप्रयोगस्त्वभिधानात् । अपुषदिति "पुषादिद्युताद्—" इतिङः, सर्वदा इति "सर्वैकात् काले दा" । तस्य पितुः सम्बन्धिनो महोपकारस्य तुच्छेन लघीयसा वनस्य गमनेन किं मोक्षः प्रत्युपकारोऽस्ति ? नास्त्येवेति भावः । वनस्येति "ढवे कृति—" इति कर्मणि षष्ठी ॥ १३ ॥ भ० म०

विद्युदिति ।—अर्थे कार्यविशेषे दुरापेऽपि कृच्छ्रप्राप्येऽपि,

"ईषद्दुःसुषु—"इत्यादिना खल्, गुरूणां यच्छासनमादेशः तस्मिन् यो नावास्थित नावस्थितवान्. अवपूर्वात्तिष्ठतेर्लुङ्, "समव—" इत्यादिना तङ्, "स्थाघ्वोरिच्च" इति कित्त्वमित्वञ्च,"ह्रस्वादङ्गात्" इति सिचो लोपः। स वरं विद्युत्प्रणाशं प्रनष्टः विद्युदिवो-त्पत्त्यनन्तरमेव विनाशं गतः। "उपमाने कर्मणि च" इति चकारात् "कर्त्रोर्जीवपुरुषयोः" इत्यतः कर्त्तृग्रहणानुवृत्तौ कर्त्तृ-वाचिनि विद्युच्छब्द उपपदे णमुल्, "उपसर्गादसमासे—" इत्यादिना णत्वम्। यद्वा इति अथवा स ऊर्द्ध्वशोषं तृणवद्वि-शुष्कः "ऊर्द्ध्वे शुषि—" इत्यादिना णमुल्, उभयत्र "अमैव—" इत्यादिना समास, "यथाविध्यनुप्रयोगश्च"। किमुत प्रवासे ? * किं पुनः प्रवासविषये यच्छासनं तत्र तावदनवस्थितस्य सुतरा-मेव पूर्वोक्तं प्रयुज्यते ॥१४॥ ज० म०

विद्युदिति।—दुरापे दुःखेन प्राप्येऽर्थे प्रयोजने गुरूणां शासने आज्ञायां यो न अवास्थित न तस्थौ, स वरं विद्युत्प्रणाशं प्रनष्टो विद्युदिव उत्पत्त्यनन्तरमेव नष्टः। "चणम्—" इत्यत्र वाशब्दस्य व्यवस्थावाचित्वात् कर्त्तुरुपमानात् नशो गतार्थात् चणम्, तदनुप्रयोगस्त्वभिधानात्। "प्राग्वन्तो णः—" इति शान्तनशो णत्वम। दुरापे इति "ईषद्दुःसोः खल् भावे हे" इति खल्। अवास्थितेति अवपूर्वात्तिष्ठतेः "प्रतिज्ञानिर्णय—" इति मम्, "स्थां सिः" "स्थाद्योर्ङिष्टोमे न गुः" इति ङिः, तस्य गुणाभावः, "झमस्थात्—"इति सेर्लोपः। "शासनं राजदत्तोर्वी-लेखाज्ञाशास्त्रशास्तिषु" इति विश्वः। वरं मनागिष्टे, "देव-कल्पितजामातोर्वरः श्रेष्ठे पुनस्त्रिषु। मनागिष्टे भवेत् क्लीवमन्ये त्वाहुस्तदव्ययम्॥" इति रन्तिदेवः। यद्वा अथवार्थे, तृण-वदूर्द्ध्वशोषं विशुष्क ऊर्द्ध्वशुष्क इत्यर्थः। ऊर्द्ध्वाच्छुषेर्गतार्थाच्च तदनु-

* "किमु सुप्रवासे" इति भरतसम्मतः पाठः।

पौराः ! निवर्त्तध्वमिति न्यगादीत्
तातस्य शोकापनुदा भवेत ।
मा दर्शतान्यं भरतञ्च मत्तो
निवर्त्तयेत्याह रथं स्म सूतम् ॥१५॥

प्रयोगस्याभिधानात्, किमु सुप्रवासे ? सुकरप्रवासविषये यत् शासनं तत्र यो नावास्थित स किं पुनः ? सुतरामेव पूर्वोक्तं युक्तम् । "किमुत" इति क्वचित् पाठः ॥१४॥ भ० म०

पौरा इति ।—हे पौराः ! यथागतं निवर्त्तध्वं, विधौ लोट् ; इति तान् न्यगादीत् उक्तवान् रामः । गदेः "अतो हलादेः—" इति वृद्धिः, "इट ईटि" इति सिचो लोपः । तातस्य पितुः शोकापनुदाः शोकस्यापहर्त्तारो भवेत, "तुन्दशोकयोः—" इत्यादिना कः, भवतेर्विधौ प्रार्थनायां वा लिङ् मध्यमपुरुषबहुवचनम् । भरतञ्च मत्तो मत्तः सकाशात्, अस्मदः "पञ्चम्यास्तसिल्" "प्रत्ययोत्तरपदयोश्च" इति मदादेशः, अन्यं भरतं मा दर्शत मा द्रष्टारः स्थः, अपि तु योऽहं स एव भरतः, स च प्रतिष्ठितः राज्यं पालयिष्यतीत्येव न्यगादीत् । दृशेः "माङि लुङ्," "इरितो वा" इत्यङ्, "ऋदृशोऽङि गुणः" इत्यनेन गुणः । निवर्त्तय रथमिति सूतञ्च सुमन्त्रमाह स्म, "लट् स्मे" इति लट्, "ब्रुवः पञ्चानाम्—" इत्याहादेशः, तिपो णल् ॥ १५ ॥ ज० म०

पौरा इति ।—हे पौराः ! पुरवासिनः ! यूयं निवर्त्तध्वं निवृत्ता भवत, "विधिनिमन्त्रण—" इति विधौ लोट् । तातस्यास्मत्पितुः शोकापनुदाः शोकापहर्त्तारो यूयं भवेत, "विधिनिमन्त्रण—" इति विधौ प्रार्थनायां वा लिङ्, "लिङः सलोपोऽनन्त्यस्य" "यासुट्—" इति यासुट्, "अतो येयः" इति याशब्दस्य इत्वम् । शोकापनुदा इति "कृ-गृ-ज्ञा—" इति इगुपधत्वात् नुदेः कः । मत्तोऽन्यं भरतं यूयं मा दर्शत, अहमिव

ज्ञात्वेङ्गितैर्गत्वरतां जनाना-
मेकां शयित्वा रजनीं सपौरः ।
रक्षन् वनेवासकृताद्भयात्तान्
प्रातश्छलेनापजगाम रामः ॥ १६ ॥

सोऽपि पालयिष्यतीति ध्वनिः । 'इगिगे प्रेक्षणे' मायोगे टौ, इरनुबन्धात् "शासुलिद्युत्—" इति विकल्पितो ङः, "इश्नोर्गुः" इति गुणः । मत्त इति "अन्यारभ्य—" इति पञ्चमी, "तस् ङेः" इति तस् । बाहुल्यात् "त्यदां टेरः ङौ" इति न टेर इत्युक्तम् । रामो न्यगादीत् उक्तवान्, "हसादेः सेम—" इति वृद्धिः । त्वं रथं निवर्त्तयेति सूतं सारथिं सुमन्त्रमाह स्म । "कौ स्मेनातीते" इति स्मेन योगेऽतीते कौ । "पञ्चतिप् पञ्चणप् वा आहश्च" इति तिपो णप्, ब्रुव आहादेशः ॥१५॥ भ० म०

ज्ञात्वेति ।—निवर्त्तध्वमित्युक्ते ये तत्रानिवृत्ताः तेषां जनानां रामो गत्वरतां गमनशीलतां ज्ञात्वा, "गत्वरश्च" इति निपातितः । कैः ? इङ्गितैः अभिप्रायसूचकैश्चेष्टितैः, इङ्गतेर्भावे निष्ठा ; वनेवास इति सप्तमीति योगविभागात् समासः, "शय-वास-वासिषु—" इति विभाषा सप्तम्या अलुक् ; तेन कृतात् सिंहादिभयात् रक्षन् पालयन् तान् पौरान्, सपौरः पौरैः सह एकां रजनीं शयित्वा, "कालाध्वनोः—" इति द्वितीया । शयित्वेति "न क्त्वा सेट्" इति किंत्वप्रतिषेधात् गुणो भवति । प्रातः प्रातःकाले छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान् ॥१६॥ ज० म०

ज्ञात्वेति ।—निवर्त्तध्वमित्युक्तेऽपि तत्रानिवृत्तानामिङ्गितै-रभिप्रायबोधकैश्चेष्टितैर्गत्वरतां गमनशीलतां ज्ञात्वा रामः सपौरः पौरैः सह एकां रात्रिं शयित्वा तान् जनान् वनेवासकृतात्

अस्राचुरस्रं करुणं रुवन्तो *
मुहुर्मुहुर्न्यश्वसिषुः कवोष्णम् ।
हा राम! हा! कष्टमिति ब्रुवन्तः
पराङ्मुखैस्ते न्यवृतन्मनोभिः ॥ १७ ।

भयात् रक्षन् प्रातस्छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम। इङ्गितैरिति 'इगि गत्यां' भावे क्तः, गत्वरतामिति त्वरप् मस्य तस्य। रजनीमिति "देशाध्वकाल—" इति कर्मसंज्ञा। शयित्वेति "सेम् अक्षध—" इत्यादिना किन्निषेधात् "गुर्धूङ—" इति गुणः, वनेवास इति 'अकालवाचिनः शय-वास-वासिषु इति सप्तम्या अलुक्' इति परः, स्वमते सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितम् ॥१६॥ भ० म०

अस्राचुरिति।—ते पौरा राममपश्यन्तः करुणं रुवन्तो विलपन्तः, 'रु शब्दे' इत्यस्य शतरि रूपम् ; अस्रम् अश्रु अस्राचुः मुक्तवन्त, सृजेस्तौदादिकस्य परस्मैपदिनः लिचि "सृजि-दृशोः —" इत्यम्, हलन्तलक्षणा वृद्धिः, "चोः कुः" "खरि च" इति चत्वम्। मुहुर्मुहुः भूयो भूयः कवोष्णमीषदुष्णमन्तःसन्तापात्, "कवं चोष्णे" इति कोः कवादेशः, न्यश्वसिषुः, श्वसेर्लुङ्, "ह्म्यन्त—" इत्यादिना श्वसेर्वृद्धिप्रतिषेधः, "अतो हलादेर्लघोः" इति विकल्पस्य प्राप्तत्वात्। हा राम! हा कष्टं! कष्टम् इति ब्रुवन्तः पराङ्मुखैः येन गतो रामस्तेन गतैर्मनोभिरित्यम्भूतैः न्यवृतन् निवृत्तवन्तः। "द्युद्भ्यो लुङि" इति परस्मैपदविकल्पात् द्युतादित्वादङ् ॥१७॥ ज० म०

अस्राचुरिति।—ते पौरा राममपश्यन्तः करुणं रुदन्तो विलपन्तः अस्र नेत्रजलम् अस्राचुस्त्यक्तवन्तः। रुदन्त इति

* "रुदन्त" इति भरतसम्मतः पाठः।

सूतोऽपि गङ्गासलिलैः पवित्वा
सहाश्वमात्मानमनल्पमन्युः।
ससीतयोराघवयोरधीयन्
श्वसन् कदुष्णां पुरमाविवेश * ॥ १८ ॥

'वद राटे' शक्ट। असाचुरिति 'सृजौ श विसर्गे' "त्याः सिः," "वर्द्धोऽकित्—" इति ऋकारस्य रः, "व्रज-वद—" इति अनिम्त्वात् व्रिः, "अच्छ्राज—" इति षङ्, "षढोः कः से" इति कः, "क्रिन्नात्—" इति षः, "अनुम् सिद्वः—" इति अन उम्। कवोष्णम ईषदुष्णाम, अन्तःसन्तापात्; "कत्कवौ चाग्नुष्णे" इति ईषदर्थे कवादेशः; मुहुर्मुहुर्वारं वारं न्यश्वसिषुः निश्वसितवन्तः। "हसादेः सेमो—" इत्यादौ श्वसवर्जनात् श्वसेन व्रिः। हा राम! हा कष्टम! इति ब्रुवन्तः ते पौराः पराङ्मुखैः रामदिगनुसारिभिः, अपूर्णकामत्वात् परिभूतैर्वा, मनोभिरुपलक्षिताः सन्तः निवृत्ताः। वृतद्युतादित्वात् "शासुलिद्युत्—" इति ङः, तेनैव "लोपोऽतोऽटेचोः" इत्यकारलोपः। "साधनहेतुविशेषण—" इति विशेषणे तृतीया। हा राम! इति हाशब्दयोगे षष्ठ्यर्थे द्वितीया, अत्र तु तदभाव इति श्रीपतिः, सामान्येन हाशब्दं प्रयुज्य रामः सम्बुध्यते इति टीकाः, सम्बुद्धाविति हादियोगे द्वितीयानिषेधार्थं क्रमदीश्वरसूत्रं, स्वमते हाशब्दवाच्येन कष्टेन नात्र रामस्य योगो विवक्षितः, किन्तु पौराणामेव तद्योगाभावान्न द्वितीया ॥१७॥ भ० म०

सूत इति।—सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह अनल्पमन्युः प्रवृद्धशोकः राघवयोः रामलक्ष्मणयोः, "सरूपाणाम्—" इत्येकशेषः; ससीतयोः सीतासहितयोः अधीयन् स्मरन्,

* "श्वासयान" इति जयमङ्गलासम्मतः पाठः।

प्रतीय सा पूर्ददृशे जनेन
द्यौर्भानुशीतांशुनिराकृतेव * ।

'इक् स्मरणे' इत्यस्य शतरि रूपं, यणादेशः, "अधीगर्थ—" इति कर्मणि षष्ठी ; श्वसन् कटुष्णम् ईषदुष्णं, "कवं चोष्णे" इति चकारात् कदादेशः ; गङ्गातटात् प्रतिनिवृत्य पुरमयोध्या-माजगाम आगतवान् । गङ्गासलिलैः आत्मानं बाह्यमाभ्यन्तरञ्च पवित्रीकृत्य, "पूङश्च" इति विकल्पेनेट् "पूङः क्त्वा च" इति कित्त्वप्रतिषेधात् गुणः ॥१८॥ ज० म०

सूत इति ।—सूतः सारथिः सुमन्त्रोऽपि गङ्गाजलैः सद्यश्च आत्मानं पवित्वा पवित्रीकृत्य सीतासहितयोः रामलक्ष्मणयो-रधीयन् स्मरन् कटुष्णं श्वसन् पुरमयोध्याम् आविवेश प्रविष्ट-वान् । अनल्पमन्युः प्रवृद्धशोकः । गङ्गासलिलैः पवित्वा इत्यनेन गङ्गापर्य्यन्तं तद्गमनं ध्वन्यते । "पूङ्क्लिशुदित इम्" इति विभाषित इम्, "सेम् अत्तुध—"इत्यादिना कित्त्वनिषेधात् "सार्वू—"इति गुणः । समीतयोरिति "सह: मो वा"इति बहुव्रीहौ सादेशः । राघवयोरिति 'स्मरणार्थेन—' इत्यादिना कर्मणि षष्ठी । अधीय-न्निति 'अधीकल स्मृत्याम्' "इणवदिकः"इति वाक्यात् "यिणो-ऽप्यणो"इति यादेशः क्वचिन्न स्यात्, 'आतिदेशिककार्य्यमनित्यम्' इति न्यायात्, तेनात्र "श्नुध्वोरवचो—"इति इयादेशः । कटुष्ण-मिति "कत्कवौ चा—"इति कोः कदादेशः ॥१८॥ भ०म०

प्रतीयेति ।—जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य पूरयोध्या ददृशे दृष्टा । कर्मणि लिट् । प्रतीय इति 'इङ् गतौ' इत्यस्य रूपं, न पुनरिणः, तस्य हि तुकि प्रतीत्येति स्यात्, "चत्व-

* "विनाकृतेव" इति कयकटकवाक्यतः पाठः ।

राजन्यनक्षत्रसमन्विताऽपि
शोकान्धकारक्षतसर्वचेष्टा ॥ १९ ॥

तुकोरसिद्धः" इत्येकादेशस्यासिद्धत्वात् । "प्रतीयुषा सा ददृशे" इति पाठान्तरम् । प्रतिनिवृत्तेन सा पूर्ददृशे दृष्टेत्यर्थः । अस्मिन् पाठे तु "उपेयिवान्—" इत्यादिना क्वसुः क्वसौ रूपं द्रष्टव्यमत्रोपसर्गस्यातन्त्रत्वात् । शोकोऽन्धकार इव शोकान्धकारः तेन क्षता क्षयं नीता अनुष्ठेयकर्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता, राज्ञोऽपत्यानि "राजश्वशुराद्यत्" राजन्याः क्षत्रियाः, "ये चाभावकर्मणोः" इति प्रकृतिभावः, राजन्या नक्षत्राणीव तैः समन्विताऽपि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्विताऽपि रात्रौ भानुचन्द्राभ्यां विनाकृता रहिता अन्धकारच्युतसर्वचेष्टा, तद्वत् साऽपि भानुचन्द्रस्थानीययोः राघवयोर्विरहादिति भावः ॥ १९ ॥ ज० म०

प्रतीयेति ।—जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य सा पूरयोध्या ददृशे, कर्मणि ठो । प्रतीयेति 'ईयङ् गत्याम्' इत्यस्य रूपं, न ल्विणः, तनागमप्रसङ्गात् । "प्रतीयुषा" इति पाठे—प्रतिपूर्वादिणः क्वसुः प्रतीयिवस्शब्दस्य "वसोर्वः सेमपि—" इति सेम्वस्योत्वं, प्रतीयुषा प्रतिनिवृत्तेन जनेन पूर्ददृशे इति योजना । कीदृशी पूः ? शोकोऽन्धकार इव तेन क्षता नाशिता सर्वेषां चेष्टा सर्वा वा चेष्टा यस्यां सा तथा । राजन्याः नक्षत्राणीव तैः समन्विताऽपि पूः सूर्यचन्द्राभ्यां निराकृता द्यौराकाशमिव, यथा नक्षत्रसमन्विताऽपि द्यौः सूर्यचन्द्राभ्यां रहिता अन्धकारक्षतसर्वचेष्टा, तद्वत् साऽपि सूर्याचन्द्रतुल्ययोः राघवयोरभावादिति भावः । राजन्य इति राज्ञां समूह इति गर्गादित्वात् ष्यञः, "मनुक्षन्—" इत्यादिना नलोपनिषेधः ॥ १९ ॥ म० म०

विलोक्य रामेण विना सुमन्त्र-
मच्योष्ट सत्त्वान्नृपतिश्च्युताशः।
मधूनि नैषीत् व्यलिपन्न गन्धै-
र्मनोरमे न व्यवसिष्ट वस्त्रे॥ २०॥
आसिष्ट नैकत्र शुचा व्यरंसीत्
कृताकृतेभ्यः क्षितिपालभाग्भ्यः।

विलोक्येति।—रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपति-र्दशरथः सत्त्वात् स्वभावादच्योष्ट च्युतः। च्यवतेरकर्मकाल्लुङ्। गतोऽपि मद्वचनमतिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः, सत्त्वात् च्युतश्च मधूनि पातुं नैषीत् नेष्ट-वान्। "नेटि"इति सिचि वृद्धिप्रतिषेधः। गन्धैश्चन्दनादिभिर्ना-लिपत्, लिपेः "लिपि-सिचि-ह्वश्च" इत्यङ्। मनोरमे चेतो-हारिणी वस्त्रे न व्यवसिष्ट न परिहितवान्। 'वस आच्छादने' इत्यस्मात लुङ्, अनुदात्तेत्त्वात्तङ्॥ २०॥ ज० म०

विलोक्येति।—रामेण विना सुमन्त्रं विलोक्य नृपतिर्दशरथः सत्त्वात् स्वभावात् व्यवसायाद्वा अच्योष्ट च्युतः, च्युतोऽकर्मकात् टौ। गतोऽपि रामः कदाचित् पौराणामनुरोधान्मद्वचनमतिक्रम्य आगच्छेदित्याशा च्युता यस्य सः। तथा मधूनि नैषीत्, 'इषु इच्छायां' टौ। गन्धैश्चन्दनादिभिर्न व्यलिपत्, "वलृयस्यख्यालिप —"इति ङः। मनोरमं वस्त्रद्वयं न व्यवसिष्ट न परिहितवान्, 'वसलङ् आच्छादने' "सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभाव-योः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु॥" इति विश्वः॥ २०॥ भ० म०

आसिष्टेति।—एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्टः।

स चन्दनोशीरमृणालदिग्धः
शोकाग्निनाऽगात् द्युनिवासभूयम् ॥ २१ ॥

आसेरात्मनेपदिनो लुङ्। कृतानि च अकृतानि चेति "क्तेन नञ्विशिष्टेनानञ्" इति समासः, असमापितेभ्य इत्यर्थः। क्षितिपालं भजन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः व्यरंसीत् विरतः, विमुखोऽभूदित्यर्थः। 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति अपादानसंज्ञा। रमेर्लुङ् "व्याङ्-परिभ्यो रमः" इति तिप्, "यम-रम—"इत्यादिना सगिटौ। स एवम्भूतो राजा चन्दनोशीरमृणालैः शोकाग्निप्रतीकारभूतैर्दिग्धः उपलिप्तोऽपि उद्वेगाग्निनेव द्युनिवासभूयं देवत्वमगात् गतवान्। दिहेर्निष्ठायां "दादेर्धातोर्घः"इति घः,"झषस्तथोर्धोऽधः","झलां जश् झशि"इति जश्त्वम्। दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति "भुवो भावे" इति क्यप् ॥ २१ ॥ ज० म०

आसिष्टेति।—शुचा शोकेन एकत्र एकस्थाने न आसिष्ट, 'आसलङ् उपवेशे'। कृताकृतेभ्यः क्षितिपालभाग्भ्यः राजकर्त्तव्यदूतसम्प्रेषणादिभ्यो व्यरंसीत् विरतवान्,"घे पं परानु—" इत्यादिना विपूर्वात् रमेः पं,"यम-रम—" इति इम्-सनौ। कृतावयवसम्बन्धात् कृतम्, अकृतावयवसम्बन्धाच्चाकृतम् इति एकार्थत्वात् कर्मधारयः।'अनञः क्तान्तस्य तेन सनञोति कर्मधारय.'इति परः। क्षितिपालभाग्भ्यः क्षितिपाल भजन्ते इति"ढाङ्गजवह—" इति विण्। स ईदृशो राजा चन्दनोशीरमृणालैस्तापोपशान्तिसाधनैर्दिग्धो लिप्तोऽपि शोकाग्निनेव हेतुना द्युनिवासभूयं देवत्वमगात्। दिवि निवासो यस्य इति विग्रहः, निवसन्त्यत्रेति घञि द्यौर्निवासो यस्येति वा "उडस्युङ्" इति उङ्, तस्य भवन "भू हनः क्यप्—"इति भुवो क्यप्। दिग्ध इति 'दिह

विचुक्रुशुर्भूमिपतेर्महिष्यः
केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः ।
विभूषणान्युन्मुमुचुः क्षमायां
पेतुर्बभञ्जुर्वलयानि चैव ॥ २२ ॥
ताः सान्त्वयन्ती भरतप्रतीक्षा
तं बन्धुता न्यक्षिपदाशु तैले ।

उपलेपे' क्तः, "दादेर्घः", "ढभात्तथोः—" इति तस्य धः, "झष्-भषोः—" इति घस्य गः । उशीरं वीरणमूलम् ॥ २१ ॥ भ० म०

विचुक्रुशुरिति ।—भूमिपतेः राज्ञो महिष्यः पत्न्यः, 'अवि-मह्योष्टिषच्' इत्यौणादिकः टिषच्; विचुक्रुशुः रुदितवत्य इत्यर्थः, हा स्वामिन् ! इति । तथा केशान् लुलुञ्चुः उत्पाटितवत्यः, स्ववपूंषि स्वशरीराणि जघ्नुस्ताडितवत्यः, विभूषणानि हारादीनि उन्मुमुचु-र्मुक्तवत्यः, क्षमायां भुवि पेतुः, वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः । एते लिडन्ताः, पतेरेत्वाभ्यासलोपौ ॥२२॥ ज० म०

विचुक्रुशुरिति ।—भूमिपतेर्दशरथस्य महिष्यः विचुक्रुशुः क्रन्दितवत्यः, हा हा स्वामिन् ! इति नृपमाहूतवत्यो वा । यद्यपि "कृताभिषेका महिषी" इत्यमरः, सा चैकैव, तथाऽप्युपचारात् पत्नीमात्रेऽपि तिसृणामेव कृताभिषेकत्वमिति केचित् । केशान् लुलुञ्चुः उत्पाटितवत्यः, "असंयोगाल्लिट् कित्" इति अकित्पक्षे उङ्नलोपाभावः । स्ववपूंषि जघ्नुः ताडितवत्यः, विभूषणानि हारादीनि उन्मुमुचुः त्यक्तवत्यः, क्षमायां भुवि पेतुः, "तॄफल—" इति पतेरत एत्वं खिलोपश्च । वलयानि अवैधव्यलक्षणानि बभञ्जुः । सर्वत्र लिटः उस् ॥ २२ ॥ भ० म०

ता इति ।—बन्धुता बन्धुसमूहः, "ग्राम-जन-बन्धु-सहायेभ्य-स्तल्"; ता महिषीः सान्त्वयन्ती संस्थापयन्ती, सान्त्वं करोतीति

दूतांश्च राजात्मजमानिनीषून्
प्रास्थापयन्मन्त्रिमतेन यूनः ॥ २३ ॥
सुप्तो नभस्तः पतितं निरीक्ष्य-
श्चक्रे विवस्वन्तमधःस्फुरन्तम् ।
आख्यद्वसन् मातृकुले सखिभ्यः
पश्यन् प्रमादं भरतोऽपि राज्ञः ॥२४॥

क्षिप् ; तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती आशु शीघ्रं, मा भूत् पूतिरिति ; क्षिपेर्लुङ्, "पुषादि—" इत्यङ् । कस्मात्तमक्षिपत् ? इत्याह,भरतप्रतीक्षा—तेन संस्कारः कर्त्तव्य इति या भरतं प्रतीक्षते, "ईक्षिक्षमिभ्यां च" इत्युपसङ्ख्यानात् णः ; दूतान् प्रास्थापयत प्रहितवती, राजात्मज भरतमानिनीषून् आनेतुमिच्छून्, अन्यथा कैकेयीवैमुख्यात् भरतेऽपि वैमुख्यात् दूता अपि नानेतुमिच्छन्ति, तत्रापि मन्त्रिमतेन न स्वमतेन, यूनः, तेषां गन्तुं समर्थत्वात् ॥ २३ ॥ ज० म०

ता इति ।—बन्धुना बन्धुसमूहः ता महिषीः सान्त्वयन्ती आश्वासयन्ती तं मृतं दशरथं शीघ्रं पूतिगन्धाशङ्कया तैले न्यक्षिपत्, क्षिपेस्तुदादित्वात् । कुतो न्यक्षिपत् ? इत्याह, भरतप्रतीक्षा भरतं प्रतीक्षते इति पचादित्वादन्, भरतं प्रतीक्षा यस्या इति वा । दूतांश्च मन्त्रिणां मतेन बुद्ध्या, कैकयीं प्रति क्रोधेन भरते वैमुख्यात्.तु स्वेच्छया, प्रास्थापयत् प्रहितवती, राजात्मजं भरतम् आनिनीषून् आनेतुमिच्छून्, ये स्वत एव भरतमानेतुमिच्छन्ति तत्प्रस्थापनं युक्तमिति भावः ; यूनस्तरुणान्, शीघ्रगमनसामर्थ्यात् । बन्धुतेति "जनबन्धु—" इति समूहार्थे तः । सान्त्वयन्तीति 'सान्त्वक सान्त्वने' धातुः ॥ २३ ॥ भ० म०

अभिश्रवन्नात्ययिकं तमेत्य
दूता यदाऽर्थं प्रयियासयन्तः।

सुप्त इति।—भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान्, ख्यातेर्लुङ्, "अस्यति-वक्ति—" इत्यादिना अङ्, क्रियाग्रहणं कर्त्तव्यमिति सम्प्रदानसंज्ञायां चतुर्थी। किमाख्यत्? इत्याह, अहं सुप्तः सन् नभस्तो नभस्तलात् आकाशात् पतितं विवस्वन्तमादित्यं स्फुरन्तं चलन्तं निरीक्षाञ्चक्रे निरीक्षितवान्, ईक्षेः "इजादेः—" इत्याम। उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट्। पश्यन् विलोकयन् राज्ञो दशरथस्य प्रमादमनिष्टम्॥२४॥ ज० म०

सुप्त इति।—भरतोऽपि मातृकुले वसन् सन् राज्ञो दशरथस्य प्रमादम् अनिष्टं पश्यन् वितर्कयन् सखिभ्यो मित्रेभ्य आख्यत् कथितवान्। "वक्त्यस्य—" इति ङ, तादर्थ्ये चतुर्थी, 'यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थी' इति परः। किमाख्यत्? इत्याह, सुप्तोऽहं नभस्त आकाशात् पतितम् अधःस्फुरन्तं विवस्वन्तं सूर्य्यं निरीक्षाञ्चक्रे दृष्टवानस्मि। 'अस्मदि चित्तस्य विक्षेपे ठौ' इति परः, स्वमते नियमाभावात् भवत्येव, सुप्तस्य तादृशसूर्य्यदर्शनेन चित्तविक्षेपार्थोऽपि गम्यते एव। 'ईक्षङ् दर्शने' "विजादि—" इत्याम्॥२४॥ भ० म०

अभिश्रवन्निति।—दूता एत्य आगत्य भरतमातृकुलमित्यर्थः, आङ्पूर्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम्; यदा तं भरतमर्थं वचनमभिश्रवन् आवितवन्तः, अर्थ्यतेऽनेनेति णिच् घञ् च, शृणोतेर्ण्यन्ताल्लुङि "चङि" इति द्विर्वचनं, "स्रवति-शृणोति—" इत्यभ्यासस्येत्वम्; आत्ययिकम् अत्ययो विनाशः, स प्रयोजनमस्येति तदस्य "प्रयोजनम्" इति ठञ्। पिता ते

आंहिष्ट जाताञ्जिहिषस्तदासा-
वुत्कण्ठमानो भरतो गुरूणाम् ॥ २५ ॥

स्नानस्त्वां द्रष्टुमिच्छतीति आत्ययिकं वचनं, तमिति "गति-बुद्धि"—इत्यादिना कर्मसंज्ञा। शृणोतेः शब्दकर्मत्वात् अर्थस्थिति "कर्त्तुरीप्सिततमं—" इत्यनेन। प्रयियासयन्तः प्रयातुमिच्छन्तं भरतं प्रयोजितवन्तः, सन्नन्तण्यन्तोऽयम्; तदा असौ भरतो जाताञ्जिहिषः जाता अञ्जिहिषा गमनेच्छा यस्य सः। 'अहि गतौ' "इदितो नुम्—", तस्मादंहितुमिच्छतीति सन्, इट्, "अजादेर्द्वितीयस्य" इति हिशब्दो द्विरुच्यते, नकारस्य "न न्द्राः—" इति प्रतिषेधः, अभ्यासकार्य्यम्, अनुस्वारपरसवर्णौ, "अः प्रत्ययात्—"इत्यकारप्रत्ययः, टाप्, आंहिष्ट गतवान्, तस्मादेवात्मनेपदिनो लुङ्, उत्कण्ठमानः स्मरन्, 'मठि कठि शोके' इत्यस्मादात्मनेपदिनो रूपम्, अनेकार्थत्वाद्धातूनाम्। गुरूणां पितामहादीनाम्, "अधीगर्थ—"इति कर्मणि षष्ठी ॥२५॥ ज०म०

अशिश्रवन्निति।—दूता एत्य आगत्य अर्थात् भरतमातृकुलं तं भरतम् अत्ययरूपम् अर्थं वस्तु यदा अशिश्रवन् श्रावितवन्तः, प्रयियासयन्तः भरतं गमनेच्छां कारयन्तः, तदा असौ भरतः जाता अञ्जिहिषा गमनेच्छा यस्य तादृशः सन् गुरूणां पित्रादीनाम् उत्कण्ठमानः स्मरन् आंहिष्ट गतवान्। अशिश्रवन्निति 'श्रु श्रवणे' "णिः प्रेरणे" इति णिः, "णिश्रि—" इत्यङ्, "धु(?)ईड(?)ङि" इति द्विः, "स्रोः सन्वत्—" "श्रुसुद्रुप्रुप्लुच्युङां वा" इति स्रेरु-कारस्य इत्वं, "णिल्यन्तेऽङ्गतोः" इति वृद्धिः, "यलायवायव—"इति आव्, "आङाङ स्व—", "णेर्लोपो—" "घोऽओ णेः" इति प्रयोज्यस्य कर्त्तुः कर्मत्वम्। आत्ययिकमिति अत्ययो विनाशः, "विकार-सङ्घ—" इति ष्णिकः। "अर्थोऽभिधेये शब्दानां धनकारण-

बन्धूनशङ्किष्ट समाकुलत्वा-
दासेदुषः स्नेहवशादपायम्।
गोमायुसारङ्गगणाश्च सव्यङ्-
नायासिषुर्भीममरासिषुश्च ॥ २६ ॥

वस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रयुज्यते॥" इति कोषः। केचित्तु अर्थयते अर्ननेत्यर्थं वचनम् आत्यायिकम् अनर्थसम्बन्धीत्यर्थः।"अर्थम्" इत्यत्र "असुम्" इति पाठे—असुं भरतं प्रायियासयन्त आत्ययिकं राज्ञा मरणम्। एत्येति "आदनञः—" इति आङ्पूर्वादिणः क्त्वा यप् "ह्रस्व तन् पिति" इति तन्। प्रायियासयन्त इति यातेः सनन्तात् णिः शब्दः। आंह्विष्टेति 'आंह्विड् गतौ' इदित्वान्नुन्। जातांह्विहिषः इति अंहेः सन् इम्, "नाजन्ताद्वरादिर्द्धिः" इति "अादौ नवद्रोऽये" इति च निषेधात् आदिनकारस्य न द्वित्वं,"शंस्यादः" इति अः। 'कठिड् आध्याने' इष्टानवाप्तौ तदवाप्तयेऽभिलाष उत्कण्ठेत्यन्ये। गुरूणामिति "समार्थन—"इत्यादिना कर्मणि षष्ठी ॥ २५ ॥ भ० म०

बन्धूनिति।—दुःस्वप्नदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान्, उत्प्रेक्षितवानित्यर्थः, शङ्कतेरात्मनेपदिनो लुङि रूपम्। कीदृशान्? आसेदुषः अपायं विनाशं गतवतः। "भाषायां सदवस—"इत्यादिना क्वसुः, "अत एकहल्—"इत्येत्वाभ्यासलोपौ। अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति; गच्छतस्तस्य गोमायुसारङ्गगणाः सृगालमृगगणाश्च सव्यगनुकूलं नायासिषुः नागताः। यातेर्लुङि "यमरम—"इति सगिटौ, सृगालाः प्रदक्षिणकृताः सृगाश्च सव्यमित्यर्थः, भीममुद्वेगकरमराविषुः रसिताः। रवैं

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन्
शुश्राव घोषं न जनौघजन्यम्।
आकर्णयामास न वेदनादान्
न चोपलेभे वणिजां पणायाः *॥ २७ ॥

परस्मैपदिनो लुङ्, "अतो हलादेः—" इति वृद्धौ रूपं, न रासि:, तस्यात्मनेपदित्वात् ॥ २६ ॥ ज० म०

बन्धूनिति।—दुःस्वप्नदर्शनात् अकस्मात् पितृदूतागमनाच्च खेदवशात् चेतसि समाकुलत्वात् गच्छन् भरतो बन्धून् अपायं विनाशम आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान्। 'शकिङ् त्रासशङ्कयोः'। गच्छतस्तस्य गोमायुसारङ्गगणाः शृगालहरिणसमूहाः सम्यगनुकूलं नायासिषुः नागतवन्तः, शृगालाः प्रदक्षिणं गता इत्यर्थः। यातेर्लुङि "यमरम—" इतीमृसनौ, "अनुस सिद्धेः—" इति अन उस्। भीमं भयानकं यथा स्यात्तथा अरासिषुः शब्दं कृतवन्तः। 'रस शब्दे' "हलादेः सेम—" इति वृद्धिः, अन उस्। "चातके हरिणे पुंसि सारङ्गः शबले त्रिषु" इति दन्त्यादौ रभसः। शृणोतेः आरन्तादङ्ग औणादिकः इति तालव्यादि केचिदाहुः ॥ २६ ॥ भ० म०

स इति।—स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन्, "भाषायाम्—" इत्यादिना क्वसुः, यजादित्वात् सम्प्रसारणं, द्विर्वचनं, "वस्वेकाजाद्घसाम्" इति इट्, पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात्, पुरं प्रविष्टः घोषं शब्दं न शुश्राव न श्रुतवान्, जनौघजन्यं जनसमूहेन जन्यमुत्पाद्यं "शकि-शसि-चति-यति—" इति जनेर्यत्। तथा वेदध्वनीन् नाकर्णयामास न श्रुतवान्, प्रातिपदिकाद्धात्वर्थे इति णिच्, तदन्तात् लिट्यामि

* "पणायान्" इति जयमङ्गलासम्मतः पाठः।

"अपामन्त—"इत्ययादेशः। न चोपलेभे नोपलब्धवान्, वणिजां पण्यजीविनां पणायान् पणलाभान्, क्रयविक्रयरूपव्यवहारस्योच्छिन्नत्वात्; पणन्ते इति वणिजः 'पणेरिज्यादेश व' इत्यौणादिकः। पण्यन्ते इति पणाः, "नित्यं पणः परिमाणे" इत्यप् व्यवहर्त्तव्याः। ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभाः, "एरच्"इति इणः कर्मणि अच्। पणानामयाः पणायाः तान्।"पणायाम्"इति पाठान्तरम्। वणिजां वस्तूनि * संव्यवहारविषयाणि नोपलेभे, संव्यवहारकुशलाः साधव इति। गुपादिषु स्तुत्यर्थपणिना साहचर्य्यात् पणेरपि तदर्थादेवायप्रत्ययः। "अः प्रत्ययात्"इत्यकारः, टाप्।"वणिजां प्रलापान्"इति तृतीयः पाठः,वणिक्प्रसारकलहामित्यर्थः॥ २७॥ ज० म०

स इति।—स भरतः प्रोषिवान् मातामहकुले कृतप्रवासस्तत एत्यागत्य पुरमयोध्यां प्रवेक्ष्यन् प्रवेशं करिष्यन् जनसमूहजन्यं घोषं शब्दं न शुश्राव। प्रोषिवानिति प्रपूर्वात् 'वसो ए निवासे' इत्यस्मात् क्वसुः, "यङ्स्वपाद्यो—"इति जिः, द्वित्वं, "वृसोघसेकाज्—"इतीम्। प्रवेक्ष्यन्निति 'विश श्री प्रवेशे' स्यतृः। जन्यमिति "कृञो: कभावे" इत्युक्तेः कर्त्तरि घ्यण्, जनोवाज्जातमित्यर्थः। किंवा"तव्यानीयया—"इति आन्ताज्जनेः कर्मणि यः। वेदध्वनिं न आकर्णयामास न श्रुतवान्.'कर्णस्क भिदि'। वणिजां पणोपजीविनां पणायाः क्रयविक्रयव्यवहारान् न च उपलेभे ददर्श। 'पणङ् व्यवहारे स्तुतौ' "कमऋत—"इत्यादिना आयः, "शंस्यादः" इति अः, स्त्रीत्वञ्च।"पणायान्"इति पाठे—पण्यन्ते इति पणाः "घञलनटोऽघे" इत्यल्, आयो लाभः. इमान् व्यवहर्त्तव्यलाभानित्यर्थः। "वणिगापणायान्"इति पाठे—वणिजामापणो निषद्या तत्रायानित्यर्थः। "आपणस्तु निषद्यायाम्" इत्यमरः।॥ २७॥ भ० म०

* 'वणिजां स्तुतिं संव्यवहारकपाम्' इति पाठान्तरम्।

चक्रन्दुरुच्चैर्नृपतिं समेत्य
तं मातरोऽभ्यर्णमुपागतास्राः।
पुरोहितामात्यमुखाश्च योधा
विशुद्धमन्युप्रतिपूर्णमन्याः॥ २८॥

चक्रन्दुरिति।—तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकित्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दितवत्यः, हा स्वामिन्! हा राजन्! क्व गतोऽसीति। उपागतं प्राप्तमस्रमश्रुजलं यासां ताः एवंविधाः। युध्यन्ते इति योधाः पचादित्वादच्, ते च तं समेत्य नृपतिं चक्रन्दुः, पुरो धीयते इति पुरोहितः "निष्ठा" "दधातेर्हिः"। अमाशब्दः सहार्थे, सह राज्ञा कार्य्येषु भवतीत्यमात्यः। "अमेहक्वतसित्रेभ्यः—" इति निपातात्। पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते पुरोहितामात्यमुखाः; अमात्यस्य अजाद्यदन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात् पूर्वनिपातः। विशुद्धेन मन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति॥ २८॥ ज० म०

चक्रन्दुरिति।—तं भरतम् अभ्यर्णं समीपवर्त्तिनं समेत्य प्राप्य मातरः कौशल्यादयो नृपतिं चक्रन्दुः तमुद्दिश्य सशब्दं रुरुदुरित्यर्थः। उपागतम् अस्रं नेत्रजलं यासां तास्तथा। अभ्यर्णमित्यभिपूर्वस्यार्दधातोः क्तान्तस्य रूपं, "क्षुब्धस्वान्त—" इत्यादिना निपातितम्। युध्यन्ते इति योधाः पचादित्वादच्, तेऽपि तं समेत्य चक्रन्दुः। पुरोऽग्रे धीयते स्थाप्यते इति पुरोहितः, "धाञो हिः", अमाशब्दः सहार्थे, सह राज्ञा कार्य्येषु भवति अमात्यः "त्यब्नेर्ध्रुव—" इति त्यः, पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते, तथा ते जना योधाश्चेति वा, विशुद्धेन मन्युना शोकेन

दिदृक्षमाणः परितः ससीतं
रामं यदा नैक्षत लक्ष्मणञ्च।
रोरुद्यमानः स तदाऽभ्यपृच्छत्
यथावदाख्यन्नथ वृत्तमस्मै ॥ २६ ॥

प्रतिपूर्णा मन्या येषां यासां वा।"दान्तशान्तपूर्ण—"इति निपात्यते। "पश्चाद्ग्रीवाशिरा मन्या" इत्यमरः॥ २८ ॥ भ० म०

दिदृक्षमाण इति।—स भरतो यदा ससीतं रामं लक्ष्मणञ्च परितः सर्वतो दिदृक्षमाणः द्रष्टुमिच्छन्, "ज्ञा-श्रु-स्मृ-दृशां सनः" इति तङ्, "हलन्ताच्च" इति सनः कित्त्वे "सृजि-दृशोः—" इत्यम् न भवति, नैक्षत न दृष्टवान्, तदा रोरुद्यमानः अत्यर्थं रुदन्, यङि रूपम्, अभ्यपृच्छत् पृष्टवान्। ऐक्षत अभ्यपृच्छदिति भूतसामान्यविवक्षया लङ्, अन्यथा कवेः परोक्षत्वात् लिट् स्यात्। अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तं भूतं तथावत् आख्यन् कथितवन्तः, पुरोहितामात्यमुखा अस्मै भरताय। ख्यातेः "अस्यति—"इत्यादिना च्लेरङ् आतो लोपः॥२६॥ ज० म०

दिदृक्षमाण इति।—स भरतः ससीतं रामं लक्ष्मणञ्च परितः सर्वतः दिदृक्षमाणः द्रष्टुमिच्छन् यदा न ऐक्षत तदा रोरुद्यमानो भृशं रुदन् अभ्यपृच्छत् पृष्टवान्। अथानन्तरं यादृशं वृत्तं तादृशम् अस्मै भरताय आख्यन् कथितवन्तः, अर्थात् पुरोहितामात्यमुखा योधाश्च। दिदृक्षमाण इति दृशेः सन्, "गुर्नानिमि" इति गुणनिषेधः, "ज्ञादृशानतुज्ञाना—"इति मं। 'ईक्षङ् दर्शने' धौ। रुदेः "भूवसूव—"इत्यादिना यङ्, 'प्रच्छी श् ज्ञोप्से' धौ, "ग्रह-ज्यपाद्योः—"इति जिः। ख्यातेः "वक्तयस्थ—"इति ङः, तादर्थ्ये चतुर्थी, 'यदभिप्रेत्य भावयम्' इति चतुर्थीति परः॥२६॥ भ०म०

आबद्धभीमभ्रुकुटीविभङ्गः
श्रेश्वीयमानारुणरौद्रनेत्रः ।
उच्चैरुपालभ्य स कैकयीञ्च
शोके मुहुश्चाविरतं न्यमाङ्क्षीत् ॥ ३० ॥

आबद्धेति ।—स भरतः उच्चैर्महता ध्वनिना कैकयीञ्च मुहुर्भूयो भूय उपालभ्य उपालब्धवान्, उपाङ्पूर्वो लभिरुपालम्भे वर्त्तते, तस्मादात्मनेपदिनः "झलो झलि" इति सिज्लोपे धत्व-जश्त्वे रूपम् । शोके च मन्यौ अविरतमजस्रं न्यमाङ्क्षीत् निमग्नः, मस्जेर्लुङि"मस्जिनशोर्झलि"इति नुम्, तत्रापि मस्जेरन्त्यादि-नियमात् नुम्, संयोगादिलोपः, हलन्तलक्षणा वृद्धिः, हल्-ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम् । कीदृशः ? आबद्धभीम-भ्रुकुटीविभङ्गः,'भ्रमेश्च डु'इत्यौणादिको डुः । कुटेः स्त्रीलिङ्गे भावे कृशादिभ्य इतोः, तदन्तात्"कृदिकारात्—"इति ङीष् ; भ्रुवोः कुटी कौटिल्यं भ्रुकुटी, "इको ह्रस्वोऽङ्यो गालवस्य"इति ह्रस्वः, तस्या विभङ्गो विरचनम्, आबद्धः कृतः प्रयत्नेनायासवृत्तेन भीमो भयानको भ्रुकुटीविभङ्गो येन यस्य वेति, श्रेश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके च नेत्रे यस्य सः । श्वयते-र्यङि "विभाषा श्वेः"इति वा सम्प्रसारणम् । ॥ ३० ॥ ज० म०

आबद्धेति ।—स भरतः उच्चैर्यथा स्यात्तथा मुहुर्वारं वारं कैकयीम् उपालभ्य निर्भर्त्सितवान्, शोकेऽविरतं न्यमाङ्क्षीत् निम-मज्ज । कीदृशः ? आबद्धः कृतो भयङ्करो भ्रुकुटीविभङ्गः येन स तथा, पुनः किम्भूतः ? श्रेश्वीयमाने अत्यर्थविवृद्धे अरुणे रक्ते रौद्रे भयानके च नेत्रे यस्य स तथा, भ्रुवोः कुटी कौटिल्यं, "वेक् स्वार्थेऽसे" इत्यत्र 'व्यवस्थितविभाषार्थो वाशब्दः, तेन सम्प्रति-

नृपात्मजौ चिक्लिशतुःससीतौ
ममार राजा विधवा भवत्यः।
शोच्या वयं भूरनृपा लघुत्वं
कैकय्युपज्ञं बत बद्धनर्थम् ॥२१॥

रिक्तस्थाने क्वचित् समासे ह्रस्वः स्यात्' इति देवीदासचक्रवर्त्तिना व्याख्यातं, तेनात्र पाक्षिको भ्रुवो ह्रस्वः, मनोषादित्वाद्वा। 'टु ओश्वि गतिवृद्ध्योः'। "मूत्रसूत्र—" इति यङ्, "खेणुः" "घोऽज्वरे"। उपाङ्पूर्वात्मभेगर्भ्यायां टो तन्, "भरस्वाजभरसि—" इति सेर्लोपः। 'टु मस्जो श शुद्धौ' "व्यासिः", शनिमत्वात् "व्रज-वद—" इति त्रिः, "स्यादेः सो लोपः—", "चुङ—" इति कुङ्, "क्लिलात् —" इति षः, "नुण् रधो मुचां—" इति नुण्, "म्नोर्नुः—" इत्यनुस्वारः, "अपि जमृनोः—" इति ङः ॥ २० ॥ भ० म०

तम् उपालम्भमाह, नृपेति।—नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ, ममार मृतो राजा, "म्रियतेर्लुङ्लिङोश्च" इति नियमात् तङोऽभावः। विधवाः धवो भर्त्ता, तेन विना भवत्यो जाताः, शोच्याः शोचनीया वयम्, भयशोभाजनत्वात्। "ऋहलोर्ण्यत्"। "शङ्क्याः" इति पाठान्तरं, शङ्कनीया वयम्, एतत्कृतोऽयं प्रयोग इति, भूश्च अनृपा न विद्यते नृपो यस्यामिति, नञोऽस्त्यर्थानामिति बहुव्रीहिः। लघुत्वं राज्यप्रार्थनालक्षणं, कैकय्युपज्ञं कैकय्याः प्रथमतो ज्ञातं, नान्यस्य कस्यचित् पूर्वं ज्ञातम्। उपज्ञायते इत्युपज्ञम् "आतश्चोपसर्गे" इति, स्त्रियामङ्, कर्त्तृलक्षणा षष्ठी, कैकय्या उपज्ञेति समासः, "उपज्ञोपक्रमम्" इति नपुंसकता। बत कष्टं बद्धनर्थं बहुदोषं, लोकमरणाद्यनिष्टानां सम्भवात् ॥ २१ ॥ ज० म०

नैतन्मतं मत्कमिति ब्रुवाणः
सहस्रशोऽसौ शपथानशप्यत्।
उद्वाष्पमानः पितरं सरामं
लुठन् सशोको भुवि रोरुदावान् ॥३२॥

नृपात्मजाविति।—सीतासहितौ नृपात्मजौ रामलक्ष्मणौ चिक्लिशतुः दुःखितौ, 'क्लिशुङ् उपतापे'। राजा ममार "मृङ्-श्चौल्वे मम्"इति नियमात् पम्। धवो भर्त्ता,तेन विहीना भवत्यो जाताः, मातृगणं सम्बोध्योक्तं, कैकय्युपालम्भोऽयम्। वयं शोच्याः अयशोभाजनत्वात् शोकार्हाः। ते स्थाः शक्यार्हे—"इति अर्हार्थे ण्यण्,इमन्तत्वात्"चजोः कगौ—"इति सेमुक्तवर्जनात् न कत्वम्। किंवा आवश्यकत्वविवक्षया "नावश्यके—" इति निषेधः। "शङ्क्याः" इति पाठे—एतत्कृतोऽयं प्रमाद इति लोकैः शङ्क्या वितर्कणीयाः, भूरनृपा राजशून्या, लघुत्वं राज्यप्रार्थनरूपं नीचकर्म, कैकय्युपज्ञं कैकय्याः सकाशात् प्रथमत उपलब्धं, नान्यतः केनापि दृष्टमित्यर्थः; उपज्ञायते इत्युपज्ञा क्विप्। "उपज्ञोपक्रमान्तस्य तदादित्वप्रकाशने" इत्यमरवचनात् नपुंसकत्वं, लिङ्गस्य लोकाश्रयत्वात्। बह्वनर्थं बहवोऽनर्था दोषा यत्र तत्तथा. वत इति खेदे ॥ ३१ ॥ भ० म०

भरतकृत एवायं प्रयोग इत्येतत् परिहरन्नाह,नैतदिति।—यदेतत् कैकय्यनुष्ठितं मतमभिप्रायः, न मत्कं मत्कृतं तत्, न अहमस्य ग्रामणीर्न प्रभुरिति अस्मच्छब्दात् "स एषां ग्रामणीः" इति कन्, "प्रत्ययोत्तरपदयोश्च"इति मपर्य्यन्तस्य मादेशः, नास्मन्मतादनुष्ठितमनयेत्यर्थः, इत्येवं ब्रुवाणः सहस्रशो बहुवारानसौ भरतः शपथान् सम्प्रत्ययकारणवचनानि अशप्यत कृतवान्, अनेकार्थत्वाद्धातूनां, शपेर्दैवादिकस्य उभयपदिनो लङि रूपम्।

तं सुखयन्तः सचिवा नरेन्द्रं
दिधक्षयन्तः समुदूहुरारात् ।

उद्वाश्यमानः आह्वयन्, 'वाशृ शब्दे' दैवादिकः अनुदात्तेत्; पितरं सरामं हा तात! हा राम! इति लुठ्यन् भुवि लुठन्, 'लुठ विलोडने' दैवादिकः परस्मैपदी। सशोक इति शाठ्यपरिहारार्थं रोरुदावान् अत्यर्थं रोदनं कुर्वन्, यङन्तात् "अः प्रत्ययात्" इत्यकारः, "अतो लोपः" "यस्य हलः", स्त्रियामतष्टाप्, सा विद्यते यस्येति मतुप् ॥ ३२ ॥ ज० म०

स्वदोषं परिहरन्नाह, नैतदिति ।—यदेतत् केकय्या कृतं तन्न मत्कं मत्स्वामिकं मत्कर्तृकं मतम्, अहमस्य प्रभुरित्यर्थे "विकार-सङ्घ—" इत्यादिना कः, इति ब्रुवाणोऽसौ भरतः सहस्रशो बहुवारान् शपथान् प्रत्ययकारणानि अशप्यत् उक्तवान्। 'शप यौज आक्रोशे', आक्रोशो भाषणं, धातूनामनेकार्थत्वात्; शपिरत्र करोत्यर्थो वा। सरामं पितरम् उद्वाश्यमानः हा राम! हा तात! इति आह्वयन्, 'ङवाश्य ऋठ शब्दे'। भुवि लुठ्यन् 'लुठ विलोडने', रोरुदावान् अत्यर्थरोदनयुक्तः, रुदेर्यङन्तात् "शंस्याद:" इति अप्रत्ययः, ततो वतुः। हेतुमाह सशोक इति। सहस्रशब्दात् "सङ्ख्यैकार्थात्—" इति शस् ॥ ३२ ॥ भ० म०

तमिति ।—सचिवा अमात्याः, कार्य्येषु सचन्ते समवयन्तीति सचेरिवन्नित्यौणादिक इवन्; तं भरतं सुखयन्तः सुखं कुर्वाणाः, 'तत् करोति' इति णिच्; नरेन्द्रं दशरथं समुदूहुः उद्वाहितवन्तः, शिविकायामारोप्य। वहिरन्तर्भावितण्यर्थोऽत्र द्रष्टव्यः, यजादित्वात् सम्प्रसारणम्। आरात् नातिदूरे दिधक्षयन्तः दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः, दहेः सनि "दादेर्धातोर्घः" भष्भावषत्वे,

अन्त्याहुतिं हावयितुं सविप्रा-
स्त्रिचीषयन्तोऽध्वरपात्रजातम् ॥२२॥
उदक्षिपन् पट्टदुकूलकेतून्
अवादयन् वेणुमृदङ्गकांस्यम्।

प्रयोजकव्यापारे णिच्। अन्ते विनाशे भवा या आहुतिः "दिगादि—"इति यत्, तामन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवास्त्रिचीषयन्तः चेतुं निधातुमिच्छन्तं प्रयोजितवन्तः; किं तत्? अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम् ॥ २१ ॥ ज॰ म॰

तस्मिति।—विप्रसहिताः सचिवाः अमात्यास्तं भरतं सुख-यन्तः सुखं कुर्वन्तः नरेन्द्रं दशरथं समुदूहुः, वहेरन्तर्भावितण्य-र्थात् शिबिकायामारोप्य उद्वाहितवन्त इत्यर्थः, विप्राणां बहूनामौचित्यात्। 'वहै ञो प्रापणे' ठो "व्यथ ग्रह—"इति जिः, "ग्रहस्वपाद्योः—"इति प्रकृतेर्जिः। सुखयन्त इति "लेः कृत्या-ख्याने जिः" इति सुखशब्दात् जिः। आरात् समीपे दिधक्षयन्तो दग्धुमिच्छां कारयन्तः, दहेः सनन्तात् जिः शतृः; अन्त्याहुतिं हावयितुम् अग्नौ प्रक्षेपयितुम् अध्वरपात्रजातं यज्ञोपयोगि-स्रुवादिसमूहं चिचीषयन्तः चेतुमिच्छां कारयन्तः। अन्तकाले भवोऽन्त्यः, "ढघे कात्—"इति ण्यः। सचिः सेवा विद्यतेऽस्य सचिवः, "शोष्ठण—" इत्यादिना केशादित्वात् वः, सचन्ति कार्य्येषु समवयन्तीत्यर्थे सचिवाः निपातनाद्वा ॥ २१ ॥ भ॰ म॰

उदेति।—पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्तः, ये नियुक्ताः। क्षिपेस्तौदादिकस्य ग्रहणम्। वेणु-मृदङ्गकांस्यं वंशमुरजकांस्यतालमवादयन् वादितवन्तः, वदे-र्ण्यन्तस्यैव प्रयोगः, "जातिरप्राणिनाम्" इत्येकवद्भावः, न पुन-

कम्बूंश्च तारानधमन् समन्तात्
तथाऽऽनयन् कुङ्कुमचन्दनानि ॥२४॥
ग्रीवाच्छिनासावदनं सरुक्मं
कृत्वाऽजिने प्राक्शिरसं निधाय ।

त्याङ्गत्वात्, तत्र हि प्राणिनां तूर्य्याङ्गाणां द्वन्द्वैकवद्भावः, यथा मार्दङ्गिकपाणविकमिति । 'वृतृवदिहनिकमिकषिभ्यः सः' इत्यौणादिकः कंसशब्दः, तदर्थाय हितं कंसीयं त्रपुणा दृढद्रव्यं, प्रकृतिविकारभावे छः, तस्य विकार इति "कंसीयपरशव्ययो-र्यञञौ लुक् च" इति छस्य लुक्, यञ् च प्रत्ययः । कम्बून् शङ्खान् तारान् उच्चैस्तरध्वनीन् अधमन् शब्दितवन्तः । "पा-घ्रा—" इत्यादिना धमादेशः, तथा कुङ्कुमचन्दनानि आनयन् आनीत-वन्तः । सर्वत्र लङि रूपम् ॥ २४ ॥ ज० म०

अन्त्येष्टिं दर्शयन्नाह, उदक्षिपन्नित्यादि ।—अर्थात् तत्र नियुक्तास्ते जनाः पट्टदुकूलरचितान् केतून् ध्वजान् उदक्षिपन् ऊर्द्ध्वीकृतवन्तः,क्षिपस्तौदादिकः । "कार्पासं बादरं प्रोक्तं दुकूला-द्यञ्च वाल्कलम् । कौषेयं क्रिमिजञ्चापि राङ्कवं मृगरोमजम् ॥" इत्यमरमाला । वेणुमृदङ्गकांस्यम् अवादयन् वादितवन्तः । 'अप्राणिजातित्वात् समाहारः' इति कालापाः, 'तूर्य्याङ्गत्वात्' इति वामनः । 'सर्वो द्वन्द्वः समाहारः' इति प्राञ्चः । स्वमते "इतरेतर-योगे च समाहारे च चो द्विधा" इति सामान्येन द्विविधो द्वन्द्व उक्तः, तत्र क्वचिदितरेतरः क्वचित् समाहारः अभिधानात् बोद्धव्यः, यदुक्तं "कृत्तद्धितसमासानामभिधानं नियामकम्" इति । कम्बून् शङ्खान् तारान् उच्चतरध्वनीन् अधमन् शब्दायितवन्तः । "ध्मा-दाण-पा घ्रा—" इति ध्मा धमः ; तथा कुङ्कुमचन्दनानि आनयन् । सर्वत्र चो ॥ २४ ॥ भ० म०

सञ्चित्य पात्राणि यथाविधान-
मृत्विग् जुहाव ज्वलितं चिताऽग्निम् ॥२५॥
कृतेषु पिण्डोदकसञ्चयेषु
छित्वाऽभिषिक्तं प्रकृतं प्रजाभिः।

श्रोत्रेति।—अजिने कृष्णसारचर्मणि प्राक् पूर्वं शिरो मूर्द्धा यस्येति तं प्राक्शिरसं शवं निधाय स्थापयित्वा पश्चात् श्रोत्राक्षि-नासावदनं, प्राण्यङ्गत्वादेकवद्भावः, 'द्वन्द्वश्च—'इत्यादिसूत्रव्याख्यानन्तरं नयतेरा चेति प्रकृतेराकारे नासेत्यौणादिकं रूपम्; सरुक्म सुवर्णं कृत्वा सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु पात्राणि स्रुवादीनि यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे, ऋत्विक् याजकः, ऋतौ यजतीति "ऋत्विग्दधृग्—"इत्यादिना निपातितः, ज्वलितं चिताग्निं चयनं चितं तदर्थमग्निं जुहाव जुहोति स्म ॥२५॥ ज० म०

श्रोत्रेति।—प्राक् पूर्वस्यां दिशि शिरो यस्य तादृशं शरीरम् अजिने कृष्णसारचर्मणि निधाय संस्थाप्य श्रोत्राक्षिनासावदनं सरुक्मं सुवर्णयुक्तं कृत्वा यथाविधानं विधानमनतिक्रम्य पात्राणि स्रुवादीनि सञ्चित्य अङ्गेषु निधाय ऋत्विक् याजकः ज्वलितं चिताग्निं जुहाव, एतेनान्त्येष्टिरुक्ता। ऋतौ यजतीति ऋत्विक्, "वासुस—" इति क्विप्, "चुट्—" इति कुङ्। श्रोत्रेत्यादि प्राण्यङ्गत्वात् 'द्वन्द्वैकत्वं क्लीवत्वञ्च नित्यं भजते' इति परः। समतेऽत्र वेणुमृदङ्गकांस्यमितिवत् समाहारो द्वन्द्वः, इतरेतरोऽपि दुर्निवारः। यथा "ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते। गण्डे चुम्बं ललाटाक्षि-कपोलभगमूर्द्धसु॥" इत्यादि दर्शनात् परमतं ज्ञेयम ॥ २५ ॥ भ० म०

कृतेष्विति।—पिण्डोदकदानास्थिसञ्चयेषु अनुष्ठितेषु प्रजाभिः

प्रत्यानिनीषुर्विनयेन रामं
प्रायादरण्यं भरतः सपौरः ॥३६॥
शीघ्रायमाणैः ककुभोऽश्नुवानै-
र्जनैरपन्थानमुपेत्य रुग्णैः।
शोकादभूतैरपि भूश्चकासा-
ञ्चकार नागेन्द्ररथाश्वमिश्रैः ॥३७॥

---

प्रकृतं प्रस्तुतमभिषेकम्, आदिकर्मणि क्तः. हित्वा त्यक्त्वा "जहातेश्च क्त्वि" इति हिरादेशः; रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः विनयेन प्रसादनया, न भयात्; अरण्यं वनं प्रायात् गतवान् भरतः सह पौरैः अयोध्याभवैर्जनैः, मया एकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति भावः ॥ ३६ ॥ ज० म०

कृतेष्विति।—पिण्डोदकदानास्थिसञ्चयनेषु कृतेषु पश्चात् प्रजाभिः प्रकृतं प्रस्तुतमभिषेकं हित्वा विनयेन रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुर्भरतः पौरैः सह अरण्यं प्रायात जगाम। यातेर्लङि रूपम्। प्रकृतमिति आरम्भे क्तः। हित्वेति "जहातेश्च क्त्वि"। आत्मनो विनयख्यापनार्थं मयैकेन प्रसाद्यमानः कदाचित् नागच्छेदित्याशङ्क्य पौरैः सह गमनम्। पिण्डोदकपदेन दाने लक्षणा। सञ्चयोऽस्थि-सञ्चयनं, पिण्डोदकानां सञ्चया इति केचित् ॥ ३६॥ भ० म०

शीघ्रायेति।—जनैर्हेतुभूतैर्भूश्चकासाञ्चकार शोभते स्म। कर्त्तुः क्रियाफलयोगेऽपि नात्मनेपदम्, "आम् प्रत्ययवत्—" इत्यत्र पूर्व-ग्रहणानुकृतेः चकास्तेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ। शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः, "भृशादि—" इति क्यङ् ङित्वात्तङ्; ककुभोऽश्नुवानैः दिशो व्याप्नुवद्भिः, अश्नोतेः सौवादिकस्य आत्मनेपदिनो रूपम्; अपन्थानमुपेत्य

उच्चिक्यिरे पुष्पफलं वनानि
सस्नुः पितॄन् पिप्रियुरापगासु ।

हृतैः बहुत्वादमार्गमपि गत्वा गतैः ; "ऋक्पूर्—"इत्यादिना समासान्तः प्राप्तो "नञस्तत्पुरुषात्" इति प्रतिषिद्धः सन् "पथो विभाषा"इति विकल्पितः ; शोकाद्धेतोरभूषैरनलङ्कारैरपि चकासाञ्चकार भूः भूमिः ; भूषेति"गुरोश्च हलः"इत्यकारप्रत्ययः, 'चकासृ दीप्तौ' इत्यस्मात् 'कास्प्रत्ययादाम्—' चुलुम्पाद्यर्थमित्याम्। नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः, अल्पाच्तरस्य न पूर्वनिपातः, 'बहुष्वनियमः' इति वचनात्, तेन सेनाङ्गत्वात् सातैकवद्भावेन मिश्रैर्युक्तैः। "पूर्वसदृश—"इत्यादिना तृतीयासमासः ॥ १७ ॥ ज० म०

शोचायमानैरिति।—शोकात् भूषारहितैरपि जनैर्भूश्चकासाञ्चकार'चकासृ दीप्तौ',"दयायासश्च—"इत्यादिना आम्, "आमः"। भूषेति"सेमृञात् सरोः"इति अः। किम्भूतैः? शोचायमानैः अशोघ्रैः शोघ्रैर्भवद्भिः कार्य्यवशात् द्रुतं गच्छद्भिरित्यर्थः, "भृशादिभ्यो—"इति क्यङ्,"यो ऽजस्यरे"इति घः,ङित्त्वात्मम् ; ककुभो दिशः अश्नुवानैर्व्याप्नुवद्भिः, 'अशूङ् व्याप्तिसंहत्योः'। बहुत्वात् अपन्थानमपि व्याप्य हृतैर्गतैः, विकल्पितम् अप्रत्ययान्तम्। नागेन्द्रा हस्तिश्रेष्ठा रथा अश्वाश्चेति, परमते सेनाङ्गत्वात् समाहारद्वन्द्व एव, स्वमते इतरेतरद्वन्द्वोऽपि लभ्यते, मिश्रैर्युक्तैः ॥ १७ ॥ भ० म०

उच्चिक्यिरे इति।—ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति "जातिरप्राणिनाम्"इत्येकवद्भावः, उच्चिक्यिरे उच्चितवन्तः, ञित्त्वात्तङ् कर्त्तुः क्रियाफलयोगात्, "विभाषा चेः"इति धातोः कुत्वम्, "एरनेकाचः—"इति यणादेशः। उच्चि-

आरेभुः * हृत्वा पुलिनान्यशङ्कं
छायां समाश्रित्य विशश्रमुश्च ॥ ३८ ॥

चिरे इति पाठान्तरं युक्तं, वनानीति हेतुत्वेन मकथितं कर्म ; वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः । ततः सस्नुः स्नातवन्तः, स्नातेर्लिटि "उच्चपदान्तात्" इति परस्मैपदम् । पितॄन् पिप्रियुः उदकाञ्जलिना , तर्पितवन्तः, प्रीणातेर्लिटि इयङादेशः, आपगासु नदीषु एतत् कृत्वा पुलिनानि सैकतानि हृत्वा आरेटुः आरटिताः ;"आरेभुः"इति पाठान्तरम् ; शोकापनोदनार्थं क्रियन्तमपि कालमारमन्ति स्म, "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । अशङ्कं विस्रब्धं छायां समाश्रित्य विशश्रमुः विश्रान्ताः ॥ ३८॥ ज० म०

उच्चिक्यिरे इति ।—ते जना वनानि पुष्पाणि फलानि च उच्चिक्यिरे ; 'चिञ् चयने' ठौ, "याञ्चार्थंदुहचिप्रच्छ—"इति द्विकर्मकत्वं, "चेः किर्वा" इति किः, "श्रुध्वोः—"इति यत्वम् । वनानि विघट्टयन्तः पुष्पफलं जगृहुरित्यर्थः । परमते अप्राणिजातित्वात् समाहारद्वन्द्वः, स्वमतं 'मृदङ्गकांस्यम्' इत्यत्रोक्तम् । आपगासु नदीषु सस्नुः स्नातवन्तः, पितॄन् पिप्रियुः तर्पितवन्तः ; 'प्रीञ् तर्पणे' "श्रुध्वोः—"इतीयादेशः । पुलिनानि सैकतानि हृत्वा गत्वा आरेभुः शोकापनोदनार्थं क्रीडन्ति स्म । "घे पं—"इत्यादिना यम् । "आरेटुः" इति पाठे—शोकात् शब्दं चक्रुरित्यर्थः, 'रट परिभाषणे' "तृफल—" इति अत एत्वं खिलोपश्च । अशङ्कं निःशङ्कं यथा स्यात्तथा छायां समाश्रित्य विशश्रमुः ॥ ३८ ॥ भ० म०

* "आरेटुः" इति जयमङ्गलासम्मतः पाठः ।

सम्प्राप्य तीरं तमसापगाया
गङ्गाम्बुसम्पर्कविशुद्धिभाजः ।
विगाह्तिं यामुनमम्बु पुण्यं
ययुर्निरुद्धश्रमवृत्तयस्ते ॥३८॥
ईयुर्भरद्वाजमुनेर्निकेतं
यस्मिन् विशश्राम समेत्य रामः ।

सम्प्राप्येति ।—तमसापगायाः तमसाख्यायाः आपगायाः नद्याः, 'अत्यवि-चमि-तमि-नमि-रमि-लभि-नभि-तपि-पति-पनि-पणि-महिभ्योऽसच् । यस्याः स्मरणात् पापं ताम्यति सा तमसा। "तरसा" इति पाठान्तरं, तत्र तरसा वेगेन आपगाया पर्यात्तम-मायाया नद्याः,गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजते या तस्या-स्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययु. गताः । गङ्गेति'गन् गम्यद्योः' इत्यौणादिको गन् ; विगाहितं विगाह्ष्या-मह इति कृत्वा यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलं पुण्यं पुण्यहेतुत्वात् पुण्ययुक्तत्वात् वा ॥ ३८ ॥ ज० म०

सम्प्राप्येति ।—ते जनास्तमसापगायास्तमसानामनद्यास्तीरं कूलं सम्प्राप्य निरुद्धश्रमवृत्तयः सन्तः यामुन यमुनासम्बन्धि पुण्यं पावनम् अम्बु जलं विगाहितुं ययुः । "तरसा" इति पाठे—वेगे-नेत्यर्थः । यमुनाशब्दात् "विकारसङ्घ—" इत्यादिना इदमर्थे अण्, "षित्त्वे ङिः—" इति ङिः । तमसापगायाः कीदृश्याः ? गङ्गाजल-सम्पर्कात् अतिशयितशुद्धिं भजते या तस्याः । "ढाङ्गजवहसह—" इति ण्विः ॥ ३८ ॥ भ० म०

ईयुरिति ।—भरद्वाजमुनेर्निकेतम् आश्रममीयुः गताः, "इणो यण्" इति यत्वम्, अभ्यासस्य "दीर्घ इणः किति" इति

च्युताशनायः फलवद्विभूत्या
व्यस्यन्नुदन्यां शिशिरैः पयोभिः ॥४०॥
वाचंयमान् स्थण्डिलशायिनश्च
युयुक्षमाणाननिशं मुमुक्षून्।
अध्यापयन्तं विनयात् प्रणेमुः
पद्गा भरद्वाजमुनिं सशिष्यम् ॥ ४१ ॥

दीर्घत्वम्; यस्मिन् निकेते रामो विशश्राम विश्रान्तः समेत्य मिलित्वा, तमीयुर्जग्मा इति योज्यम्। फलवद्विभूत्या फलवतां वृक्षाणां समृद्धा हेतुभूतया च्युताशनायोऽपगतबुभुक्षः, "अशनायोदन्या—"इत्यादिना निपातितः, व्यस्यन् उदन्यां वारयन्, असेर्दैवादिकस्य रूपम्, उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥ ४० ॥ ज० म०

ईयुरिति।—ते भरद्वाजमुनेर्निकेतमीयुर्गता इत्यर्थः, 'इन् गतौ' ठौ, "यिनोऽच्यणौ" इति यादेशः, "खेः किति घं:"इति दीर्घः; यस्मिन् निकेते रामः समेत्य सङ्गत्य विशश्राम विश्रान्तः। कीदृशः सः? फलवतां वृक्षाणां विभूत्या समृद्धा च्युताशनायः व्यपगतबुभुक्षः, अशनशब्दात् "कौम्यशात्—"इति क्यः, "धनोदकाशन—" इत्यादिना अन्नार्थे ङः, ततः "शंस्याद:" इत्यः स्त्रीत्वञ्च; च्युता अशनाया यस्य सः, तथा शिशिरैः शीतलैः पयोभिर्जलैरुदन्यां पिपासां व्यस्यन् अपनयन् 'अस्य् इर् क्षेपे' शद:, उदकस्य उदङ् पानार्थे पूर्ववत्। पयोभिरिति 'पीङ्य पाने' "व्रासुस्—" इति असू॥ ४० ॥ भ० म०

वाचंयमानिति।—ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्त्तमानं प्रणेमुः प्रणमन्ति स्म, विनयात् विनयेन अत एव प्रह्वाः

पदातयः, पादाभ्यां गच्छन्तीति "अन्येष्वपि दृश्यते" इति डः, "हिमकाषिहतिषु च" इति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः, पदिति योगविभागाद्वा। कीदृशम् ? अध्यापयन्तं पाठयन्तं, कान् ? वाचंयमान् मौनव्रतान्, "वाचि यमो व्रते" इति खच्, "वाचंयम-पुरन्दरौ च" इति निपातनात् पूर्वपदस्य अमन्तता ; स्थण्डिलशायिनः भूशायिनः, "स्थण्डिलाच्छयितरि व्रते" इति णिनिः ; युयुक्षमाणान् योक्तुमिच्छतः, योगाभ्यासनिष्ठानित्यर्थः, अनिशमविच्छेदेन मुमुक्षून् मोक्षाभिलाषिण इत्यर्थः, अत एव योगाभ्यासमिच्छून् ॥ ४१ ॥ ज० म०

वाचंयमानिति।—ते जनाः सशिष्यं भरद्वाजमुनिं प्रणेमुः 'नमो शब्दनत्यो.' "तृफल—" इति अत एत्वं खिलोपश्च, "प्राग्वस्तो णः—" इति णत्वं नादित्वात् ; विनयात् विनयं विधाय, ल्यबर्थे पञ्चमी हेतौ वा। कीदृशाः ? पन्नाः, एतेन यानस्था अपि ये तेऽपि विनयात् पन्नाः, पद्भ्यां गच्छन्तीति "जनजनात्—" इति डः, पादसमानार्थोऽयं पच्छब्दः। अध्यापयन्तं पाठयन्तं, "क्रीजीङोऽजा—" इतीङ्‌श्च "क्रीङ्जीनां—" इत्यादिना पन्। कान् ? इत्याह,— वाचंयमान् मौनव्रतिनः, "तृभृवृहजि—" इत्यादिना आवन्तवाचाशब्दात् यमः खः, "खित्यव्यय—" इति मन् खश्च, परे तु वाक्शब्दोपपदेन साधयन्ति ; स्थण्डिलशायिनः दृषाच्छादितभूमिशायिनः, ग्रहादित्वात् णिन्, 'व्रते णिन्' इति परः ; युयुक्षमाणान् योक्तुमिच्छून्, योगाभिलाषिण इत्यर्थः, 'युज्योङ् समाधौ' सन् शानः, "शाने ऽतो मन्", अनिशं निरन्तरं मुमुक्षून् मोक्षाभिलाषिणः। 'मुच्लृ श पन्नो मोक्षे' सन्, "सन्भिक्षाशंस उः", "दम्भजुर्षाल्वन्—" इति शास्त्रेः क्यप्, "शासुङ्—" इति इत्, "क्रियात्—" इति षः ॥ ४१ ॥ म० म०

आतिथ्यमेभ्यः परिनिर्विवप्सोः
कल्पद्रुमा योगबलेन फेलुः।
धामप्रथिम्नो म्रदिमान्वितानि
वासांसि च द्राघिमवन्त्युदूहुः॥ ४२ ॥

आतिथ्यमिति।—अतिथ्यर्थमातिथ्यमन्नपानादि, "अतिथेर्ञ्यः"; एभ्यो भरतादिजनेभ्य इति सम्प्रदाने चतुर्थी, परिनिर्विवप्सोः निर्वप्तुमिच्छोः, दातुमिच्छोरित्यर्थः, निपूर्वो वपिर्दाने वर्त्तते, धामप्रथिम्नः धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य, तेजसो बहिर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते, तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन, 'युज समाधौ' इत्यस्य रूपम्; कल्पद्रुमाः फेलुः फलिताः, भक्ष्यान्नपानादिकमित्यर्थः, "तॄफलभजत्रपश्च" इत्येत्वमभ्यासलोपश्च; वासांसि च वस्त्राणि उदूहुः उद्वहन्ति स्म, यजादित्वात् सम्प्रसारणम्; म्रदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि, पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे "पृथ्वादिभ्य इमनिच्—", पृथु-मृदुशब्दयोः "र ऋतो हलादेः—" इति रादेशः। दीर्घशब्दस्य "प्रिय-स्थिर—"इत्यादिना द्राघादेशः पश्चान्मतुप्॥ ४२॥ ज० म०

आतिथ्यमिति।—आतिथ्यम् अतिथ्यर्थमन्नपानादिकम्, एभ्यो भरतादिभ्यः परि सर्वतो निर्वप्तुं दातुमिच्छोर्मुनेर्योगबलेन समाधिबलेन कल्पवृक्षाः फेलुः अर्थात् अन्नपानादिकम्। "तॄफल—" इति अत एत्वं खिलोपश्च। "विकारसङ्घ—"इत्यादिना तादर्थ्ये अतिथेः ञ्यः। निपूर्वो वपिर्दाने वर्त्तते। 'युज्योङ् समाधौ' यजि "यजोः अगो—" इति जस्य गत्वम्। तस्य मुनेर्धामप्रथिम्नो हेतोस्तेजोबाहुल्यात् ते कल्पद्रुमा वासांसि उदूहुः उद्वहन्ति स्म,

आज्ञां प्रतीषुर्विनयादुपास्थु-
र्जगुः सरागं ननृतुः सहावम् ।
सविभ्रमं नेमुरुदारमूचु-
स्तिलोत्तमाद्या वनिताश्च तस्मिन् ॥ ४३ ॥

चकारः समुच्चये, 'वहैजो प्रापणे' "व्ययवह—"इति जिः। कीदृशानि ? म्रदिमान्वितानि मृदुत्वेन युक्तानि, द्राघिमा दैर्घ्यं विद्यते येषां तानि, "गुणादिमन् भावे"इति पृथुमृदुदीर्घशब्देभ्यः इमन्, "पृथुमृदुकृश—" इति पृथुमृदुशब्दयोः ऋकारस्य रः, "वाढान्तिक—"इति दीर्घस्य द्राघादेशः, "औमंच ङित्—"इति ङित्त्वे टेर्लोपः, द्राघिमशब्दात्"मोङ्मभपात्—"इत्यस्त्यर्थे वतुः। तेजसां प्रथिमा यस्य इति मुनेर्विशेषणं केचिदाहुः ॥४२॥ भ० म०

आज्ञामिति ।—तस्मिंस्तपोवने तिलोत्तमाद्या वनिता दिव्यस्त्रियः आगताः आज्ञामादेशं मुनेः प्रतीषुः प्रतीष्टवत्यः, चेटीभवन्त्य इत्यर्थः, प्रतिपूर्व इषिर्ग्रहणे वर्त्तते, तस्य लिटि रूपम् ; विनयादुपास्थुः उपस्थिताः, पादप्रक्षालनादिदानेन उपस्थानं कृतवत्यः, उपपूर्वात्तिष्ठतेर्लुङि सिच्, "गाति-स्था—" इति सिचो लुक्, "सिजभ्यस्तविदिभ्यश्च" इति झेर्जुस्, "उस्यपदान्तात्" इति पररूपम् ; जगुः सरागं सरसं गीतवत्यः, ननृतुः सहावं सशृङ्गारचेष्टं नर्त्तितवत्यः, सविभ्रमं नेमुः सविलासं प्रणताः, उदारमूचुः अग्राम्यमुक्तवत्यः ॥ ४३ ॥ ज० म०

आज्ञामिति ।—धामप्रथिम्नः किम् ? इत्याह, तस्मिन् वने तिलोत्तमाद्या वनिता अप्सरस आगत्य मुनेराज्ञां प्रतीषुर्गृहीतवत्यः, प्रतिपूर्व इषिर्ग्रहणे व्यां रूपम् ; विनयात् उपास्थुः भरतादीनाम् उपासनां चक्रुः, उपपूर्वात्तिष्ठतेर्व्यां रूपम्, "भूस्था-

वस्त्रान्नपानं शयनञ्च नाना
कृत्वाऽवकाशे रुचिसम्प्रक्लृप्तम् ।
तान् प्रीतिमानाह मुनिस्ततः स्म
निवद्ध्वमाद्ध्वं पिबतात्त शेध्वम् ॥ ४४ ॥

पिब—" इति सेलुक्, "यनुम् भिद्दे—" इति मन उम्, "उस्येचो—" इत्याकारलोपः ; सरागं मालवादिरागयुक्तं यथा स्यात्तथा जगुः गीतवत्य', 'गै गाने' ठो ; सहावं शृङ्गार-चेष्टायुक्तं ननृतुः नृत्यं चक्रुः, "हावाः क्रियाः शृङ्गारभावजाः" इत्यमरः ; सविभ्रमं नेमुः प्रणामं चक्रुः । "विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्य्ययः । चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोऽथवा ॥" विलास इत्यन्ये, उदारमग्राम्यमूचुः । "वनिता जनितात्यर्थानु-रागायाञ्च योषिति" इति कोषः । चकारः पूर्वापेक्षया ॥ ४३ ॥ भ० म०

वस्त्रेति ।—ततो वनितोपस्थानानन्तरम् अवकाशे प्रदेशे यथाभिमते वस्त्रान्नपानं, सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः, शयनमित्यधिकरणे ल्युट्, नाना कृत्वा पृथक् कृत्वा रुचिसम्प्र-क्लृप्तं यस्य यावदभिरुचितं तत्तथैव सम्पादितं, "कृपो रो लः" ; प्रीतिमान् मुनिस्तान् भरतादीनाह स्म उक्तवान् । किमाह ? निवद्ध्वं परिधत्त वस्त्राणि, 'वस आच्छादने' इत्यस्य विधौ लोट्, "झलां जश्‌झशि" इति सकारस्य दकारः ; आद्ध्वम् उपविशत, आसेः पूर्ववत् दादेशः ; अत्त खादत अन्नादिकम्, 'अद भक्षणे' इत्यस्मात् लोट् ; पानादिकं पिबत, पिबतेः "पाघ्रा—" इत्यादि-सूत्रेण पिबादेशः ; शेध्व स्वपित शयने । सर्वत्र विधौ लोट् ॥ ४४ ॥ ज० म०

वस्त्रान्नेति ।—ततो वनितोपस्थानानन्तरं धामप्रथिम्नो हेतोर्वा

ते भुक्तवन्तः सुसुखं वसित्वा
वासांस्युषित्वा रजनीं प्रभाते ।
द्रुतं समध्वा रथवाजिनागै-
र्मन्दाकिनीं रम्यवनां समीयुः ॥ ४५ ॥

अवकाशे यथायोग्यस्थाने वस्त्रम् अन्नं पानं शयनञ्च रुचिसम्पन्नं यस्य यथा रुचिस्तथैव सम्पादितम्, अत एव नानाविधं कृत्वा प्रीतिमान् मुनिस्तान् भरतादीन् आह स्म उवाच । किं तत्? इत्याह, निवस्त वस्त्राणि परिधत्त, 'वसङ्ल स्तृतौ' स्वीतराच्छादन,"कप्ध्मयोः—" इति सस्य दत्वम्; निर्दकारपाठे' धे सलोपो वा" इति पाणिनः सलोपः। सर्वत्र विधौ णौ; आस्तम् उपविशत, 'आस लाभङ् उपवेशे' पूर्ववत् । पिबत पयःप्रभृतिकमर्थात्। 'पा पाने' "स्थादान—" इति पिबादेशकरणान्न गुणः, किंवा पिबादेशोऽयमदन्तः, तेन "गुर्वङ—" इत्यस्य न विषयः, "लोपोऽतोऽचो."इत्यकारलोपः; अत्त भक्षयत,'अदृलो भक्षणे', शेध्वं शयनं कुरुत,"शीङो रे गुः",वस्त्रमिति वसेः"त्रासुम्—"इति त्रः,अन्नमिति"गोक्त—"इति सूत्रे"अन्नञ्चवस्त्रन" इति ज्ञापकात् न जग्धादेशः । 'अदो जग्धिरनोदने' इति परसूत्रम् । पानमिति कर्मणि आधारे वा अनट्। शयनमित्याधारेऽनट् ॥४४॥ भ० म०

ते इति ।—ते भरतादयः सुसुखमिति क्रियाविशेषणं, भुक्तवन्तः सन्तो वासांसि वसित्वा परिधाय रजनीमुषित्वा रजनीं रात्रिं,"वसतिक्षुधो—" इति इट्,"कालाध्वनो—"इति द्वितीया; द्रुतं शीघ्रं प्रभाते मन्दाकिनीं नदीं समीयुः सम्भूय गताः, समध्वा अविच्छिन्नाध्वानः, सङ्गता अध्वन इति प्रादिसमासः, "उपसर्गादध्वन." इति समासान्तष्टच् । रथवाजीति द्वन्द्वैक-

वैखानसेभ्यः श्रुतरामवार्त्ता-
स्ततो विशिश्रान पतत्त्रिसङ्घम् ।
अवभ्रंलिहाग्रं रविमार्गभङ्ग-
मानंशिरेऽद्रिं प्रति चित्रकूटम् ॥ ४६ ॥

वद्भावः, तेन सहिता नागा इति शाकपार्थिवादित्वात् समासः, अन्यथा सेनाङ्गत्वात् समुदायस्यैकवद्भावः स्यात्; रम्यवनां रमणीयकाननां रमणीयजलां वा ॥४५॥ ज० म०

ते इति।—सुसुखं यथा स्यात्तथा भुक्तवन्तः कृतभोजना भरतादयो वासांसि वस्त्राणि वसित्वा परिधाय रजनीम् उषित्वा स्थित्वा प्रभाते समध्वा अध्वानं मङ्गताः सन्तः रथवाजिनागैः द्रुतं शीघ्रं रम्यवनां मन्दाकिनीं समीयुः सङ्गतवन्तः। इणश्चरां रूपम् । मन्दाकिनी चित्रकूटवर्त्मनि नदीविशेषो नर्मदेति प्रसिद्धा; गङ्गामात्रे मन्दाकिनीति केचित्। रम्याणि वनानि यत्र, "वनं कानननीरयोः" इति विश्वः। वसित्वेति 'वसङ् स्तृतौ' इत्यस्य रूपम्। उषित्वेति 'वै वसौ निवासे' "सुधवसपूजार्थाच्च—" इति इम्, "ग्रहस्वपाद्योः—"इति जिः। रजनीमिति "देशाध्वकाल—"इति कर्मत्वम्। समध्वा इति "गेरध्वनः"इत्यः, "न्योर्लोपौ तो तं—"इति नस्य लोपः, "यद्योर्लोपः—" इत्यकारलोपः। रथाश्च वाजिनोऽश्वाश्च नागा हस्तिनश्चेतीतरेतरद्वन्द्वः, परे तु 'सेनाङ्गानां बहुत्वे समाहारः, इति रथश्च वाजी च नागश्चेत्येकवचनेन विग्रहं वदन्ति। समाहारविधेरनित्यत्वमित्यन्ये। आदौ रथवाजिशब्दाभ्यां समाहारस्ततो रथवाजिना सहिता नागाः रथवाजिनागाः शाकपार्थिवादित्वादिति केचित् ॥४५॥ भ० म०

वैखानसेभ्य इति।—ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यस्तृतीयाश्रमिभ्यः चित्रकूटे रामोऽस्तीति श्रुतरामवार्त्ताः

दृष्टोर्णवानान् ककुभो बलौघान्
वितत्य शार्ङ्गं कवचं पिनह्य।
तस्थौ सिसङ्ग्रामयिषुः शितेषुः
सौमित्रिरत्रिभुवमुज्जिहानः॥ ४७॥

चित्रकूटनामानमद्रिं पर्वतं प्रति, "लक्षणेत्थम्भूताख्यान—" इत्यादिना कर्मप्रवचनीयसंज्ञा, "कर्मप्रवचनीययुक्ते—" इति द्वितीया; तं लक्ष्यीकृत्य आनंहिरे जग्मुः। अंहतेर्लिटि द्विर्वचनं, "हलादिः शेषः", "अत आदेः" इति दीर्घः, "तस्मान्नुड् द्विहलः" इति नुट्; विशिञ्जानपतत्त्रिसङ्घं कूजत्पक्षिगणम्, अभ्रंलिहाग्रम् अभ्रस्पृक्शिखरं, "वहाऽभ्रे लिहः" इति खश् "अरुर्द्विषत्—" इत्यादिना मुम्; रविमार्गभङ्गम् उच्चैस्तरत्वात् रवेर्मार्गभङ्गो यस्मिंस्तद्राविति॥४६॥ ज० म०

वैखानसेभ्य इति।—ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यो वानप्रस्थेभ्यः श्रुता रामवार्त्ता यैस्तादृशा भरतादयश्चित्रकूटमद्रिं प्रति लक्ष्यीकृत्य आनंहिरे गतवन्तः। 'शिञ्जिङ् गतौ' ठौ, इदित्त्वात् नुम्, द्वित्वं, "श्वान्ताद्याद्युदात्तयोः—" इति खेरात्, "नोर्नुः—" इत्यनुस्वारः, "झो भास्" इति झस्य भास्त्वात्।—"धिक्समया—" इति प्रतियोगे द्वितीया। "वैखानसो वनेवासी वानप्रस्थश्च तापसः" इति वैजयन्ती। अद्रिं किम्भूतम्? विशिञ्जानः पतत्त्रिणां पक्षिणां सङ्घः समूहो यत्र तादृशम्। 'शिजि क्ङ् अस्फुटध्वनौ'। अभ्रंलिहाग्रम् अभ्रस्पृक्शिखरं, परस्मैपदत्वं खः, बाहुल्यात् गुणाभावः, उच्चैस्तरत्वाद्रवेर्मार्गभङ्गो वर्त्मविघातो यस्मिन्॥ ४६॥ भ० म०

दृष्टेति।—बलौघान् दृष्ट्वा सौमित्रिस्तस्थौ स्थितः। अभ्यासस्य "शर्पूर्वाः खयः" इति खयः शेषः। कीदृशः? ककुभो दिश

शुक्रोत्तरासङ्गभृतो विशस्वान्
पादैः शनैरापततः समन्यून् ।

ऊर्णुवानान् आच्छादयतः, ऊर्णोतेरादादिकस्योभयपदिनः शानचि उवङादेशे च रूपम् । शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्य आरोपित-गुणं कृत्वा, "वा ल्यपि" इत्यनुनासिकलोपः ; कवचं पिनह्य बद्ध्वा, 'नह बन्धने' इत्यस्य ल्यपि ; अपिशब्दाकारलोपस्तु "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । धाञ्क्रञोस्तनिनह्योश्च बहुल-त्वेन शौनकिः ॥" इति ; सिसङ्ग्रामयिषुः सङ्ग्रामयितुमिच्छुः, 'सङ्ग्राम युद्धे' इति चौरादिको णिच्, तदन्तस्य सनि प्रथमस्यैकाचो द्विर्वचनम् ; शितेषुः तीक्ष्णशरः, अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्, "अचतुर—" इत्यत्र निपातितः ; उज्जिहानः ऊर्द्ध्वं नयन्, 'ओ हाङ् गतौ' इत्यस्य जुहोत्यादिकस्य "भृञामित्" इति इत्वम् ॥ ४७ ॥ ज० म०

दृष्ट्वेति ।—ककुभो दिश ऊर्णुवानान् आच्छादयतो बलौ-घान् सैन्यसमूहान् दृष्ट्वा सौमित्रिर्लक्ष्मणः कवचं पिनह्य बद्ध्वा शृङ्गविकारं शार्ङ्गं धनुर्वितत्य सज्यं कृत्वा आकर्षणेन विस्तार्य्य वा, अक्षिभ्रुवमुज्जिहान उत्क्षिपन् सिसङ्ग्रामयिषुः युद्धेच्छुः सन् तस्थौ "अवातो डौ."। किम्भूतः ? शितस्तीक्ष्ण इषुः शरो यस्य स तथा । "शो य निशाने" "छाशोर्वा" इति ङिः । ऊर्णुवानानिति 'ऊर्णु ञ्ल आच्छादने' शानः, "श्नुध्वोः—" इत्युवः । वितत्येति 'तन टुञ् विस्तृतौ' "वनतनाद्यनिमां—" इति नस्य लोपः, "ह्रस्वस्य तुक् पिति" । पिनह्येति अपिपूर्वः 'णह्य ञो बन्धे' "वातोऽवाप्योः" इत्यपेरलुक् । सिसङ्ग्रामयिषुरिति 'सङ्ग्राम ङ्ल युद्धे' सन उः । अक्षिभ्रुवमिति अक्षिणी च भ्रुवौ च अक्षिभ्रुवमिति निपातनात् ।

औहिष्ट तान् वीतविरुद्धबुद्धीन्
विवन्दिषून् दाशरथिः सवर्य्यान् ॥ ४८ ॥
समूलकाषं चकषू रुदन्तो
रामान्तिकं बृंहितमन्युवेगाः ।

उज्जिहान इति 'ओ हाङ् त्रि गतौ' शानः", श्नादिः रै हिः", "पृभ्राटेः—" इति खेङिः ॥ ४७ ॥ भ० म०

शुक्लेति ।—दाशरथिस्तान् सवर्य्यान् सवर्गे भवान्, "अशब्दे यत्खौ—" इति यत् ; आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्याह,वीतविरुद्धबुद्धीन् औहिष्ट ऊहितवान्,ऊहतेरात्मनेपदिनो लुङि आट्वृद्धिः। तदेवाविरुद्धबुद्धित्वं दर्शयन्नाह—शुक्लोत्तरासङ्गभृतः शुक्लो य उत्तरासङ्ग उत्तरीयं तं बिभ्रतीति क्विप्, विशस्त्रान् निरायुधान्, पादैरापतत आगच्छतः, मुक्तवाहनत्वात्,शनैर्न त्वरया, प्रमन्यून् प्रकृष्टशोकान् आगतशोकान् वा विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥ ज० म०

शुक्लेति।—दाशरथिस्तान् सवर्य्यान् वीतविरुद्धबुद्धीन् विगतदुष्टमतान् औहिष्ट ज्ञातवान्, 'ऊहङ् वितर्के' ; वर्गात भवार्थे यत्: । कदाचिदात्मीया अपि दुष्टचेतसः स्युरत उक्तं,वीतेति ।—इनः स्तः। वीतविरुद्धबुद्धित्वं कुतो ज्ञातम् ? इत्याह, शुक्लेति—शुक्लो य उत्तरासङ्ग उत्तरीयं तं बिभ्रति इति क्विप् ; युद्धे शुक्लोत्तरासङ्गो निषिद्धः, विशस्त्रान् निरायुधान्, शनैर्मन्दं यथा स्यात्तथा पादैरापतत आगच्छतः, त्यक्तवाहनत्वात्, समन्यून् सशोकान् विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥ भ० म०

समूलेति ।—ते रामान्तिकं रामसमीपं प्राप्ताश्चकषुः पिष्टवन्तः, समूलकाषं समूलं काषित्वा भूमेरधोभागमुत्खन्य, "निमूलसमूलयोः कषः" इति कषेर्णमुल्, "कषादिषु यथाविध्यनु-

आवेदयन्तः क्षितिपालमुच्चैः-
कारं मृतं रामवियोगशोकात् ॥ ४८ ॥
चिरं रुदित्वा करुणं सशब्दं
गोत्राभिधायं सरितं समेत्य।

प्रयोगः"। रुदन्तः रोदनं कुर्वन्तः, हूणाहृतमन्युवेगा विहृतशोकवेगाः 'हृषि हृषौ' इत्यस्य रूपम्; रामवियोगशोकात् कारणात् क्षितिपालं दशरथमुच्चैःकारं कृत्वा मृतं निधनं गतम् आवेदयन्तः, "अव्ययेऽयथाभिप्रेताख्याने—"इति कञो णमुल्, एतदयथाभिप्रेताख्यानमिति अप्रियस्य नोच्चैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति॥४८॥ ज॰ म॰

समूलकाषमिति।—ते रुदन्तो रामान्तिकं रामसमीपदेशं समूलकाषं यथा स्यात्तथा चकषुः पिष्टवन्तः, भूमौ स्वशरीराघातात् समूलस्य साधोभागस्य रामसमीपदेशस्य काषः पेषणं यस्मादिति कषणक्रियाविशेषणम्। काषो घञन्तः, समूलघातवत् णमुलन्त वा। केचित्तु समूलं भूमेरधोभागमपि कषित्वा पिष्ट्वा पुनः पिष्टवन्त इति व्याख्याय णमुलन्तस्य पूर्वकालत्वमाहुः। अन्ये तु णमुलन्तस्यात्र पृथगर्थाभावमाहुः, तेन समूलकाषं चकषुः समूलं चकषुरित्यर्थः। 'कष वधे' अस्यां रूपं, समूलमिति साकल्येऽव्ययीभावः,मूलसहितमित्यर्थो वा। किम्भूतास्ते? हृषितमन्युवेगा विहृतशोकवेगाः, 'हृषि हृषौ'। रामवियोगहेतुकात् शोकात् मृतं क्षितिपालम् उच्चैः कृत्वा आवेदयन्तो ज्ञापयन्तः; उच्चैःकारमिति 'अव्ययात् कञोऽनिष्टकथने णमुल्'। कारं विशं, किंवा उच्चैर्यथा स्यात्तथा आवेदयन्तः। किम्भूतं क्षितिपालम्? कारं रामवियोगो प्राणवियोगकारित्वेनैव विशलं,'कृकङ् विशाने' इत्यस्मात् "कृभावेऽमी" इति वचनात् कर्त्तरि घञ् ॥४८॥ भ॰म॰

मध्येजलाद्राघवलक्ष्मणाभ्यां
प्रत्तं जलं द्व्यञ्जलमन्तिकेऽपाम् ॥ ५० ॥

चिरमिति ।—चिरं महान्तं कालं करुणं सकरुणं सशब्दं प्रतिज्ञाय रुदित्वा, "र-लो व्युपधाद्धलादेः—" इति किस्वे विकल्पिते "रुद-विद—"इत्यादिना कित्वम्; सरितं समेत्य नदीं सम्भूय गत्वा मध्येजलात् जलस्य मध्यात्, तस्माद्वा स्नात्वा उत्थाय अवतीर्य्य, ल्यब्लोपे पञ्चमी, "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः, अपञ्चम्या इति प्रतिषेधात् अम् न भवति,"नाव्ययीभावात् —"इति लुक्प्रतिषेधश्च ; राघवलक्ष्मणाभ्यां अपामन्तिके समीपे जलं प्रत्तं दत्तम्, "अच उपसर्गात्तः" । गोत्राभिधायं नामाभिधायं, "द्वितीयायाञ्च" इति णमुल् ; द्व्यञ्जलमिति अञ्जलिपरिच्छिन्नं जलमञ्जली द्वौ विगृह्य, तद्धितार्थे समासः, "द्वित्रिभ्याञ्जलेः" इति टच् ; ताभ्यां प्रत्येकमञ्जलिप्रदानात्, द्वावञ्जली प्रमाणमस्येत्यस्मिन् वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक्, 'द्विगोर्नित्यम्' इति लुक्,ततः समासान्तो न प्राप्नोति, अतद्धितलुकीत्यधिकारात् ॥ ५० ॥ ज० म०

चिरमिति ।—चिरकालं करुणं सशोकं सफूत्कारं रुदित्वा क्रन्दित्वा सरितं नदीं समेत्य सम्भूय गत्वा मध्ये अवतीर्य्य जलमध्यादाकृष्य वा रामलक्ष्मणाभ्याम् अपाम् अन्तिके जलसमीपे तटे द्व्यञ्जलमञ्जलिद्वयपरिच्छिन्नं जलं गोत्राभिधायं यथा स्यात्तथा प्रत्तं प्रदत्तं, 'डु दाञ् लि दाने' क्तः, "अचस्तो वा" इति पक्षे तादेशः । मध्येजलादिति मध्ये इत्यव्ययं, "हस्ते पाणौ ग्राह्यम्—"इत्यादौ तत्-ग्रहणात् जलस्य मध्यं मध्येजलमित्यव्ययीभावः, यबर्थे पञ्चमी । "अन्यारभ्यार्थोरात्—" इत्यादिना सामान्यतो यबर्थे पञ्चम्युक्ता, तेन सर्वस्मात् कारकाकारकात्

अरण्ययाने सुकरे पिता मां
प्रायुङ्क्त राज्ये बत दुष्करे त्वाम्।

यबर्थे पञ्चमी दुर्निवारा। परन्तु कर्माधाराभ्यां यबर्थे पञ्चमी भूरिप्रयोगार्थमुक्ता, क्वचिदन्यत्रापीति तेरुक्तत्वात्। बोपदेवेनापि सामान्यतो यबर्थे पञ्चमीमुक्ता च "आनन्दादीश्वरः शैलादासनादीक्षतेऽब्जकाम्" इत्यत्र शैलमारुह्य आसने उपविश्य इत्यर्थ इति व्याख्यातं, तेन कर्माधाराभ्यां यबर्थे पञ्चम्या भूरिप्रयोगो ज्ञापितः। "वात् क्रमेर्मोऽतोऽप्याः" इति पीवर्जनात् न मः। मध्ये समेत्य जलादुत्थाय जलं प्रत्तमिति केचित्। द्वाञ्जलमिति द्वयो-रञ्जल्योः समाहार इति "द्वित्रिभ्यामञ्जलेः" इत्यप्रत्ययः, "यथोर्लोपः—" इतीकारलोपः, तत्परिच्छिन्नत्वादभेदोपचारात् जलमपि द्वाञ्जलमुक्तं, ताभ्यामेकैकाञ्जलिदानादञ्जलिद्वयं जलं दत्तमित्यर्थः। केचित्तु अतद्धितार्थे द्विगौ "द्वित्रिभ्यामञ्जलेः" इत्युक्त्वा द्वावञ्जली प्रमाणमस्येति वाक्यं दूषयन्ति, प्रमाणार्थस्य तद्धितवाच्यत्वात्। गोत्राभिधायमिति गोत्रस्य नाम्नोऽभिधायः अभिधानं यत्र, दानक्रियाविशेषणम्, अभिपूर्वात् धाञो घञि "यत् ञ्णित्—" इति यत्; किंवा गोत्रमभिधाय गोत्राभिधायं, द्वितीयान्तात् धातोरणमभिधानात्। केचित्तु आत्मीयैर्धृताभ्यां सीताभ्यां रामलक्ष्मणाभ्याम् अपामन्तिके चिरं रुदित्वा तदनु मध्ये मध्यभागसमीपे सरितं समेत्य नाभिपर्य्यन्तं जलं गत्वेत्यर्थः, जलं प्रत्तम्। कीदृशं जलम्? जलात्, अदेः कर्मणि क्विप्,जलस्य जडस्य अदनीयं, भावे क्विपि जडस्य अदनीयं भोजनं यस्मादिति वा, लोकान्तरं प्राप्तस्यापि दशरथस्य जड़त्वं त्यक्तरामत्वात् प्रेतत्वाद्वा; मनीषादित्वात् डस्य पाक्षिकं लत्वम्। गोत्राभिधाय-मित्यस्य रुदित्वेत्यनेन वा सम्बन्ध इत्याहुः॥ ५०॥ भ० म०

मा गाः शुचं वीर ! भरं वहामुम्
आभाषि रामेण वचः कनीयान् ॥ ५१ ॥

अरण्ययाने इति।—अरण्याय यानं अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान्, युजे रौधादिकस्य लङि रूपं, कर्त्रभिप्राये "प्रोपाभ्यां युजेः—" इत्यात्मनेपदम्। राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त। एवञ्च सति हे वीर ! शुचं शोकं मा गाः मा कार्षीरित्यर्थः, "इणो गा लुङि" "गाति-स्था—" इति सिचो लुक्। वत इति खेदे,किन्तु भरममुं पितुर्नियोगं, 'भृञ् भरणे' इत्यस्मात् "ऋदोरप्" ; वह सम्पादय, विधौ लोट् ; एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः, कर्मणि लुङ्, ब्रवीत्यर्थग्रहणात् द्विकर्मकता। अल्पशब्दादीयसुनि "युवाल्पयोः—' इत्यादिना कनादेशः ॥५१॥

ज० म०

अरण्ययाने इति।—रामेण कनीयान् भरतो वच आभाषि कथितः,ब्रवेरर्थग्रहणात् "याच्ञार्थदुहचि—"इत्यनेन द्विकर्मकत्वं, "गौणे याचादयः" इति गौणकर्मोक्तम्। अल्पशब्दात् "गुणादिष्ठेयसू" इति ईयसुः, "युवाल्पौ कन् वा" इति कनादेशः। किं तद्वचः ? इत्याह—पिता सुकरे सुखसाध्ये अरण्ययाने वनगमने मां प्रायुङ्क्त, दुष्करे दुःखसाध्ये राज्ये राजकर्मणि त्वां प्रायुङ्क्त नियुक्तवान्, "युजेर्ध्यां रुधादित्वात् श्नम्, "युजिर उद्रचः—" इति मं, "नणो नेऽणो" इति नादेशः, "चुङ्—" इति कुङ्, "अपेः अम्नोः", "ईषद्दुःसोः खल्—" इति कञः खल्। "विकारसङ्घ —" इत्यादिना राज्ञः कर्मार्थे ञ्यः, "मन्वजीन्—" इत्यादिना भावकर्म-य-वर्जनात् "न्वोर्लोपौतो—" इति राज्ञो नस्य लोपः। वत खेदे ; एवं सति हे वीर ! शुचं शोकं मा गाः न लभस्व,

क्रती श्रुती वृद्धमतेषु धीमान्
त्वं पैतृकं चेद्वचनं न कुर्य्याः।
विच्छिद्यमानेऽपि कुले परस्य
पुंसः कथं स्यादिह पुत्रकाम्या ? ॥ ५२ ॥

इलो "गा व्यां" "भूस्थापिब—" इति सेर्लुक्; धमं भरं पितृनियोगरूपं त्वं वह सम्पादय, विधौ गो। "भरोऽतिशयभारयोः" इति कोषः ॥५१॥ भ० म०

क्रतीति।—वृद्धानां पण्डितानां मतेषु श्रुतानि क्रतानि च अनुष्ठितानि येनेति"श्राद्धमनेन—"इत्यधिकृत्य"इष्टादि—" इति इनिः,'क्तस्य इन्विषयस्य—'इति कर्मणि सप्तमी; स्वमते भावक्तान्तादस्त्यर्थे इन्; स त्वमेवंविधः धीमान् पैतृकं पितुरागतं, "पितुर्यच्च"इति चकाराहतष्ठञि"इसुसुक्तान्तात् कः"; चेत् यदि वचनं न कुर्य्याः, मध्यमपुरुषैकवचने लिङि रूपं,तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः,अपिशब्दो भिन्नक्रमः, कथं स्यादिह लोके पुत्रकाम्या ? आत्मनः पुत्रेच्छा ? नैवेत्यर्थः। पुत्रशब्दात् "काम्यच्च" इति काम्यच्, तदन्तादप्रत्ययः, टाप् ॥५२॥ ज० म०

क्रतीति।—त्वं पैतृकं पितुरागतं चेत् यदि न कुर्य्याः न करिष्यसि, तदा कुले वंशे विच्छिद्यमानेऽपि परस्य उत्तरकालीनस्य, श्रेष्ठस्य अन्यस्य वा पुंसः कथम् इह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा स्यात्? भवन्तं दृष्ट्वा अग्रिमस्य लोकस्य वचनाकरणेन पुत्रेऽप्यश्रद्धाप्रसङ्गात्। त्वं कथम्भूतः ? वृद्धमतेषु पण्डितमतेषु क्रती श्रुती च वृद्धमतानि क्रतानि येन स वृद्धमतेषु क्रती, वृद्धमतानि श्रुतानि येन सं वृद्धमतेषु श्रुती, "क्तेना दे" इति

अस्माकमुक्तं बहु मन्यसे चेत्
यदीशिषे त्वं न मयि स्थिते च ।
जिह्रेष्यतिष्ठन् यदि तातवाक्ये
जहीहि शङ्कां व्रज शाधि पृथ्वीम् ॥ ५३ ॥

कर्मणि सप्तमी; "क्ता दे" इति व्यापकात् क्तान्तात् कर्त्तरीन् प्रत्ययो बोध्यः; किंवा कृतं करणम् अनुष्ठानं, श्रुतं श्रवणं, क्त-श्रुभ्यां भावे क्तः, ततोऽस्त्यर्थे "नैकाजात्—" इतीन्, बुद्ध-मतेष्विति विषयसप्तमी, धीमान् प्रशस्तबुद्धियुक्तः, पैतृकमिति पितृशब्दादागतार्थे "ढचे कात्—"इति कण्। कुर्य्यां इति "भव्ये वा फलहेत्वोः" इति खौ "कुरुवर्णोपो—" इत्युपो लोपः। पुत्र-काम्येति "ले: काम्यक् स्वेच्छायाम्"इति काम्यक्, "शंस्यादेः" ॥ ५२ ॥ भ० म०

अस्माकमिति।—अस्माकमुक्तम् अस्मत्सम्बन्धि वचनं चेत् यदि बहु मन्यसे आद्रियसे, पितृतुल्यो भ्राता अस्त्यानुमतः कथमेवं न कुर्य्यामिति, यदि च मयि स्थिते नेशिषे न प्रभुत्वं करोषि, प्रभुस्त्वमहं त्वदाज्ञाकार इति, ईशेरादादिकस्य "ईशः से" इतीड़ागमः; गुरुवचनमनतिक्रमणीयं, विशेषतस्तातवाक्यं, तस्मिन्नतिष्ठन् वचनमकुर्वाणः यदि जिह्रेषि लज्जसे, "स्नौ" इति द्विर्वचनम्; एतन्निमित्याह, जहीहि शङ्कां त्यज विकल्पं, व्रज गच्छ अयोध्यां, शाधि पालय पृथ्वीम्। "जहातेश्च—"इति इत्वे विकल्पिते "ई हल्यघोः"इतीत्वम्। शासेः"शा हौ"इति शाभावः, तस्याभीयत्वेनासिद्धत्वात् "हुझल्भ्यो हेर्धिः" ॥ ५३ ॥ ज० म०

अस्माकमिति।—अस्माकमुक्तं वचनं चेत् यदि बहु मन्यसे आद्रियसे, यदि वा मयि स्थिते त्वं न ईशिषे प्रभुत्वं न करोषि,

वृद्धौरसां राज्यधुरां * प्रवोढुं
कथं कनीयानहमुत्सहेय ? ।
मा मां प्रयुङ्क्थाः कुलकीर्त्तिलोपे
प्राह स्म रामं भरतोऽपि धर्म्यम् ॥ ५४ ॥

तातस्य वाक्ये अतिष्ठन् पितृवचनमकुर्वाणो यदि जिह्रेषि लज्जसे, तदा पृथ्वीं शाधि पालय, एवं सति मम पितुश्च वचनं कृतं स्यात्, अतो व्रज गच्छ अयोध्यां. अस्माकं न्यायशाभयं जहीहि त्यज। अस्माकमिति "ज्ञभावक्ता—"इति कर्त्तरि षष्ठी, सम्बन्धे इत्यन्ये ; गौरवे बहुत्वमभिधानात्, अहमपि तव पितृतुल्य इति बहुत्वेन बोध्यते। उक्तमिति भावे क्तः। 'मन्यी ङ् बोधे', 'ईश लङ् ऐश्वर्य्ये' "मन्योरस्येम्—"इति इम्। 'ह्री लि लज्जे,' 'ओ हाक् लि त्यागे' विधौ णौ, "श्नाद्योः—"इत्यादिना ई। 'शासु च लु शासने' "ऊह्वधिशाधि—" इति शाधि ॥ ५३ ॥ भ० म०

वृद्धौरसामिति।—भरतः प्राह, धूर्वहनशीला धूर्नयनशीला इत्यर्थः, अनेकार्थत्वाद्धातूनां, "भ्राज-भास—" इति क्विप्, "राल्लोपः"इति वलोपः ; राज्यस्य समाकृष्य धूर्धात्री प्रकृतिरिति विगृह्य "ऋक्पूर्—" इत्यकारप्रत्ययः, "परवल्लिङ्गम्—" इति धूरिति स्त्रीलिङ्गं, ततष्टाप्। कीदृशीम् ? वृद्धौरसां वृद्धो ज्येष्ठः औरसः पुत्रो यस्याम्, उरसा निर्मित :इति "छन्दसो निर्मिते" इत्यनुवृत्तौ "उरसोऽण् च"इत्यण्, तां, तिष्ठति रामे प्रवोढुं कथमुत्सहेय कनीयान् सन् ? नैवेत्यर्थः। "शकधृष—"इत्यादिना वहेः सहावुपपदे तुमुन्। "गर्हायां लडपिजात्वोः" इत्यनुवृत्तौ "विभाषा कथमि लिङ् च"इति लिङ्, सहेरुत्पूर्वस्य आत्मने-

* "राजधुराम्" इति भरतसम्मतः पाठः।

ऊर्ज्जस्वलं हस्तितुरङ्गमेतत्
अमूनि रत्नानि च राजभाञ्जि।

पादित्वात् लोट्; "इटोऽत्" "लिङः सलोपोऽनन्त्यस्य"। अतो मा मां प्रयुङ्क्थाः मा नियोजय, "माङि लुङ्" "झलो झलि" इति सिचो लोपः। कुलकीर्त्तिलोपे, लोपयतीति लोपः पचाद्यच्, रघुवंशस्य या कीर्त्तिः तस्या लोपे इति समासः, पूर्वैरनाचरितत्वात्; एवञ्च धर्म्यं धर्मादनपेतं भरतोऽपि प्राह स्म उक्तवान् ॥ ५४ ॥ ज० म०

वृद्धौरसामित्यादि।—रामस्य धर्म्यवचनानन्तरं भरतोऽपि धर्म्यं धर्मादनपेतं वचो रामं प्राह: स्म प्रोवाच। "विकारसङ्घ—" इत्यादिना अनपेतार्थे धर्मात् यः। किं प्राह स्म? इत्याह—कनीयानहम् अनुजोऽहं राजधुरां प्रवोढुं कथम् उत्सहेय? उत्साहं करिष्यामि? "कथमा खौ च वा" इति पक्षे खौ, राज्ञो धूः राजधुरा "धुरोऽनक्षस्याः" इति अः, "स्त्रियामत आप्"। "धूः स्यात् भारचिन्तयोः" इति कोषः। कीदृशीम्? वृद्धो ज्येष्ठ औरसः पुत्रो यस्यां ताम्, उरसा निर्मित इति "ढघे कात्—" इति ष्णः, ज्येष्ठपुत्रसम्बन्धिनीं राज्यधुरामित्यर्थः; वहेस्तुमि "सहवहोऽदो ढि" इत्योत्वम्; अत एव कुलकीर्त्तिलोपे ध्रुवं हे मां मा प्रयुङ्क्था न नियोजय, लोपयतीति लोपः, पचादित्वादन्। यद्वा—लोपो नाशः। युजेः "मा टो वा" इति टो, "युजिर उद्यचः —" इति मं, "झसस्ताज्झसि—" इति सेर्लुक्, मायोगेऽमनिषेधः ॥ ५४ ॥ भ० म०

पुनश्चाह, ऊर्ज्जस्वलमित्यादि।—एतद्धस्तितुरङ्गं, सेनाङ्गत्वादेकवद्भावः; ऊर्ज्जस्वलं बलवत्, ऊर्ज्जनमूर्क्, सम्पदादित्वात् क्विप्, सा विद्यते यस्येति "ज्योत्स्ना-तमिस्रा—" इत्यादिना वलच् असुगागमश्च; अमूनि च रत्नानि राजभाञ्जि राजश्रेष्ठानि,

राजन्यकं चैतदहं क्षितीन्द्रः
त्वयि स्थिते स्यामिति शान्तमेतत् ॥ ५५ ॥

इति निगदितवन्तं राघवस्तं जगाद
व्रज भरत ! गृहीत्वा पादुके त्वं मदीये ।
च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः
सकलभुवनराज्यं कारयास्मन्मतेन ॥५६॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे श्रीरामप्रवासो
नाम तृतीयः सर्गः ॥३॥

---

एतच्च राजन्यकं क्षत्रियसमूहः, क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत्। स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥ ५५ ॥ ज० म०

ऊर्जस्वलमिति।—एतदूर्जस्वलं बलवद्धस्तितुरङ्गम्, अमूनि राजयोग्यानि रत्नानि, एतच्च राजन्यकं क्षत्रियसमूहः, एवं सर्वं निवेद्य आत्मानं निराकरोति,त्वयि स्थिते अहं क्षितीन्द्रः स्यां भवेयम् इत्येतत् वचनं शान्तम् अलीकम्,अनुचितमित्यर्थः। अस्तेर्निमन्त्रणे नियोगकरणे प्रार्थने वा लिङ्। 'ऊर्जक् जीवने बले' "ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वल—"इति अस्, ऊर्जो विद्यतेऽस्य इति "गोत्वमेधा—" इत्यादिना रज-आदित्वाद्वलः। हस्तिनश्च तुरङ्गाश्च इति समाहारद्वन्द्वः। राजन्यशब्दात् "विकारसङ्घ—"इत्यादिना सङ्घार्थे कण्॥ ५५ ॥ भ० म०

इतीति।—इति एवं निगदितवन्तम् उक्तवन्तं तं भरतं राघवो रामो जगाद उक्तवान्। किम् ? इत्याह,हे भरत ! मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ, विधौ लोट्। अस्मद्-

स्यदादित्वे "त्यदादीनि च" इति वृद्धसंज्ञायां शेषेदमर्थे "वृद्धाच्छः"। "प्रत्ययोत्तरपदयोश्च" इति मदादेशः। ततश्च पूज्यमानो जनौघैर्जनसमूहैः, च्युतनिखिलविघ्नः अपगताशेषविकल्पः सकलभुवनराज्यं सर्वत्र भूमण्डले राज्यं कारय अनुष्ठापय, पादुके इति योज्यम्; अस्मन्मतेन अस्माकमभिप्रायेण, अत्र मदादेशो न भवति, अस्मदो बहुवचनान्तस्य विवक्षितत्वात्, तत्र ह्येकवचन इति वर्त्तते। ननु कथं मदीय इत्यत्र मदादेशः? बहुवचनान्तत्वादिति विरोधः, पादुके रामस्यैव, तर्हि अस्मन्मतेन इत्यत्रापि एकवचनम्, आवयोः रामलक्ष्मणयोर्मतेनेति षष्ठीसमासे न दोषः॥ ५६॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलायां प्रकीर्णकाण्डे
रामप्रवासो नाम तृतीयः सर्गः॥ ३॥

इतीति।—इत्येवं निगदितवन्तं भरतं राघवो रामो जगाद। किं जगाद? इत्याह—हे भरत! मदीये पादुके गृहीत्वा त्वं व्रज गच्छ अयोध्यामित्यर्थात्; विधौ णौ। "विकारसङ्घ—" इति इदमर्थे ईयः, "युष्मदस्मदोस्त्वाहौ—" इत्यादिना अस्मदो मदादेशः; च्युतनिखिलविघ्नः अपगताशेषविकल्पः जनौघैर्जनसमूहैः पूज्यमानस्त्वं सकलभुवनराज्यम् अस्मन्मतेन कारय पादुके इत्यर्थात्। किंवा—अस्मन्मतेन प्रयोज्यकर्त्रा राज्यं कारय, "वोऽणौ ञेः—" इति प्रयोज्यकर्त्तुः पाक्षिककर्मत्वम्; अत्र "साधनहेतु—" इति तृतीया; अस्मन्मतमेव राज्यं करोतु त्वत्क्रियमाणरक्षणेनेति भावः। किंवा—"रामो राज्यमकारयत्" इतिवत् स्वार्थे ञिः। "चुर्थ्यो ञिः—" इत्यत्र योगविभागात्। किंवा—हे अस्मन्मते! अस्मत्सदृशबुद्धे! राज्यं न कारय न घातय शत्रुभिरित्यर्थः, शीघ्रं गत्वा राज्यं रक्षेति भावः। 'कल गि हिंसे' इत्यस्मात् "ञिः प्रेरणे"। आवयोः रामलक्ष्मणयोरिव मतिर्यस्य तस्य सम्बोधनम्; एतेन

## चतुर्थः सर्गः।

निवृत्ते भरते धीमानत्रे रामस्तपोवनम्।
प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान् ॥१॥

राज्यरक्षणे राममतितुल्यमतित्वं दर्शितम्। किंवा—अस्मन्मतेन राज्यं कारय ज्ञापय, लोकानित्यर्थात्, स्वयम् अहं राज्यं न करोमि, किन्तु रामाज्ञया करोमीति पादुकाग्रहणविनयेन लोकान् ज्ञापय इति भावः। 'कृ कड् विज्ञाने' इत्यस्मात् प्रेरणे ञिः। राज्ञो भावः कर्म वा राज्यम्। अस्माकं मतम् अस्मन्मतं, तेन सीतालक्ष्मणसहितत्वेन बहुत्वविवक्षया न मदादेशः ॥५६॥ भ० म०

इति भरतसेनकृतायां मुग्धबोधिन्यां प्रकीर्णकाण्डे रामप्रवासो नाम तृतीयः सर्गः ॥ ३ ॥

निवृत्ते इति।—धीमान् बुद्धिमान्, अत्र स्थिते मयि कदाचित् भरतः पुनरेष्यतीत्येवं बुद्धिमान् रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे गतः। तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः, दण्डको नाम ऋषिर्भार्गवकन्यामहरत्, तच्छापात् पांशुवर्षेनाक्रान्तः सबन्धुराष्ट्रविनाशो यस्मिन् स्थाने तदुपलक्षितम् अरण्यमभूत्, तदीयिवान् गतवान्। "उपेयिवान्—" इत्यत्र उपसर्गस्यातन्त्रत्वात् केवलादपीण: क्वसुः ॥ १ ॥ ज० म०

निवृत्ते इति।—भरते निवृत्ते सति रामोऽत्रेर्महर्षेस्तपोवनं प्रपेदे गतवान्। तत्र वने मुनिभिः पूजितः सन् दण्डकारण्यमीयिवान् गतः। इणः क्वसुः, "वस्वेकाजाद्घसाम्—" इतीट्, "इणो यण्" "द्विर्वचनेऽचि" "एरनेकाचः"। दण्डकनाम्नः कस्यचिद्राज्ञोऽप-

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः।
बलात् बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा॥२॥
अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्दमम्।
भङ्क्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः॥३॥

राघेन ब्रह्मशापात् तद्देशे अरण्योत्पत्त्या दण्डकारण्यमिति प्रसिद्धिः॥ १ ॥ भ० म०

अटाट्यमानं इति।—महदरण्यमरण्यानी. "इन्द्र-वरुण—" इत्यादिना हिमारण्ययोर्महत्त्वे ङीषानुकौ ; ताम् अटाट्यमानः अत्यर्थमटन् रामः "सूचि-सूत्रि—" इत्यादिना यङ् ; ससीतः सहलक्ष्मणः "वोपसर्जनस्य" इति विकल्पेन सभावः, बलात् बलवत्तया जह्रे हृत, गृहीत इत्यर्थः, कर्मणि लिट्। उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा वैश्रवणशापात्, तुम्बुरुनाम्ना गन्धर्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन, 'भियः षुक्' इत्यौणादिकषुगभावपक्षे रूपम् ॥ २ ॥ ज० म०

अटाट्यमान इति।—बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन रक्षसा राक्षसेन उत्क्षिप्य हस्ताभ्यामुत्थाप्य रामः जह्रे गृहीत इत्यर्थः, कर्मणि ठो। किम्भूतः? सीतया लक्ष्मणेन च सहितो रामः, अरण्यानीं महारण्यम् अटाट्यमानः पुनः पुनरतिशयेन वा अटन् गच्छन् ; "सूत्र-सूत्र—" इति यङ्। केचित्तु "गत्यर्थात् गुलुप—" इति नियमात् अत्रापि वक्रतीविवक्षेत्याहुः, तन्मते पथाऽभावात् वृक्षसंयोगेन वक्रं गच्छन्नित्यर्थः। महदरण्यम् अरण्यानी, "नारीसखो—" इत्यादिना निपातः। "सहः सो वा" इति सहशब्दस्य विकल्पेन सादेशः॥ २ ॥ भ० म०

अवाक्शिरसमिति।—तं विराधाख्यं राक्षसं कृतान्तेनापि

आंह्रिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः ।
अध्यासितं श्रिया ब्राह्म्या शरण्यं शरणैषिणाम् ॥४॥

यमेनापि दुर्दमं दुःखेन दम्यते इति खल्, तौ रामलक्ष्मणौ भुवि निचखतुर्निखातवन्तौ । कीदृशम ? अवाक्शिरसम् अधोमस्तकम्, अवाक् शिरो यस्येति, ऊर्द्ध्वं पादौ यस्येति ऊर्द्ध्वपादं, भुजौ भङ्क्त्वा मोटयित्वा, "जान्तनशां विभाषा" इत्यनुनासिकलोपाभाव-पक्षे रूपम् ॥३॥ ज० म०

अवाक्शिरसमिति ।—तौ रामलक्ष्मणौ तं विराधाख्यं राक्षसं भुजौ भङ्क्त्वा भुवि निचखतुः निखातवन्तौ । "गमहन—" इत्युपधा-लोपः । किम्भूतम् ? अवाक्शिरसम् अधोमस्तकम्, ऊर्द्ध्वपादम् ऊर्द्ध्वौ पादावस्येति बहुव्रीहिः ; अतएव यमेनापि दुर्दमं दुःखेन दमनीयम्, "ईषद्दुःसुषु—" इति खल् । भङ्क्त्वेति भन्जो-ऽनिम इति विभाषितक्त्वात् पक्षे नलोपाभावः ॥३॥ भ० म०

आंह्रिषातामिति ।—ततो विराधवधानन्तरं रघुव्याघ्रौ शर-भङ्गनाम्नो मुनेराश्रमम् आंह्रिषातां गतवन्तौ ; अंहेर्लुङि रूपम् । अध्यासितम् आश्रयीकृतं श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या, ब्रह्मण इयमित्यण्, "ब्राह्मोऽजातौ" इति निपातनात् टिलोपः. "टिड्ढाणञ्—" इत्यादिना ङीप् । शरणे अवस्थाने साधु अनु-कूलं शरण्यं, "तत्र साधुः" इति यत् । शरणैषिणां शरणं त्राण-मेषितुं शीलं येषाम् ॥४॥ ज० म०

आंह्रिषातामिति ।—ततो विराधवधानन्तरं रघुव्याघ्रौ रघुवंशश्रेष्ठौ शरभङ्गनाम्नो मुनेराश्रमम् आंह्रिषातां गतवन्तौ, 'अहि गतौ' टौ । ब्राह्म्या ब्रह्मसम्बन्धिन्या श्रिया लक्ष्म्या अध्या-सितम् आश्रयीकृतं, ब्रह्मणो वेदस्य विप्रस्य तपसो वा इयमिति

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः।
शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनम् ॥५॥
यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने।
दृष्टाः स्थ स्वस्ति वो यामः स्वपुण्यविजितां गतिम् ॥६॥

ण्यः। शरणं त्राणम् एषितुं शीलं येषां तेषां शरण्यं शरणेऽवस्थाने त्राणे वा साधु अनुकूलं, "विकारमङ्ग—" इति साध्वर्थे यः। "शरणं बधरक्षित्रोः शरणं रक्षणे गृहे" इति विश्वः ॥४॥ भ० म०

पुर इति।—शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार, कुक्षित्वात्तस्य। "भी-ह्री भृ हुवाम्—" इति आम्, आमि श्लुभावे द्विर्वचनम्। किं कृत्वा? इत्याह— प्रदिश्य कथयित्वा, किम्? आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनम् आश्रमं, तत्र वासमुपकल्पयेति ॥५॥ ज० म०

पुर इति।—शरभङ्ग आरात् समीपे सुतीक्ष्णनाम्नो मुनेः केतनम् आश्रमं प्रदिश्य तत्र वासं कल्पयेति कथयित्वा रामस्य पुरोऽग्रतः ज्वलनेऽग्नौ वपुः शरीरं जुहवाञ्चकार हुतवान्। "पशाम् वा भीह्री—"इति पशाम्, श्लित्वाद्वित्वे "ह्रादिः रे द्विः" "श्वसक्रन्दामः"। प्रक्षेपमात्रस्य धात्वर्थस्य विवक्षितत्वात् ज्वलन इत्यस्य होमलब्धत्वात् वैयर्थ्यं न वाच्यम् ॥ ५ ॥ भ० म०

तव किमर्थमत्रावस्थानम्? इति चेदाह, यूयमित्यादि। —अपि नाम यूयं समैष्यथ आगमिष्यथ, आङ्पूर्व इण् आगमने वर्त्तते, "एत्येधत्यूट्सु" इति वृद्धिः; इत्यस्मात् कारणात् अस्मिन् वने वयमासिष्महि स्थिताः, आसेर्लुङि रूपम्, "अस्मदो द्वयोश्च" इति चकारस्यानुक्तसमुच्चयत्वादेकत्वे बहुवचनम्। अस्मदागमने किं ते फलम्? इति चेदाह—दृष्टाः स्थ अधुना दृष्टा भवथ, भवद्भिर्मया

तस्मिन् कृशानुसाद्भूते सुतीक्ष्णमुनिसन्निधौ।
उवास पर्णशालायां भ्रमन्ननिशमाश्रमान्॥ ७॥

पुरुषबहुवचने "श्नसोरल्लोपः" इत्यकारलोपः। स्वस्ति कल्याणं वः युष्मभ्यं, "नमःस्वस्ति—" इत्यादिना चतुर्थी, "बहुवचनस्य वस्-नसौ"। स्वपुण्येन विजितां लब्धां गतिं जन्म यामः व्रजामः, रामरूपेण विष्णुरवतीर्णः, तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति भावः॥६॥ ज० म०

यूयमिति।—न केवलं सुतीक्ष्णमुनिकेतनं प्रदिश्य, एतदपि प्रदिश्येति योज्यम्। यूयं समेष्यथ समागमिष्यथ इति हेतोरस्मिन् वने वयमासिष्महि; आङ्पूर्व इन् आगमने वर्त्तते। आसेः "स्वां सिः"। वयमिति एकत्वेऽपि बहुत्वविवक्षा। परे तु एकत्वे वा बहुत्वमस्मदोऽविशेषणस्येत्याहुः। यूयं दृष्टाः स्थ, "लोपोऽस्त्यसो:—" इत्यकारलोपः; स्वस्ति वः कल्याणं युष्मभ्यं, "अलमर्थवषट्—" इत्यादिना चतुर्थी, "द्वितीयायाम्—" इत्यादिना वसादेशः। वय स्वपुण्येन विजितां लब्धां गतिं यामो गच्छामः, विष्णुरूपे त्वयि दृष्टे शोभना गतिर्भविष्यतीत्याशया एतावन्तं कालं तिष्ठाम इति भावः॥६॥ भ० म०

तस्मिन्निति।—तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येनाग्नीभूते, "विभाषा साति: कार्त्स्न्ये" इति सातिः; रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यामुवास उषितवान्। तत्र कृताधिवासस्य वृत्तिमाह—भ्रमन्ननिशमाश्रमान् पर्य्यटन् सदा तपोवनानि, मुनीन् उपासितुम्॥७॥ ज० म०

तस्मिन्निति।—तस्मिन् शरभङ्गे कृशानुसाद्भूते कार्त्स्न्येनाग्नीभूते सति रामः सुतीक्ष्णमुनेः सन्निधौ समीपे पर्णशालायां

वनेषु वासतेयेषु निवसन् पर्णसंस्तरः।
शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे ॥८॥

पर्णकुट्याम् उवास, 'वसै औ निवासे' ठौ, "व्यथयङ—" इति जिः। "कात्स्न्यर्थयत्योः" इति वचनात्, "क्लिलात्—" इत्यादौ साहर्जनात् न षत्वम्; अनिशं निरन्तरम् आश्रमान् भ्रमन् पर्य्यटन्, अर्थात् मुनीनुपासितुम् ॥७॥ भै० म०

वनेष्विति।—वासतेयेषु वसतौ साधुषु, "पथ्यतिथि—" इत्यादिना ढञ्; निवसन् शयानः, संस्तीर्य्यते इति संस्तरः, "ऋदो-रप्"; पर्णानि संस्तरो यस्येति पर्णसंस्तरः; शय्योत्थायं शय्याया उत्थाय, उत्पूर्वात्तिष्ठतेः "अपादाने परीप्सायाम्" इति णमुल्; शय्यते अस्यामिति शय्या, "संज्ञायाम्—" इत्यादिना क्यप्, त्वरया मुखधावनादीन्यपि न कृत्वा मृगान् विध्यन् ताड़यन्, "ग्रहि-ज्या—" इत्यादिना सम्प्रसारणम्; तत्रापि नात्मार्थं लुब्ध इत्याह—आतिथेयः अतिथौ साधु, पूर्ववत् ढञ्; विचक्रमे विहृतवान् स्म। "वेः पादविहरणे" इति तङ् ॥ ८ ॥ ज० म०

वनेष्विति।—वासतेयेषु वसतौ निवासे रात्रौ वा साधुषु वनेषु निवसन् वासं कुर्वन् शयानो वा, पर्णसंस्तरः पत्ररचित-शय्यः सन्, शय्योत्थायं शय्यायास्त्वरया उत्थाय मृगान् विध्यन् ताड़यन् विचक्रमे विहरति स्म; तत्रापि नात्मार्थं वध इत्याह —आतिथेयः अतिथौ साधुः, "ढवे कात्—" इति वसत्यतिथिभ्यां साध्वर्थे ढञ्, "यथोर्लोपः—" इतीकारलोपः। शय्योत्थाय-मित्यभिधानात् पञ्चम्यन्तात् त्वरायां णमुल्; किंवा—शय्याया उत्थानं यस्मै इति मृगवेधनक्रियाविशेषणम्, एतेन शयनो-चितकालेऽपि मृगताड़ननिमित्तं शय्योत्थानं गम्यते, तेन च सुतरां त्वराऽपि। अस्मिन् पक्षे—भावे णञ्"यन् ञ्णित्—"इति

ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन् ।
बुभुजे देवसात् कृत्वा शूल्यमुख्यञ्च होमवान् ॥९॥

यन्, "उदः स्थास्तम्भोः" इति सलोपः । ओरतेऽस्यामिति अय्या, "अोव्रजयज—" इति क्यप्, "ओङो ङ्य्येऽषो" । 'व्यध्यौ ताडे' अहः, "ग्रहस्वपाद्योः—" इति जिः । "वेः पङ्किः" इति विपूर्वात् क्रमो मम ॥८॥ भ० म०

ऋग्यजुषमिति ।—ऋक् च यजुश्च ऋग्यजुषम् "अचतुर—" इत्यादिना निपातितम्; "द्वन्द्वाच्चु-द-ष-हान्तात् समाहारे" इति टच्; ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतः, इङोऽधि-पूर्वस्य लटि शानचि रूपम्; "न लोका—" इति षष्ठीप्रतिषेधः; सामन्यांश्च सामसु साधून् द्विजान्, "तत्र साधुः" इति यत्, "ये चाभावकर्मणोः" इति प्रकृतिभावः; समर्चयन् पूजयन्, शूल्यम् उख्यञ्च मांसं बुभुजे भुक्तवान्; शूले उखायाञ्च स्थाल्यां संस्कृतं, "शूलोखाद्यत्"; "भुजोऽनवने" इति तङ्; किं कृत्वा? देवसात् कृत्वा देवेभ्यो दत्त्वा, तदधीनं कृत्वा, "देये त्रा च" इति चकारात् सातिश्च, होमवान् होमो विद्यते यस्येति कृताग्नि-कार्य्य इत्यर्थः ॥ ९ ॥ ज० म०

ऋग्यजुषमिति ।—ऋग्यजुषम् ऋग्वेदं यजुर्वेदञ्च अधीया-नान् पठतो मुनीन् सामन्यान् सामवेदकुशलांश्च समर्चयन् सम्यक् पूजयन् शूल्यं शूलपाचितम् उख्यं स्थालीसंस्कृतञ्च मांसं देवसात् कृत्वा देवाय देयं कृत्वा बुभुजे, "भुजोऽनवने" इति मम; होमवान् कृताग्निकार्य्यः, नित्यं होमो विद्यतेऽस्येति "भोङ्म-भ्यपात्—" इति वतुः । ऋक् च यजुश्चेति "चेक्याश्चदषहो—" इति षः । 'अधीङ् ल अध्ययने' शानः, "शुध्वोः—" इतीयः । साम-शब्दात् "दघे कात्—" इति साध्वर्थे ष्यः, "मनूवजान्—" इत्या-

वसानस्तन्त्रकनिभे सर्वाङ्गीणे तरुत्वचौ।
काण्डीरः खाङ्गिकः शार्ङ्गी
रक्षन् विप्रांस्तनुत्रवान्॥ १०॥

दिना नलोपाभावः।'अर्चक् पूजे'चुरादिआम्नात् शह्नः। देवसात् देवशब्दात् "देये त्राच" इति चकारात् चसात्। "ढचे कात्—" इति शुक्लोखाभ्यां तत्र सस्कृतेऽर्थे यः॥ ९॥ भ० म०

वसान इति।—असौ रामो वनेष्वानभ्र भ्रान्तवानिति वक्ष्यमाणेन श्लोकेन सम्बन्धः। वसानः परिदधानः,'वस आच्छादने' इत्यस्मात् शानच्; तरुत्वचौ वल्कले प्रत्यग्रे, तन्त्रकः "तन्त्रादचिरापहृते"इति कन्; तन्निभे तत्तुल्ये, सर्वाङ्गीणे सर्वाङ्गाणि व्याप्नुवत्यौ,"तत्सर्वा—"इत्यादिना खः। काण्डीरः काण्डोऽस्यास्तीति "काण्डाण्डादीरन्नीरचौ"। खाङ्गिकः खड्गोऽस्यास्तीति "अत इनिठनौ।" खाङ्गिक इति पाठान्तरम्; तत्र खड्गः "प्रहरणम्" इति ठक्। शार्ङ्गी सधनु, तनुत्रवान् तनुं शरीरं त्रायते इति तनुत्रम्, "आतोऽनुपसर्गे कः", संसर्गे मतुप्, पिनद्धकवच इत्यर्थः, स एवंविधो विप्रान् ब्राह्मणान् रक्षन्॥ १०॥ ज० म०

वसान इति।—असौ रामो वनेष्वानभ्र इति वक्ष्यमाणश्लोकेनान्वयः। कीदृशः? तरुत्वचौ वसानः परिदधानः,'वसन्‌ स्तृतौ' शानः; कीदृशौ? तन्त्रकनिभे नूतनवस्त्रतुल्ये, तन्त्रात् पटोपकरणात् अचिरोद्धृतं वस्त्रं तन्त्रकं, "ढचे कात्—" इति "विकारसङ्घ—" इत्यादिना आदिशब्दात् अचिरोद्धृतार्थे तन्त्रशब्दात् कः; "तन्त्रकस्तु नवाम्बरे" इत्यमरः; सर्वाङ्गीणे सर्वाङ्गं व्याप्नुवत्यौ,"ढचे कात्—"इति तद्व्याप्नोतीत्यर्थे ईनः। काण्डीरः

छित्त्वाऽऽशितङ्गवीनानि फलैर्येष्वाशितम्भवम् ।
तेष्वसौ दन्दशूकारिर्वनेष्वानभ्र निर्भयः ॥११॥
( युग्मकम् )

प्रशस्तकाण्डयुक्तः, "गोत्वणमेधा—" इत्यादिना अस्त्यर्थे ईरः । खाड्गिकः खड्गेन युध्यतेऽसाविति "ढचे कात्—" इति ष्णिकः । शार्ङ्गी शृङ्गस्य विकारः शार्ङ्गं धनुः, "विकारमङ्ग—" इति ष्णः, शार्ङ्गं विद्यतेऽस्येति "नैकाजात्—" इति इन् । तनुं शरीरं त्रायते इति तनुत्रं कवचं, "इनजनात्—" इति डः, तद्युक्तः एवम्भूतः सन् विप्रान् रक्षन् ॥१०॥ भ० म०

छित्त्वेति ।—आशितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात्, "अषड्क्षा—" इत्यादिसूत्रेण खः, पूर्वपदस्य च मान्तत्वं निपात्यते, तान्यरण्यानि छित्त्वा येषु वनेषु फलैराशितम्भवमाशितस्य भवनं तृप्तिर्वर्त्तते, "आशिते भुवः—" इत्यादिना भावे खच्, तेष्वानभ्र, 'णभ्र-वभ्र—' इति गत्यर्थौ धातुः लिटि "अत आदेः" इति दीर्घे "तस्मान्नुड् द्विहलः" इति नुट् । दन्दशूकारिः व्यालानां हन्ता, "लुपसद—" इत्यादिना ईशेयङ्, तदन्तात् "यजजप—" इत्यादिना ऊकः ॥ ११ ॥ ज० म०

छित्त्वेति ।—आशितङ्गवीनानि वनानि छित्त्वा त्यक्त्वा तेषु वनेषु असौ आनभ्र भ्रमति स्म, 'अभ्र गत्यां'ठो, "स्वान्तादा—" इति खेरान् । आशितास्तृप्ता गावो यत्र तदाशितगु, आङ्-पूर्वोऽश्नातिस्तृप्त्यर्थः । परे तु तृप्त्यर्थेऽशितस्यादौ दीर्घ इत्याहुः ; ततः स्वार्थे ईनः, मकारागमो निपातनात्, गोतृप्त्या तृणबाहुल्यमाक्षिप्यते ; केषु ? इत्याह—येषु च फलैराशितम्भवम् आशितेन तृप्तेन भूयते, "भावखे त्वाशिताद्भुवः" इति खः । दन्दशूकानां व्यालानामरिर्हन्ता, निर्भयो भयरहितः ॥ ११ ॥ भ० म०

व्रातीनव्यालदीप्रास्त्रैः सुत्वनः परिपूजयन्।
परिष(पर्ष)द्वलान्*महाब्रह्मैराट नैकटिकाश्रमान्॥१२॥

व्रातीनेति।—तेषु वनेषु भ्रमन् नैकटिकाश्रमान् आट गतवान्, अटेरभ्यासस्य "अत आदेः" इति दीर्घत्वम्; ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयो भिक्षवो ये निवसन्ति ते नैकटिकाः, "निकटे वसति" इति ठक्; तेषामाश्रमांस्तपोवनानि। कीदृशः? व्रातीनव्यालदीप्रास्त्रैः नानाजातीया अनियतवृत्तयः शरीरमायासे ये जीवन्ति ते व्रातास्तेषां यत् कर्म तदपि व्रातं तेन जीवन्ति इति व्रातीनाः; "व्रातेन जीवति" इति खञ्; तेषां व्याला हिंस्रा उपघातकाः, तेषु दीप्रास्त्रैः ज्वलदायुधैः, सप्तमीति योगविभागात् समासः। सुत्वनः सुतवतः परिपूजयन् सोमपायिन इत्यर्थः, "सुयजोर्ङ्वनिप्" तुक्, "न संयोगात्—" इत्यल्लोपो न। पर्षद्वलानिति 'पृष सेचने' अस्मात् पर्षति सिञ्चतीति 'शृषसोदिः' इत्यत्र पर्षंबाहुलकादौणादिको दिः, पर्षत् तत्र यदि "रजःकृष्यासुतिपर्षदो वलच्" इति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच्, अत परिषीदतीति परिषत् क्विबन्तो यदा 'परिषदप्येषा गुणग्राहिणी', तदा परिषत् बलं सहायो येषामिति बहुव्रीहिः। महाब्रह्मैर्महाब्राह्मणैः, "कुमहद्भ्यामन्यतरस्याम्" इति टच्, तैः सह आट॥१२॥ ज॰ म॰

व्रातीनेति।—रामो नैकटिकाश्रमान् आट, 'अट गतौ' ठौ, निकटे वसन्ति नैकटिकाः, "ढघे कात्—" इति णिकः, तेषां मुनीनामाश्रमान् तपोवनानि; किम्भूतः? नानाजातीया अनियतवृत्तयः शरीरक्लेशेन ये जीवन्ति ते व्रातास्तेषां यत् कर्म

* "परिषद्वलान्" इत्यत्र "पर्षद्वलान्" इति जयमङ्गलासम्मतः पाठः।

परेद्यव्यद्य पूर्वेद्युरन्येद्युश्चापि चिन्तयन् ।
वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात् ॥१३॥

तदपि व्रातमिति रूढ़ं. तेन जीवन्तीति व्रातीनाः, पूर्ववदीनः; तेषां मध्ये ये व्याला उपघातकास्तेषु दीप्राणि अस्त्राणि यस्य स तथा । "व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः । सुत्वनः सोमपान् परिपूजयन्, 'षुञ् अभिषवे' "आतुम्—" इति क्वनिप्, "ह्रस्व तन् पिति" इति तन्; आश्रमात् कीदृशात् ? महाब्रह्मैर्महद्भिः ब्रह्मभिर्ब्राह्मणैः परिषद्वलात् सभा-युक्तात्, "देशाद्ब्रह्मणः कुमहद्भ्यां तु वा" इति षः, परि-षीदन्त्यत्रेति क्विप् परिषत् सभा, "गोष्ठ—" इत्यादिना रज-आदित्वाद्वलः । नवाक्षरपादस्यापीष्टत्वात् न चात्र श्लोके छन्दोभङ्गः । "पर्षद्वलात्"इति पाठे—पर्य्युपसर्गस्य इकारलोपो निपातनात् । "आस्थानं संसदास्थानी पर्षत्परिषदौ समे" इति रभसः ।* केचित्तु ब्राह्मणवाचके महच्छब्दविशेषणस्य विरुद्धार्थ-त्वात् महाब्रह्मैर्महातपोभिरुपलक्षितान् सुत्वनः, विशेषणे तृतीया, न च "देशाद् ब्रह्मणः—" इति सूत्रे ब्राह्मणवाचको ब्रह्मशब्द इति नियम इत्याहुः ॥१२॥ भ० म०

परेद्यवीति ।—परेद्यवि परस्मिन्, आगामिनि दिवसे इत्यर्थः, अद्य अस्मिन्नहनि, पूर्वेद्युः पूर्वस्मिन्नहनि, अन्येद्युरन्यस्मिन्नहनि, चिरातिक्रान्ते चिरगामिनि दिवसे, परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् प्रियम्भावुकतां पूर्वं प्रियाप्रियस्वभावनिर्मुक्तत्वादतथाभूतः सन् प्रियो भवतीति प्रिय-म्भावुकः, "आढ्यसुभग—" इत्यधिकृत्य"कर्त्तरि भुवः खिष्णुच्-

* "शङ्खे तैले तथा मांसे वैद्ये ज्योतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते ॥" इति प्रवचनात् ।

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम् ॥१४॥
(युग्मकम्)

खुकञौ" इति खुकञ्; तद्भावः, तामगात् गतः, अर्थात् मुनीन्द्राणामिव । परेद्यव्यादयः शब्दाः "सद्यः-परुत्—" इत्यादिना निपातिताः ॥१३॥ ज० म०

परेद्यवीति।—परेद्यवि परस्मिन्नहनि, अद्य अस्मिन्नहनि, पूर्वेद्युः पूर्वस्मिन्नहनि, अन्येद्युः अन्यस्मिन्नहनि च मुनीन्द्राणां वृद्धिक्षयौ धनशरीरादिगतोपचयापचयौ चिन्तयन् स्मरन् रामः प्रियम्भावुकताम् अगात् प्राप्तवान् । अप्रियोऽपि प्रियो भवतीति "भुवो धे खिष्णु-खुकञौ" इति च्व्यर्थे खुकञ् । परेद्यवि अद्य चेति "कुतः क कुह—" इत्यादिना निपातनात् । "पूर्वान्यान्यतरे—" इति पूर्वान्याभ्याम् एद्युस् ॥१३॥ भ० म०

आतिष्ठद्गु इति।—जपन् मन्त्रमिति सामर्थ्यलभ्यं, सन्ध्याकालोऽधिकरणं तेनात्यन्तसंयोगे द्वितीया, सम्यक् ध्यायन्ति अस्यामिति "आतश्चोपसर्गे" इत्यङ् । किमवधिं सन्ध्याम् ? इत्याह, प्रक्रान्तामायतीगवम्—आयत्यः आयान्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवम् आरब्धाम्; "तिष्ठद्गुप्रभृतीनि च" इत्यव्ययीभावसमासत्वात् साधुः । "नाव्ययीभावात्—" इति सप्तम्या अभावः; आङ्पूर्वादिणः शतरि "इणो यण्" इति यणि ङीपि च रूपम् आयतीति । गावोऽपि गोचरात् गोष्ठमायान्ति दिवसस्याष्टनाडिकावशेषे, सन्ध्याऽपि तदैव प्रवर्त्तते । कियन्तमेवं जपन् ? इत्याह, आतिष्ठद्गु इति—तिष्ठन्ति गावो यस्मिन् काले दोहाय, गावो हि रात्रिप्रथमयामस्य नाडिकायामतीतायाम् अतिक्रान्तायां विश्रान्ताः सत्यः उत्थाय

**ददृशे पर्णशालायां राक्षस्याऽभीकयाऽथ सः।**
**आर्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥१५॥**

दुह्यन्ते। आतिष्ठदिति "आङ्मर्य्यादाऽभिविध्योः" इत्यव्ययी-भावः, "तिष्ठद्गुप्रभृतीनि च" इति चकारस्यानुक्तसमुच्चयार्थत्वा-दव्ययीभाव एव, पुनः समासान्तरं न भवति। प्रातस्तरामिति प्रातरित्यव्ययं प्रभातवाचि, प्रकर्षविवक्षायां तरप्. तदन्तात् "किमेत्—" इत्यादिना आम्; अतिप्रभाते पतत्रिभ्यः कुक्कुटा-दिभ्यः प्रथमं प्रबुद्ध उत्थितः, "पञ्चमी विभक्ते" इति पञ्चमी; रविमादित्यं प्रणमन् यदा चरति तदा प्रियस्यावुक्ततामगादिति पूर्वेण योज्यम ॥१४॥ ज० म०

आतिष्ठद्गु इति।—प्रियस्यावुक्तताम् अगादिति पूर्वेणान्वयः। तिष्ठन्ति स्थिरीभवन्ति गावो यस्मिन् स तिष्ठद्गुः कालः, रात्रेः प्रथमनाड़िका, तत्र हि विश्रान्ता गावः पश्चादुत्थाप्य दुह्यन्ते। आयान्ति गोष्ठं गावो यस्मिन् काले स आयतीगवः कालः अर्द्धास्तमितभास्करः,प्रायशस्तत्रैव गवानयनात्। आङ्पूर्वादिनः शतृः। तिष्ठद्ग्वायतीगवशब्दौ कालेऽव्ययीभावे निपातितौ। आयतीगवकाले पञ्चान्ताम् आरभ्यां सन्ध्यां व्याप्य तिष्ठद्गुकालं यावत् जपन् अर्थाभ्यन्तम्। "अन्यारभ्य—" इत्यादिना आङ्-योगे पञ्चमी. "लुक् परात्" इत्यनेन पञ्चमीलुक्। सन्ध्या-मिति "मदाध्वादि—" इति द्वितीया। आयतीगवमिति "ओत्याँवाँ" इति समस्यामः। प्रातस्तरामिति प्रभाते पतत्रिभ्यः कुक्कुटा-दिभ्योऽपि प्रबुद्धोऽधिकप्रबोधवान् तेभ्योऽपि प्रागुत्थितः सन् रविं प्रणमन्,अधिकभावविवक्षायां पञ्चमी अभिधानात्। पक्षिशब्देभ्यः प्रबुद्ध इत्यन्ये "किमेत्यास्त—"इति चतराम् ॥१४॥भ०म०

ददृशे इति।—पर्णानां शालायां स्थितः स रामः राक्षस्या दृष्टः दृष्टः। कीदृश्या? अभीकया कामुक्या, "अनुकाभिका—"

दधाना बलिभं मध्यं कर्णजाहविलोचना।
वाकत्वचेनातिसर्वेण चन्द्रलेखेव पक्षती ॥१६॥

इत्यादिना निपातितः। दृशेः कर्मणि लिट्। अथ दर्शनानन्तरं भार्य्योढ़म् जढ़भार्य्यम्, जढ़ा भार्य्या यस्येति आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः; अवज्ञाय अनादृत्य सभार्य्यत्वात्, असकौ राक्षसी पापा असौ कुत्सायाम्, "अव्ययसर्वनाम्ना-मकच्"; सौमित्रये लक्ष्मणाय, "श्लाघह्नुङ्—" इत्यादिना सम्प्रदानसंज्ञा; तस्मै स्वाभिप्रायं मैथुनाय आविष्कृतवती। "प्रकाशनस्थेयाख्ययोश्च" इति प्रकाशने तङ् ॥१५॥ ज० म०

ददृशे इति।—अभीकया कामुक्या राक्षस्या सूर्पणखया पर्णशालायां स रामो ददृशे। कर्मणि ठौ। अथ दर्शनानन्तरं भार्य्योढ़ं कृतविवाहं तं रामम् अवज्ञाय सभार्य्यत्वात् अनादृत्य असकौ राक्षसी सौमित्रये लक्ष्मणाय तस्मै स्वस्थित्या मैथुनाभि-प्रायं प्रकाशयामास इत्यर्थः। "प्रतिज्ञानिर्णयप्रकाशे—"इति मम्। "यस्मै दित्सा—" इत्यादिना चतुर्थी। असकौ इति "त्यादिव्यास—"इत्यादिना अटसष्टेः पूर्वोऽक्, परमते अवज्ञाता निन्दिता वा असौ असकौ। तथाच "कुपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते। प्रायोऽगन्त्यस्वरात् पूर्वं सर्वनामतिङ-व्ययात् ॥" इति। जढ़ा भार्य्या येन स तथा, अग्न्याहितादि-त्वात् पक्षे परनिपातः ॥ १५ ॥ भ० म०

दधानेति।—सा तं प्रार्थयाञ्चक्रे इति वक्ष्यमाणेन सम्बन्धः। कीदृशी ? मध्यं स्तनजघनयोरन्तरं बलिभं बलयोऽस्मिन् सन्तीति "तुन्दिबलिवटेर्भः", दधाना धारयन्ती, कर्णजाहविलोचना कर्ण-जाहं कर्णमूलसमीपमित्यर्थः, "तस्य पाकमूले—"इत्यादिना जाहच्; कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युप-

सुपात् द्विरदनासोरुर्मृदुपाणितलाङ्गुलिः।
प्रथिमानं दधानेन जघनेन घनेन सा ॥१७॥

मानेत्यादिना उपपदलोपी बहुव्रीहिः। वाक्त्वचेन वाक् च त्वक् चेति प्राण्यङ्गत्वादेकवद्भावः,"द्वन्द्वात् चुदषहान्तात्—"इति टच्; अतिसर्वेण अतिक्रान्तेन सर्वम् "अत्यादयः—"इति समासः,"एकविभक्ति चापूर्वनिपाते" इति सर्वशब्दस्योपसर्जनत्वेऽपि पूर्वनिपातो न भवति, अपूर्वनिपात इति प्रतिषेधात्। वाक्त्वचेन वाक्त्वचेन माधुर्य्येण मार्दवेन च असाधारणेनोपलक्षितेनेत्यर्थः, इत्थम्भूते तृतीया, चन्द्रलेखेव पक्षती तनुत्वात् पक्षोऽर्द्धमासः, तस्य मूले प्रतिपदि, "पक्षात्तिः" ॥ १८ ॥ ज० म०

दधानेति।—सा तं प्रार्थयाञ्चक्रे इति चतुर्थश्लोकेनान्वयः। वलिभं वलियुक्तं मध्यं दधाना, "गोत्पणमेधा—"इत्यादिना भः। कर्णस्य मूलं कर्णजाहः तत्र विलोचनं यस्याः सा तथा कर्णान्तायतनेत्रेत्यर्थः,अतिसर्वेण माधुर्य्य-सौन्दर्य्याभ्यां सर्वमतिक्रान्तेन वाक्त्वचेन उपलक्षिता, वाक् च त्वक् च इति द्वन्द्वे" चेक्यादुदषहो—"इति अः, विशेषणे तृतीया। पक्षती पक्षमूले प्रतिपदि चन्द्रलेखेव द्रष्टुं सुखत्वात् ॥ १६ ॥ भ० म०

सुपादिति।—शोभनौ पादौ यस्याः असौ सुपात्, "सङ्ख्या-सुपूर्वस्य"इति पादान्तलोपः, "पादोऽन्यतरस्याम"इति यदा ङीप् नास्ति तदेदं रूपम्। द्विरदनासोरुर्द्विरदनासे इव करिपोतकरौ इव ऊरू यस्याः उपमानपूर्वो बहुव्रीहिः, "ऊरूत्तरपदादौपम्ये" इति ऊङ्; रद्यते अनेनेति रदः दन्तः"पुंसि संज्ञायां घः—" करणे,द्वौ रदौ यस्येति द्विरदः। मृदुपाणितलाङ्गुलिः तलञ्च अङ्गुलिश्चेति द्वन्द्वः, तत्र घ्यन्तादल्पाच्तरयोः अल्पाच्तरस्य पूर्वनिपातः,पाण्योस्तलाङ्गुलिः पाणितलाङ्गुलिः मृदुः पाणितलाङ्गुलि-

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलम् ।
कुर्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना ॥१८॥

यस्या इति योज्यम । प्रथिमानं पृथुतां दधानेन धारयता घनेन उपचितेन जघनेन उपलक्षिता सा राक्षसी ॥१७॥ म० म०

सुपादिति ।—शोभनौ पादौ यस्याः सा "सङ्ख्यासुपूर्वस्य—" इति पादस्य पाद्भावः, हिरदनासेव हस्तिशुण्डेव जङ्घे यस्याः सा तथा, "वामलक्षणा—"इत्यादिना ऊप् ; मृदु पाणितलञ्चाङ्गुलिश्च यस्याः सा तथा, ये तु अल्पाचः पूर्वनिपातं तथा प्राण्यङ्गत्वे समाहारं वदन्ति तन्मते प्रथमं तलाङ्गुलिशब्दयोः समाहारद्वन्द्व, तदनु पाणिना सह षष्ठीसमासः, तदनु मृदुना बहुव्रीहिः । प्रथिमानं महत्त्वं दधानेन घनेन निविड़ेन जघनेन उपलक्षिता । "पश्चान्नितम्बः स्त्रीकट्याः क्लीवे तु जघनं पुरः" इत्यमरः ॥ १७ ॥ भ० म०

उन्नसमिति ।—उच्यते अनेनेति वक्त्रं, "सर्वधातुभ्यः—", औणादिकः ष्ट्रन् तत्र वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयुज्यते । वक्त्रं मुखमुन्नसं दधती, "नाभ्यस्ताच्छतुः" इति नुम् न भवति ; उन्नता नासिका यस्मिन्निति "षच् नासिकायाः संज्ञायां नसञ्चा—" इत्यधिकृत्य "उपसर्गाच्च" इत्यच्, नासिकाया नसादेशमापद्यते । शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिंस्तच्छुद्धदत्, "अग्रान्तशुद्ध—" इत्यादिना ददादेशः ; लोले चपले कुण्डले यस्मिन् तत् लोलकुण्डलं, पश्यतो जनान् शंयून् विद्यमानसुखान् कुर्वाणा, शं सुखं तदस्यास्तीति "कं-शंभ्यां बभयुस्तितुतयसः" इति युस्, सित्वात् पदसंज्ञा, अनुस्वारः, अपश्यतो वा शंयून् कुर्वाणा पश्यतान्तु पीड़ाकरी, स्रग्विणी मालावती, "अस्मायामेधा—" इत्यादिना विनिः । सुहसानना हसनं हसः, "स्वनहसोर्वा" इत्यप् ; शोभनहसनमाननं यस्याः सा ॥१८॥ ज०म०

प्राप्य चण्डूर्य्यमाणाऽसौ पतीयन्ती रघूत्तमम् ।
अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियंवदा ॥१९॥
( कलापकम् )

चञ्चदमिति ।—अर्द्धनासिकं वक्रं मुखं दधती, 'उपसर्गा-न्नासिकाया नसादेशो बहुव्रीहौ" इति परे, स्त्रमते नसाशब्दस्य रूपम् । तथाच रभसः—"आननं वदनं तुण्डमाननं नासिका नसा ।" "नसा नासा च नासिका" इति कोषान्तरम् । उच्यते अनेनेति वक्रं, "त्रासुन्—" इति त्रः । वक्रं कीदृशम् ? मुद्दत् मुद्रा दन्ता यस्येति दन्तस्य ददादेशः इति परे, स्त्रमते दत्-शब्दोऽस्ति ; लोले चञ्चले कुण्डले यत्र मुखे तत्तथा, सा किम्भूता ? पश्यतो जनान् शंयून् सुखिनः कुर्वाणा, "शंकंभ्यां य-यु-त-तु-ति-व-भाः" इति अस्त्यर्थे युः । स्त्रग्विणी मालावती, "सङ्मेधास्मायाहिन् वा" इति अस्त्यर्थे विन् । शोभनो हसो यत्र तादृशमाननं यस्याः सा तथा ॥१८॥ भ० म०

प्राप्येति ।—प्राप्य ढौकित्वा चण्डूर्य्यमाणा गर्वितमाचरन्ती, प्राणिनो हन्तव्या इति चरेः "लुपसद—" इत्यादिना भावगर्हायां यङ्, "चरफलोश्च" इत्यभ्यासस्य नुक्, "उत्परस्यातः" इत्युत्वं, "हलि च" इति दीर्घत्वम् ; पतीयन्ती आत्मनः पतिमिच्छन्ती, "सुप आत्मनः क्यच् ।" अनुका अभिलाषुका, "अनुका—" इत्यादिना निपातितः ; रघूत्तमं लक्ष्मणं प्रार्थयाञ्चक्रे प्रार्थितवती प्रियाकर्त्तुमनुलोमयितुं पतिमें स्या इति, "सुखप्रियादानुलोम्ये" इति डाच्, प्रियंवदा प्रियवादिनी, "प्रिय-वशे वदः खच् ।" ॥१९॥ भ० म०

प्राप्येति ।—असौ राक्षसी रघूत्तमं लक्ष्मणं प्राप्य प्रियाकर्त्तुं

सौमित्रे! मामुपायंस्थाः कम्रामिच्छुर्वशंवदाम्।
सुभोगीनां * सहचरीमशङ्कः पुरुषायुषम्॥२०॥

प्रार्थयाञ्चक्रे प्रार्थितवती। किं कुर्वती? चङ्क्रम्यमाणा गर्हितं पुनः पुनश्चरन्ती, "गत्यर्थात् कुटिले—" इति गत्यर्थे यङ्, "चरफलोश्च" "उत्परस्यातः" इति चेनुन् उक उकारश्च, "ह्रस्वच्छ"—" इति दीर्घः; पतीयन्ती आत्मनः पतिमिच्छन्ती, "क्योऽस्याद्—यश्च" इति क्यः, "घीऽच्यरे" इति दीर्घः। किम्भूता सा? अनुका कामुकी, प्रियंवदा प्रियं वदतीति "प्रियवशाद्वद—" इत्यादिना खः, "खित्यव्याज—" इति मन्। प्रियाकर्तुमिति "सपत्रनिष्पत्र—"इत्यादिना आनुकूल्यार्थे डाच्॥१९॥ भ० म०

तां प्रार्थनामाह, सौमित्रे! इत्यादि।—हे सौमित्रे! इच्छुरेषणशीलः, "विन्दुरिच्छुः"इति निपातितः। अशङ्कः निर्विकल्पः सन् किं मां वञ्चयिष्यतीति, मामुपायंस्थाः परिणय, "आशंसायां भूतवच्च"इति लुङ्, "उपाद्यमः स्वीकरणे"इति तङ्, "विभाषोपयमने"इत्यकित्त्वपक्षे रूपम्; कम्रां "नमिकम्पि—" इत्यादिना रः। वशंवदाम् अहं ते वश्येति वदन्तीं, त्वद्भोगीनां तच्छरीराय हिताम् अवैधव्यादिलक्षणयोगात्, "आत्मविश्वजन—"इत्यादिना खः; सहचरीं सहगामिनीं, "भिक्षासेनादायेषु च" इति चकारस्यानुक्तसमुच्चयार्थत्वात् टप्रत्ययः; कियन्तं कालम्? पुरुषायुषं पुरुषस्यायुर्यावत्, "अचतुर—" इत्यादौ निपातितः, "अत्यन्तसंयोगे च" इति द्वितीया, चरणक्रियायाः कालसंयोगात्, यथा मासमुषित इति॥२०॥ ज० म०

सौमित्रे इति।—एतत् प्रार्थयाञ्चक्रे इति पूर्वेणान्वयः। हे सौमित्रे! त्वम् इच्छुः सन् मामुपायंस्थाः परिणय। अभिधानात्

* "सुभोगीनाम्" इत्यत्र "त्वद्भोगीनाम्" इति जयमङ्गलासम्मतः पाठः।

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे ।
असूर्य्यम्पश्यरूपा त्वं किमभीरुररार्य्यसे ? ॥२१॥

---

आशंसायां टो, "उपयमो विवाहे" इति मं, "यमः सूचने वा तूद्वाहे" इति सेविभाषितकित्वात् पक्षे अमलोपाभावः। कीदृशीं माम्? कान्तां कामयमानां, रूपवतीमित्यन्ये, "हिंसदीप—" इत्यादिना रः; वशंवदाम् 'अहं ते वश्या' इति वदन्तीं, "प्रियवशात् —" इत्यादिना खः। सुभोगीनां सुभोगाय हितां, "विकार-सङ्घ—" इत्यादिना ईनः; भुज्यतेऽनेनास्मिन् वा इति भोगः शरीरं, मथुनाद्युपभोग इत्यन्ये। पुरुषस्यायुर्जीवितकालः, निपातनात् अत् स्वार्थे ष्णो वा; पुरुषायुषं कालं व्याप्य सहचरीं सह चरति "हनचरगष्टक्" कमप्रतिरूपकोऽयं सहशब्दः, किंवा पचादि-त्वादच्, गटादित्वादीप्, "सदाध्वादि—" इति द्वितीया। इच्छतीति इच्छुः "विन्दिच्छू" इति निपातः ॥२०॥ भ० म०

तामिति।—राक्षसीं लक्ष्मण उवाच उक्तवान्। किम्? इत्याह—गौष्ठीने वने गोष्ठं भूतपूर्वं यस्मिन् वने, इदानीं नामापि न ज्ञायते, "गोष्ठात् खञ् भूतपूर्वे" इति खञ्; स्त्रीपुंसभीषणे स्त्री च पुमांश्चेति स्त्रीपुंसौ, "अचतुर—" इत्यादौ निपातितौ; तयोर्भीषणे इति षष्ठीसमासः, बिभेतेर्णिचि हेतुभये षुक् तदन्तात् "कृत्यल्युटो बहुलम्" इति कर्त्तरि ल्युट्; तस्मिन्नभीरुः सती किमित्यरार्य्यसे? अत्यर्थमटसि? अर्त्तेः "सूचि-सूत्रि—" इत्यादिना यङ्, "यङि च" इति गुणः, "न न्द्राः"—इति प्रतिषेधस्य प्रतिषेधो यकारपरस्य न द्वित्वनिषेध इति रेफो द्विरुच्यते। भयशीला भीरुः, "भियः क्रु-क्लुकनौ" क्रियाशब्दत्वात् "ऊङुतः" इति ऊङ् न भवति अमनुष्यत्वाच्च, तथा हि लक्ष्मणेनामानुषीयमिति ज्ञाता; तथा च भङ्ग्या दर्शयन् आह—असूर्य्यम्पश्यरूपा अतिगोपनीयतया

मानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्मिणी।
तमस्युरायमाणेह स्वतन्त्रा कथमञ्चसि ?॥ २२॥

सूर्य्यमप्यनिषिद्धदर्शनं न पश्यतीति "असूर्य्यललाटयोः—" इत्यादिना खश्, "पाघ्रा—" इत्यादिना पश्यादेशः; असूर्य्यम्पश्यं रूपं यस्या इति समासः। सा, न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥ २१ ॥ ज० म०

तामिति।—तां राक्षसीं लक्ष्मण उवाच। किम् ? इत्याह —त्वं वने किमर्थमभीरुः सती अराय्यसे ? अत्यर्थं भ्रमसि ? 'ऋ गतौ' "सूत्रसूत्र—" इति यङ्, "यङ्यर्त्तो गुः—" इति गुणः, "नाजन्ताद्देरादिर्द्विः" इति निषेधात् आद्यक्षरस्य न द्विः, "आदौ नवद्रोऽग्रे" इति वर्जनात् रेफसहितस्य यस्य द्वित्वं, "खेराद्यचः—" इति खेर्य्यलोपः, "घोऽनितः" इति खेर्दीर्घः। वने किम्भूते ? गौष्ठीने भूतपूर्वं गोष्ठं यस्मिन्, सम्प्रति गोसञ्चारोऽपि नास्ति अत एव स्त्रीपुंसयोर्भीषणे भयजनके, गावस्तिष्ठन्ति अस्मिन्निति गोष्ठं निपातनात्, "विकारसङ्घ—" इत्यादिना भूतपूर्वेऽर्थे गोष्ठात् खीनः; स्त्री च पुमांश्च स्त्रीपुंसौ निपातनात्, आन्तभीषधातोर्नन्द्यादित्वादनः, "भीभीष् वा" इति भीषादेशः; "भीषिचिन्ति—" इति सूत्रनिर्देशात् भीषधातुरप्यस्तीति केचित्। कीदृशी ? असूर्य्यम्पश्यरूपा सूर्य्यमपि न पश्यति असूर्य्यम्पश्यं, "घटीखारी—" इत्यादिना खश्, "आदान—" इति दृशः पश्यादेशः; असूर्य्यम्पश्यं रूपं यस्याः सा तथा, दृशिना सम्बन्धस्य नञः सूर्य्येण सह समासो गमकत्वात्। न बिभेतीति अभीरुः "क्रु क्रुकौ भियः" इति क्रुः। क्रियावचनस्य भीरुशब्दस्य मनुष्यजातित्वाभावात् "उतोऽयुङ्रज्ज्वादेः" इति सूत्रेण न ऊङ्प्रत्ययः ॥२१॥ भ० म०।

मानुषानिति।—मनोरपत्यानि मानुषाः, "मनोर्जातावञ्यतौ

उद्यम्यम्याकुलेऽरण्ये शालीनत्वविवर्जिता।
कामुकप्रार्थनाऽदृष्टा पतिवत्नी कथं न वा? ॥२३॥

-युक् च" तानभिलष्यन्ती कामयन्ती रन्तुमिच्छन्ती, "वा भ्राश—" इत्यादिना श्यन्; रोचिष्णुः रोचनस्वभावा, "अलं-कृञ्" इत्यादिना इष्णुच्; अत एव दिव्यधर्मिणी दिवि भवा दिव्याः देवाः, राक्षसा अपि देवयोनित्वात्, तेषां धर्मः स्वभावः सोऽस्या अस्तीति "धर्मशील—" इत्यादिना इनिः; अप्सराय-माणा अप्सरा इव आचरन्ती,राक्षसभावं गोप्तुमिति भावः।"उप-मानादाचारे": इत्यधिकारे "कर्तुः क्यङ् सलोपश्च", "ओजसो-ऽप्सरसो नित्यम्—"इति वचनात्; इह वने स्वतन्त्रा कथमश्वसि? भ्रमसि? स्व आत्मा तन्त्रः प्रधानं यस्याः अपराधीनत्वात्; अन-योक्त्या राक्षसीत्वं दर्शयति ॥२२॥ ज० म०

मानुषानिति।—त्वं स्वतन्त्रा सती इह वने कथमश्वसि? भ्रमसि? स्वं तन्त्रं प्रधानं यस्याः सा तथा। "तन्त्रं कुटुम्बे कृत्ये स्यात् कारणेऽपि परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्त्रवाये गदोत्तमे॥" इति विश्वः। मनोरपत्यानि मानुषाः, 'मनोः स्व-अणौ' इति परसूत्रेणापत्यार्थे अण्; स्वमतेऽभिधानात्,तानभि-लष्यन्ती कामयमाना, "क्रमक्लम—" इति पक्षे श्यन्: रोचिष्णु-र्दीप्ता,"भ्राजभूसह —"इति इष्णुः; दिवि भवानां गन्धर्वादीनां यो धर्मस्तद्युक्ता,"नैकाजात्—"इतीन्,दिव्य इति"ढघे कात्—" इति भवार्थे य', "बहुल्यङ्" इति सूत्रस्य पदान्तविषयत्वम्, उवर्णे परे वस्य अपदान्तत्वासम्भवात् खुभ्यामित्यादौ "दान्त-वत्त्वभि" इति दान्तत्वादुत्वं, "नदं तसौ—" इति पदनिषेधात् अत्र न उत्वम्; अप्सरस इव आचरन्ती "धान्ङा—" इति ङाः सलोपश्च, "र्घोऽज्यरे" इति दीर्घः ॥२२॥ भ० म०

उद्यम्यम्येति।—उद्यम्यन्तीत्युद्यम्यस्याः पापाश्रयत्वात् श्रव-

राघवं पर्णशालायामिच्छाऽनुरहसं पतिम्।
यः स्वामी मम कान्तावानीपकर्णिकलोचनः ॥२४॥

रादयः,"उग्रम्पश्य—"इत्यादिना खश् निपात्यते; तैराकुले व्याप्त अरण्ये पतिवत्नी जीवत्पतिः कथं केन प्रकारेण न वा नैव भवसीत्यर्थः, "अन्तर्वत्-पतिवतोर्नुक्"इत्यत्र पतिर्विद्यते यस्या इति मतुप् सिद्धः, जीवत्पत्यां मतुपो वत्वं निपात्यते, नुक् सूत्रेणैव विधीयते, ङीप्प्रत्ययस्तूगित्वादेव सिद्धः। शालीनत्वविवर्जिता अधृष्टतया वर्जिता; शालाप्रवेशमर्हतीति"शालीनकौपीने—"इति खञ् निपात्यते, अधृष्टेऽभिधेये प्रवेशशब्दस्य लोपः, तस्य भावः शालीनत्वम्; कामुकः कामशीलः,"लषपत—"इत्यादिना उकञ्, तस्य प्रार्थनायां पट्वी चतुरा, "वोतो गुणवचनात्"इति ङीष् ॥ २३ ॥ ज० म०

उग्रम्पश्याकुले इति।—कथं वा त्वं पतिवत्नी सभर्तृका न भवसि? पतिसत्त्वे ईदृक्स्थानक्षागासम्भवात्,"नारीसखी,—"इत्यादिना पतिशब्दात् मतोर्वन्नादेशो निपातितः; शालां प्रवेष्टुमर्हति शालीना अधृष्टा, "विकारसङ्घ—"इत्यादिना ईनः, शालीनाया भावः शालीनत्वं,"पुंवत् स्युक्तपुंस्कः—"इति पुंवत्; शालीनत्वविवर्जिता धृष्टेति फलितार्थः,: अरण्ये कामुकस्य प्रार्थनायां पट्वी दक्षा, "शृस्थाभूकमगम—"इति उकः; अरण्ये किम्भूते? उग्रं पश्यन्ति उग्रम्पश्याः सिंहव्याघ्रादयः, पापाशयत्वात् शबराद्यो वा तैराकुले व्याप्ते, "घटीखारी—"इत्यादिना उग्रशब्दात् दृशः खश् ॥ २३ ॥ भ० म०

राघवमिति।—रामं पर्णशालायामवस्थितं पतिमिच्छ अनुरहसं विविक्तप्रासम्,अनुगतो रह इति विग्रह्य"अन्ववतप्ताद्रहसः" इत्यच्; यो राघवो ममापि स्वामी प्रभुः, "स्वामिन्नैश्वर्ये" इति

वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखम् ।
सङ्ग्रामे सर्वकर्मीणौ पाणी यस्यौपजानुकौ ॥२५॥

निपातितं, कान्तावान् सभार्य्यः, प्रवृत्तसम्भोगोऽसौ नाहमिति दर्शयति ; तमेव रूपशौर्य्याभ्यां वर्णयन्नाह,'औपकर्णिकलोचनः—कर्णयोः समीपमुपकर्णं,समीपार्थे अव्ययीभावः,तत्र"प्रायभवः" इति"उपजानूपकर्णोपनीवेष्ठक्" ; शेषमपि शब्दद्वयं प्रयोक्ष्यते ; औपकर्णिके:लोचने यस्य कर्णान्तायतलोचन इत्यर्थः॥२४॥ज०म०

राघवमिति ।—पर्णशालायां स्थितं रामं पतिमिच्छु,"विधि-निमन्त्रण—"इति आमन्त्रणे गौ। अनुगतं रक्तो विजनस्थाने रतं वा यस्य तं, "तस्मान्ववाद्रहसः" इति षः, यो ममापि स्वामी ईश्वरः तस्मिन् सति मद्वरणं न युक्तमिति,कान्तावान् एतेन स्त्री-सुखाभिज्ञोऽपि, अहन्तु तपस्वीति ध्वनिः ; कर्णयोः समीपम् उप-कर्णं, तत्र भव इति "ढवे कात्—"इत्यादिना ष्णिकः ; तादृशे लोचने यस्य स कर्णायतनेत्र इत्यर्थः, एतेन रूपवत्त्वं दर्शितम् ॥ २४ ॥ भ० म०

वपुरिति ।—यस्य राघवस्य वपुः शरीरं चान्दनिकं चन्दनेन सम्पद्यते प्राप्तशोभं भवति, मुखञ्च कार्णवेष्टनिकं कर्णवेष्टनाभ्यां कर्णालङ्काराभ्यां कार्णवेष्टनिकं, तत्र उभयत्र "सम्पादिनि" इति ठक् । पाणी हस्तौ सङ्ग्रामे युद्धे सर्वकर्मीणौ धनुःखड्गादि-व्यापारकर्म्माणि व्याप्नुतः, "तत्सर्वादेः—"इति खः ; औपजानुकौ आजानुकौ, आजानुलम्बावित्यर्थः, अत्र ठक्, "इसुसुक्तान्तात् कः" ॥ २५ ॥ ज० म०

वपुरिति ।—यस्य रामस्य वपुश्चान्दनिकं चन्दनेन राजितम् इति "ढवे कात्—"इति ष्णिकः, यस्य मुखं कर्णवेष्टनाभ्यां कुण्ड-लाभ्यां राजितम् इति पूर्ववत् ष्णिकः,एतेन विलासित्वं दर्शितम् ;

बद्धो दुर्बलरक्षार्थमसिर्येनौपनीविकः ।
यस्यापमाश्मनप्रख्यं सेषु धत्तेऽन्यदुर्वहम् ॥२६॥

यस्य पाणी हस्तौ सङ्ग्रामे युद्धे सर्वस्मिन् कर्मणि धनुःखड्गादि-व्यापाररूपे कुशलौ "विकारसङ्घ—"इति ईनः 'सर्वादेः पथ्यङ्ग-कर्मपत्रपात्रात्तद्व्याप्नोतीत्यर्थे ईनः' इति परः, तस्मात् सर्वकर्मीणौ व्याप्नुतः इत्यर्थः, व्यापनमत्र तत्कारकद्वारैव, एतेन वीरत्वं सूचि-तम् ; औपजानुकौ उपजानु जानुसमीपे भवौ, तावत् प्रलम्बा-वित्यर्थः, एतेन महापुरुषलक्षणम् । "ढवे कात्—"इति कण् । तमिच्छेति योजना ॥ २५ ॥ भ० म०

बद्ध इति ।—येन असिः खड्गः औपनीविकः नीवीसमीपे प्रायेण भवतीति स हि नीवीं प्राप्य वर्त्तमानः पार्श्वयोर्बाहुं निबद्धः । किमर्थम् ? दुर्बलरक्षार्थं दुर्बलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी,तदर्थेत्यादिना सः,तस्यार्थेन नित्यसमासः सर्वलिङ्गता च ; यस्यापं धनुर्धत्ते धारयति आश्मनप्रख्यम् अश्मनो विकार इत्यण्, "अन्"इति प्रकृतिभावे प्राप्ते आश्मनो विकारः उपसङ्ख्यानमिति टिलोपः पाक्षिकः, "विभाषर्ज्यो.—"इत्यतो मण्डूकप्लुत्या विभाषा-ग्रहणानुवृत्तेर्विकारे वाच्ये अन्यत्र अश्मन एव भवति । आश्म-नेन प्रख्या सादृश्यमस्य तदाश्मनप्रख्यमुपघटितमिव ; सेषुं सशरम्, अन्यदुर्वहं दुःखेनोह्यते इति खल् ; रामादन्येन दुर्वह-मित्यर्थः ॥ २६ ॥ ज० म०

बद्ध इति ।—येन रामेण असिर्बद्धः औपनीविकः नीवीसमीपे भवः वामपार्श्वाधोभागस्थायीत्यर्थः ; "स्त्रीकटीवस्त्रबन्धेऽपि नीवी मूलधनेऽपि च" इत्यत्र स्त्रीपदमुपलक्षणम्, अत्र वा लक्षणा ; उपनीविशब्दात्‘‘ढवे कात्—"इति ष्णञः ; तस्यापं धत्ते, अश्मे-वाश्मनः प्रस्तरः, "विकारसङ्घ—"इत्यादिना स्वार्थे णः, "अन्-

जेता यज्ञद्रुहां सङ्ग्रे धर्मसन्तानसूर्वने ।
प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥

वर्णान्—"इत्यादिना अविकारश्चोऽनन्तस्य नलोपानिषेधः ; तत्-प्रख्यं तत्सदृशम्, अश्मनि जातम् अश्ममयम् इति केचित् ; तेषं अयुक्तम्, अन्यदुर्वहं रामादन्येन दुःखेन उह्यते इति "ईषद्-दुःसोः—"इति खल्, दुर्बलानां रक्षैव अर्थः प्रयोजनं यस्य खड्ग-बन्धनस्य चापधारणस्य च तत्तथा । तमिच्छेति योजना ॥ २६ ॥ भ० म०

जेतेति ।—यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसाः, "सत्सू-द्विष—"इत्यादिना क्विप्, तेषां सङ्ग्रामे जेता, तृजन्तोऽयं, ततश्च तृप्रयोगे कर्मणि षष्ठी, धर्मसन्तानसूः पूर्ववत् क्विप्, धर्म-रतः इत्यर्थः, वने वर्त्तमानानां मुनीनां वानप्रस्थादीनामित्यर्थः, तेषां भार्य्याऽग्निपरित्यागात् यानि दारगवानि दाराश्च गावश्चेति दारगवानि, "अचतुर—"इत्यादिना निपातितानि, दारयन्तीति दाराः 'दार-जारौ कर्त्तरि णिलुक् च' इति घञ् ; तेषाञ्च येनाभयं सदा दत्तमिति योज्यम् ; येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्त्तृकत्वम् ॥ २७ ॥ ज० म०

जेतेति ।—यज्ञाय द्रुह्यन्ति यज्ञद्रुहः राक्षसाः, "सत्सू—" इति क्विप् ; तेषां जेता, सङ्ग्रे युद्धे, धर्मसन्तानं सूते इति क्विप् ; यं प्राप्य वने मुनीनां सम्बन्धिनां दारगवादीनां सदा अभयं भयाभावः, दाराश्च गावश्च दारगवानि निपातनात् ; दारय-न्तीति दाराः, "कभावेऽसौ" इति कर्त्तरि घञ्, "पूर्वकाले" इति सूत्रे व्याख्यानात्, विष्णुं नत्वा स्तौति इत्युदाहरता एक-कर्त्तृकयोर्धात्वोः प्राक्काले क्त्वाच् भवतीति लब्धम्, अत्र च येषां प्राप्तिस्तेषामेव अभयं तदभाव उक्त इति समानकर्त्तृत्वमस्त्येव,

ततो वावृत्यमानाऽसौ रामशालां न्यविक्षत ।
मामुपायंस्त रामेति वदन्ती सादरं वचः ॥ २८ ॥
अश्लीकोऽसावहं श्लीमान् स पुष्यतितरां तव ।
पतिरित्यब्रवीद्रामस्तमेव व्रज मा मुचः ॥ २९ ॥

ग्रामादागच्छतीतिवत् क्रियानिषेधेऽपि अन्तरङ्गस्य क्रियाश्रितकार्यस्य निवृत्तेः, केचित् तु स्थितानामित्यध्याहरन्ति। तमिच्छेति योजना ॥ २७ ॥ भ० म०

तत इति।—ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना,'वावृतु वरणे' इति दैवादिकः आत्मनेपदी; रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा; विशेः "शल-इगुपधादनिटः क्सः", "नेर्विशः" इति तङ्; मामुपायंस्त रामेति हे राम ! अहं प्रार्थये भवान् मामुपायस्त परिणयत्विति वाक्यभेदेन योज्यम; "आशंसायां भूतवच्च" इति लुङ्, "उपाद्यमः स्वीकरणे" इति तङ्, "विभाषोपयमने" इत्यकित्त्वपक्षे रूपम्, इत्येवं वचः सादरं वदन्ती ॥ २८ ॥ ज० म०

तत इति।—ततो लक्ष्मणवचनानन्तरं असौ राक्षसी वावृत्यमाना रामं वृण्वती रामस्य शालां गृहं न्यविक्षत,'विश प्रवेशे' "विपराजि—" इति तम् ; तत्, "शलइगुपधादनिटः—" इति क्स,वावृत्यमानेति'वावृत्युङ् आशंसायां मध्यतौ वरणे च'वावृतधातुः 'यिस्त्वादैवादिकः ङित्त्वादात्मनेपदी ; हे राम! भवान् माम् उपायंस्त परिणयतु इति वचः सादरं वदन्ती, "उपयमो विवाहे" इति तम्, आशंसायां टो अभिधानात्,"मासेन चौत्यौ" इति योगविभागात्। अन्यत्रापि चौत्यावितिः दैवोदासचक्रवर्त्ती ॥ २८ ॥ भ० म०

अश्लीक इति।—असौ लक्ष्मणोऽश्लीकः न विद्यते श्रम

लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत्।
मन्मथायुध * सम्पातव्यथ्यमानमतिः पुनः ॥३०॥

स्त्रीति "नद्यृतश्च" इति कप्, "न कपि" इति ह्रस्वप्रतिषेधः, अहं पुनः स्त्रीमान् सभार्यः, प्रशंसायां मतुप्; स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः, "तिङश्च" इति तरप्। "किमेत्—" इत्याम्; तस्मात्तमेव लक्ष्मणं व्रज गच्छ, मा मुचः मा त्याक्षीः, मुचेर्लुङ्, लृदित्वादङ्; इति एवमब्रवी-द्रामः उक्तवान्, आद्यादित्वात् ब्रुवो लङि "ब्रुव ईट्" इति ईटि रूपम् ॥ २८ ॥ ज० म०

अस्त्रीकं इति।—इति रामस्तामब्रवीत्। किं तत्? इत्याह, असौ लक्ष्मणः अस्त्रीकः न विद्यते स्त्री यस्य इति, "नृतः कः"; अहं स्त्रीमान् प्रशस्तस्त्रीयुक्तः, अतः स एव तव पतिः पुष्यति-तरां त्वामित्यर्थात्, 'पुष्यो ल पुष्टौ' "किमेत्याच—" इति उत्कर्षे अतरां, भविष्यत्सामीप्ये कौ अभिधानात्; किंवा "यावत्पुरानिपातयो-र्लट्" इत्यत्र योगविभागात् तत्र भव्ये इति सामीप्ये सप्तमी। तुष्यतीति क्वचित् पाठः;. तस्मात्तमेव लक्ष्मणमेव व्रज, मा मुचः मा त्याक्षीः, 'मुच् ल ष मण्यौ मोचने' लृदित्वात् "पुषादिद्युतादि—" इति ङः ॥ २९ ॥ भ० म०

लक्ष्मणमिति।—लक्ष्मणं पुनर्भूयोऽगमत् लक्ष्मणं प्रति गता, यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षं महावृषं, वृषस्यन्ती-त्युपमानविशेषणमेतत्, तेन वृषं अभ्युमिच्छन्तीति क्यच्, "अश्व-क्षीर—" इत्यादिना असुक्, तद्धि 'अश्ववृषयोर्मैथुनेच्छायाम्' इति; तद्वदगमत्; महोक्षमिति "अचतुर—" इत्यादिसूत्रेण

* "मन्मथायुध" इत्यत्र "कुसुमायुध" इति भरतसम्मतः पाठः।

तस्याः सासद्यमानाया लोलूयावान् रघूत्तमः।
असिं कौक्षेयमुद्यम्य चकारापनसं मुखम् ॥३१॥

निपातितम्; मन्मथस्यायुधानि शराः, आयुध्यन्ते एभिरित्यायुधानि, 'घञर्थे कविधानम्' इति कः; तेषां सम्पातः संश्लेषः तस्मात् व्यथमाना पीड्यमाना मतिर्मनो यस्याः ॥३०॥ ज० म०.

लक्ष्मणमिति।—सा राक्षसी लक्ष्मणं पुनरगमत्, यथा गौः महोक्षं महावृषभं गच्छति, महांश्चासौ उक्षा चेति "जातमहद्वृद्धादुक्ष्णः" इति चः। कीदृशी? वृषस्यन्ती, वृषोऽत्र शुक्रलवचनः, मैथुनाय वृषं शुक्रलपुरुषम् इच्छन्ती, कामुकीत्यर्थः, गोपक्षे वृषं वृषभम् इच्छन्ती, "क्याऽस्वाद्ग्रस" इति क्यच्, "धनोदकाशन—" इत्यादिना सन्, क्यविधानं स्वेच्छायां, सनागमस्तु आभार्थे, तेन मैथुनविषयेच्छाऽवगम्यते, केचित्तु प्रकृत्यर्थत्यागेन मैथुनेच्छामात्रे वृषस्य अश्वस्येति क्यजन्तरूपम्, अत एव "विरथहयानश्वस्यन्तौ" इति नैषधप्रयोगः, तत्र हि हयान् मैथुनायेच्छन्तौ इत्यवगम्यते, प्रकृत्यर्थपुरस्कारे हयशब्दानन्वयापत्ते-रित्याहुः, अन्ये तु वृषस्य अश्वस्य इत्यव्युत्पन्नमेव धातुद्वयं मैथुनेच्छायां वर्त्तते इत्याहुः। कुसुमायुधस्य कामस्य सम्पातेन संश्लेषेण व्यथमाना मतिर्मनो यस्याः, "सन्ताप" इति पाठे—कामेन यः सन्ताप इति व्याख्येयम्। "मन्मथायुध" इति क्वचित् पाठः, आयुध्यन्ते एभिरिति "कृगृभ्या—" इति करणे कः, "कुधोः षाभावे" इत्युक्तेः। मन्यतेऽनयेति करणे क्तिः ॥ ३० ॥ भ० म०

तस्या इति।—सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः, "लुपसद—" इत्यादिना यङ्; रघूत्तमो लक्ष्मणः मुखमपनसमपगतनासिकं चकार, "उपसर्गाच्च" इत्यच्, नासिका नसादेशमापद्यते, तत्र संज्ञायामिति नानुवर्तते। किं कृत्वा?

अहं सूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया ।
दण्डोऽयं चेत्रियो येन मय्यपातीति साऽब्रवीत् ॥ २२ ॥

कौक्षेयमसिमुद्यम्य उत्क्षिप्य, कुक्षौ भव इति "दृतिकुक्षि—", इत्यादिना ढञ् कौक्षेयः, लोलूयावान् अत्यर्थं लवनक्रियायुक्तः, लुनाति लोलूया, यङन्तात् "अ प्रत्ययात्" इत्यकारः, सा विद्यते यस्येति मतुप् ॥ २१ ॥ ज० म०

तस्या इति ।—रघूत्तमो लक्ष्मणः कौक्षेयं कुक्षौ कोषे भवं विद्यमानं तीक्ष्णलोहभवं वा असिं खड्गम् उद्यम्य उत्क्षिप्य राक्षस्याः सासद्यमानायाः समीपे गर्हितं सीदन्त्या उपविशन्त्याः मुखम् अपनसम् अपगतनासिकं चकार, लोलूयावान् अतिशयच्छेदनयुक्तः, तत्कर्त्तृत्वात् "मूत्रसूत्र—" इत्यादिना लूञो यञ्, द्वित्वं, "खेर्गुः" "शंस्यादः" "मोङ्मभक्ष्यादितः" "गत्यर्थाद्गर्हलुप—" इति सदेर्गर्हार्थे यङ्, "ढञे कात्—" इति कुक्षेर्भवार्थे ढेयः, 'कुक्षेस्तीक्ष्णलोहार्थाधिकारे टेयन्' इति केचित् । "कुक्षिः खड्गविधाने स्यात् तीक्ष्णलोहे तथोदरे" इति कोषः । अपनसम् उत्तसमितिवत् ॥ २१ ॥ भ० म०

अहमिति ।—सा राक्षसीत्यब्रवीत्, अहं सूर्पणखेति नाम्ना, नूनमवश्यं त्वया नाज्ञायिषि न ज्ञाताऽस्मि, ज्ञा इत्यस्मात्कर्मणि लुङ्, "स्यसिच्—" इत्यादिना अजन्तत्वात् "चिण्वदिट्", "आतो युक्" इति युक्, "स्वाङ्गाच्च—" इति ङीषि प्राप्ते "नखमुखात् संज्ञायाम्" इति प्रतिषेधः, "पूर्वपदात् संज्ञायाम—" इति णत्वम् । अज्ञाने कारणमाह—येनायं दण्डो नासाच्छेदनलक्षणो मयि अपाति पातितः, पातेः कर्मणि लुङ्, चिणादेशः, "अत उपधायाः" इति वृद्धिः, "चिणो लुक्" । क्षेत्रियः परक्षेत्रे चिकित्स्यः, परक्षेत्रे जन्मान्तरशरीरे यदि अस्यचिकित्सितं तदा नासिकायाः

पर्य्यशाप्सीद्दिविष्ठाऽसौ सन्दर्श्य भयदं वपुः।
अपिस्फवच्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥२३॥

सम्भवात्, "चैत्रियच् परक्षेत्रे चिकित्स्यः" इति निपातनम् ॥ २२ ॥ ज० म०

अहमिति ।—सा राक्षसी इत्यब्रवीत् । किं तत् ? इत्याह—नाम्ना सूर्पणखाऽहं नूनं निश्चितं त्वया नाम्नाऽपि न ज्ञाता, कर्मणि टो,"ज्ञां सिः" "ज्ञनग्रहदृशश्चः—"इति मिण्, "यन् ञ्णित्—"इति यन्, नाम्नेति भेदके तृतीया, सूर्पणखेति नाम्ना उपलक्षितेति केचित्, सूर्पवत् नखा यस्याः सा सूर्पणखा 'पूर्वपदस्थात् ष्णु संज्ञायां णत्वम्' इति परे; स्वमते "ष्णु र्णोऽदान्ते—"इत्यादौ वाशब्दस्य व्यवस्थावाचित्वात्; नखमुखान्तात् संज्ञायामीप्निषेध इति परे; स्वमते "पात्-श्रोणादि—"इत्यादिना स्वाङ्गादीप्प्रत्ययो विभाषितः, ईपोऽभावपक्षे आप् परे तादृशसंज्ञाया अभावात् न ईप्, ईपि सति तु वा का क्षतिः, तत्र वाशब्दो व्यवस्थावाची वा । अज्ञाने हेतुमाह, येनायं दण्डो नासाच्छेदनरूपो मयि त्वया अपाति निपातितः,अयन्तात् पतेः कर्मणि टो । चैत्रियः जन्मान्तरशरीरे चिकित्स्यः, एतज्जन्मनि नासाया अनुत्पत्त्या शरीरान्तरे एव तत्सम्भवात्, "विकारसङ्घ—"इत्यादिना चैत्रशब्दात् जन्मान्तरशरीरे चिकित्स्येऽर्थे इयः, 'चैत्रादियः परक्षेत्रे चिकित्स्ये' इति परसूत्रं, परक्षेत्रे जन्मान्तरशरीरे ॥ २२ ॥ भ० म०

पर्य्यशाप्सीदिति ।—असौ राक्षसी पर्य्यशाप्सीत् आक्रुष्टवती, शपेरनिटः सिचि हलन्तलक्षणा वृद्धिः, "शप उपालम्भने" इति तङ् न भवति, उपालम्भनं हि वाचा शरीरस्पर्शनम् । दिविष्ठा नभसि वर्त्तमाना, "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक्,

खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः ।
विजिग्राहयिषू रामं दण्डकारण्यवासिनोः ॥३४॥

"अस्याश्च—" इति यत्वम् । भयदं रौद्रं वपुः शरीरं सन्दृश्य दर्शयित्वा, बन्धूनां विक्रमं शौर्य्यं मुहुः पुनः पुनः अपिस्फवत् स्फोतीचकार, "अर्त्तिह्री—" इत्यादिना णाविस्यनुवृत्तौ "स्फायो वः" इति वकारः, स्फायतेश्चङि णिलोपः, ऊत्व-द्विर्वचनादि, अभ्यासस्य खयः शेषः, चर्त्वमित्यस्य सन्वद्भावे, निनङ्क्षुः नष्टु-मिच्छुरित्यर्थः, नशेः सनि "मस्जिनशोर्झलि" इति नुम् ॥३३॥ ज० म०

पर्य्यशाप्सीदिति ।—असौ राक्षसी दिविष्ठा सती नभःस्था सती भयदं भयजनकं वपुः सन्दर्श्य पर्य्यशाप्सीत् आक्रुष्टवती, बन्धूनां खरादीनां विक्रमं मुहुर्वारं वारम् अपिस्फवच्च वर्द्धयामास च,रामादीनां भयार्थं विवर्द्ध्य कथयामासेत्यर्थः । निनङ्क्षुः अन्तर्द्धातुमिच्छुः, नशेः सनि "नुप् रधोमुचाम्—" इति नुप्, "शच्छाज—" इति षड्, "षढोः कः सि" । 'शपो ज आक्रोशे' "व्यां सिः" अनिमत्वात् "व्रजवद—" इति व्रिः, दिवि तिष्ठतीति "इनजन्नात्—" इति डः, सप्तम्या अलुक्, यत्वस्याभिधानात् । सन्दर्श्य संपूर्वात् दृशेर्ण्यन्तात् क्त्वो यप् । अपिस्फवदिति'स्फायीङ् वृद्धौ'"णिः प्रेरणे" "पातिस्फायोर्लन्वङौ णौ"इति वङ्, "र्णिश्रि —"इत्यङ्, द्वित्वं,"स्वेः सन्वत्—""जाङ्ङ्ङः स्वः—" । "अपि-स्फुरत्" इति क्वचित् पाठः,तत्र प्रकाशितवतीत्यर्थः,"अपुष्फुरत्" इति पाठेऽपि तथा, 'स्फुर श्रि स्फूर्त्तौ चले' "श्रोत्रीङ्गोऽजा—" इति पक्षे उकारश्चात्वम् ॥३३॥ भ० म०

खरेत्यादि ।—खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनोः पुरः अग्रतः पर्य्यदेविष्ट परिदेवनं कृतवतीति,'देव देवने' इत्यस्मा-

कृते सौभागिनेयस्य भरतस्य विवासितौ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः॥३५॥

नेपदिनः सेटो लुङि रूपम्। परिदेवने कारणमाह—विजि-गीषुः रामं विग्राहयितुं योधयितुमिच्छुः, यङ्गर्लुगन्तस्य सन्नन्तस्य रूपं, "रो रि" इति रेफलोपः, "द्रलोपे—" इति दीर्घत्वम् ॥ ३४ ॥ ज० म०

खरदूषणयोरिति।—रामं विजिग्राहयिषुः विग्राहयितुं खरादिभिः सह योधयितुमिच्छुः सा राक्षसी खरदूषणयोर्भ्रात्रोः पुरोऽग्रतः पर्य्यदेविष्ट क्रन्दितवती,'देवृ ङ् देवने'। किम्भूतयोः ? दण्डकारण्यवासिनोः दण्डकानामारण्ये वसतोः इति ग्रहादित्वाणिन्; वस्तुं शीलमनयोरित्यन्ये; ग्रहेर्णान्तात् सन उः। पुर इति "पूर्वाधरावरा—" इति पूर्वशब्दस्य पुरादेशः, अत एव अस्; तद्योगे "समार्थेना—" इत्यादिना षष्ठी॥३४॥ भ० म०

किं पर्य्यदेविष्ट ? इत्याह,कृते इति।—भरतस्य कृते'कार्य्यं निमित्तं राज्ये अभिषेक्तव्यमिति सुभगा कैकेयी तस्या अपत्यं सौभागिनेयः, "स्त्रीभ्यो ढक्" "कल्याण्यादीनामिनङ्" तत्र सुभगा दुर्भगा चेति पठ्यते;"हृद्भग—" इत्युभयपदवृद्धिः; पित्रा यौ विवासितौ निष्कासितौ दौर्भागिनेयौ कौशल्या सुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितं नासाच्छेदनं पश्यतं, विधौ प्रार्थनायां वा लोट्, थसस्तम्॥ ३५ ॥ ज० म०

कृते इति।—इति पर्य्यदेविष्ट इति पूर्वेणान्वयः, सौभागिनेयस्य सुभगापुत्रस्य भरतस्य कृते निमित्तं यौ दौर्भागिनेयौ दुर्भगापुत्रौ राम-लक्ष्मणौ पित्रा दशरथेन विवासितौ राष्ट्राद्विराकृतौ, तयोश्चेष्टितं नासाच्छेदनरूपं युवां पश्यतं, विधौ लोट्। कृते इत्यव्ययं निमित्तार्थे वर्त्तते, क्विबन्त-कृञ्शब्दात् चतुर्थ्येकवचने,

मम रावणनाथाया भगिन्या युवयोः पुरः।
अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमम् ॥३६॥
असंस्कृत्रिमसंव्यानावनुप्त्रिमफलाशनौ।
अभृत्रिमपरीवारौ पर्य्यभूतां तथाऽपि माम् ॥३७॥

स्वच्छब्दात् सप्तमीत्यर्थे। "बाह्वाद्यतोऽत्रगाबादेः—" इत्यादिना आवन्तत्वात् सुभगा-दुर्भगाशब्दाभ्याम् अपत्यार्थे ण्येयः, "चित्ते त्रिः—" इति द्विपदे वृद्धिः, "कल्याणीसुभगा—" इत्यादिना ण्येयस्य इनयादेशः, "यथोर्लोपः—" इत्यालोपः ॥३५॥ भ० म०

मनेति।—रावणो नाथः प्रभुर्यस्याः, मम विशेषणं, युवयोर्भगिन्या अयं तापसकात् कुतापसात्, कुत्सायां कन्, ध्वंसः नासिकाविनाशः यदि वः युष्माकं गुरूणां क्षमं युक्तं अस्तु मत्यर्थात्, "युष्मदि गुरावेकेषाम्" इति बहुवचनं, तयोर्ज्येष्ठत्वात्, तर्हि क्षमध्वम् उपेक्षध्वं, रावण एव शास्यतीति भावः ॥३६॥ ज० म०

ममेति।—रावणो नाथो यस्यास्तादृश्या मम युवयोः भगिन्या युवयोरेव पुरोऽग्रतः अयं तापसकात् क्षुद्रतपस्विनः सकाशात् ध्वंसो नासाच्छेदनरूपो वृत्तः, अत्र यदि वः युष्माकं क्षमं अस्तु योग्यं, तदा यूयं क्षमध्वं, रावण एव शास्यतीति भावः, "विकारसङ्घ—" इत्यादिना अल्पार्थे कुत्सार्थे वा क, युष्मदो द्वित्वे बहुत्वविवक्षा। क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तम्। "युक्ते योग्ये हिते क्षमम्" इति कोषः। क्षममव्ययमित्यन्ये। "पुनः" इति पाठे मम पुनरिति ॥३६॥ भ० म०

पुनरप्युत्तेजयितुमाह, असंस्कृत्रिमेति।—संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिममुप्त्रिमं भृत्रिमञ्च. "ड्वितः क्त्रिः" "क्त्रेर्मम् नित्यम्"। "संपर्य्युपेभ्यः—" इति सुट्। संपूर्वस्य क्वचिद्भूषणेऽपीष्यते, संस्कृत्रिमं न विद्यते येषामिति नञ्समासः,

श्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा।
प्राणिवस्तव मानार्थं व्रजाश्वसिहि मा रुदः॥३८॥

असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरीयाणि ययोः वल्कलवाससावित्यर्थः, अनुप्तिमाणि फलानि अशनमाहारो ययोः तौ वन्यफलाहारौ, न ग्राम्यभोजनौ, परिव्रियतेऽनेनेति घञ्, "उपसर्गस्य घञि—" इति दीर्घः, मृगाणामनुचरत्वात् अभृत्रिमः परीवारः अनुजीविलोको ययोस्तौ मृगपरिवारौ, तथाऽपि मां पर्य्यभूतां परिभूतवन्तौ, लुङि रूपम् ॥३७॥ ज० म०

असंस्कृत्रिमेति।—तौ असंस्कृत्रिमसंव्यानौ तस्यादीनां संस्कारेण जातं संस्कृत्रिमं, "संपरेः सुम्—" इति सुम्, न विद्यते संस्कृत्रिमं संव्यानमुत्तरीयं ययोः, वल्कलमात्रत्वात्; वपनेन जातम् उप्त्रिमम, अनुप्त्रिमं वन्यं, तादृशं फलमशनमाहारो ययोः, अथवा—नन्द्यादित्वात् कर्त्तरि अनः। "फलाशिनौ" इति क्वचित् पाठः। भरणेन पोषणेन जातो भृत्रिमः परीवारोऽनुजीविजनो ययोः, सर्वत्र "ड्वितस्त्रिः" "त्रेर्मम्नित्यम्" इति त्रिः। परिवृणोति कर्त्तरि घञ्, "व्यतीहारे चः पूर्व्वे—" इत्यत्र व्यतीहारे इति दीर्घनिर्देशात् क्वचित् घञन्ते उपसर्गस्य दीर्घत्वं सूचितम्; तेनात्र परेरिकारस्य दीर्घत्वम्; तौ यद्यपि ईदृशौ तथाऽपि मां पर्य्यभूतां परिभूतवन्तौ। "भूसुवो—" इति सेर्लुक् ॥३७॥ भ० म०

श्वःश्रेयसमिति।—श्वःशब्दः प्रशंसायामाह, शोभनं श्रेय इति वाक्ये "श्वसोवसीयः श्रेयसः" इत्यच्, मयूरव्यंसकादित्वात् सः, श्वःश्रेयसं कल्याणमवाप्तासि प्राप्स्यसि, भविष्यदनद्यतने लुट्; मारयावस्तावित्युक्तं भवति, ताभ्यां भ्रातृभ्यां प्रत्यभाणि प्रतिभाषिता सा, कर्म्मणि लुङ्। प्राणिवस्तव मानार्थं तव

अद्मिमोऽनपराधेऽपि नरान् नक्तन्दिवं वयम्।
कुतस्त्यं भीरु! यत् तेभ्यो द्रुह्यद्भ्योऽपि क्षमामहे?॥३९॥

---

प्राणवियोजनं मा भूदिति जीवावः, 'श्वस प्राणने' 'अन च,' "रुदादिभ्यः सार्वधातुके" इति इट्, "अनितेः" इति णत्वम्। तस्मात् व्रज यथास्थानं गच्छ, आश्वसिहि उद्वेगं त्यज, विधौ प्रार्थनायां वा लोट्, मा रुदः, "माङि लुङ्", "इरितो वा—" इत्यङ्, यदा स नास्ति तदा मा रोदीरिति भावः॥३८॥ ज० म०

श्वःश्रेयसमिति।—भ्रातृभ्यां खर-दूषणाभ्यां सा राक्षसी प्रत्युत्तरं प्रापिता। किं तत्? इत्याह—श्वःश्रेयसं कल्याणम् अवाप्स्यसि प्राप्स्यसि प्रत्ववधेनेत्यर्थात्, स्य। रूपम्; श्वोभवं श्रेयः श्वःश्रेयसं "श्वोऽवसीयस्श्वःश्रेयस—" इति निपातितम्। तव मानार्थम् आवां प्राणिवः जीवावः, 'अन श्वसु प्राणने' "रुद्रो यः—"इतीम्। "प्राग्वतो ण—"इति पक्षे णत्वम्; तस्मात् व्रज गच्छ स्वस्थानमित्यर्थात्, आश्वसिहि आश्वासं लभस्व, उद्वेगं त्यज इत्यर्थः, प्रार्थनायां लोट्, रुदादित्वात् पूर्ववदिम्, त्वं मा रुदः मा रोदीः, "रु-धिर रुद रोदे' इरित्वात् "शासुञ्जिद्युत—" इति पक्षे ङः॥३८॥ भ० म०

अद्मिम इति।—वयम् अनपराधेऽपि नक्तञ्च दिवा च नक्तन्दिवम्, "अचतुर—"इति निपातितं, नरान् अद्मिमो भक्षयामः, 'अद भक्षणे' इति भक्षार्थस्य "रुदादिभ्यः—"इतीट्, "अस्मदोर्द्वयोश्च" इति द्वित्वे वयमिति बहुवचनं, यत एवं हे भीरु! सम्बुद्धौ गुणो न भवति,'संज्ञापूर्वको विधिरनित्यः' इति; कुतस्त्यं कुत एतदागतम् "अव्ययात् त्यप्" 'अमेहक्वतसित्रेभ्यः' इति त्यप्; तेभ्यः नरेभ्यो द्रुह्यद्भ्योऽपि द्रोहं कुर्वाणेभ्योऽपि क्षमामहे? नैवेत्यर्थः,"क्रुधद्रुह—"इति सम्प्रदानत्वम्। क्षमेर्गम्यमानो

तौ चतुर्दशसाहस्रबलौ निर्ययतुस्ततः।
पारश्वधिकधानुष्कप्रात्तिक*प्रासिकान्वितौ ॥४०॥

नअर्थः, तथासूयार्थत्वात्। "क्षमध्वं यदि वः क्षमम्" इत्यस्य प्रतिवचनम् ॥ ३९ ॥ अ० म०

अक्षिम इति।—अनपराधे अपराधाभावेऽपि वयं नरान् नक्तन्दिवं रात्रौ च दिवा च अक्षिमः भक्षयामः, 'जक्ष भ-क्ष-ह भक्ष-हासयोः' इत्यस्मात् रुदादिः, अस्मदो द्वित्वे बहुत्वविवक्षा, अन्यराक्षसयोगात् बहुत्वं, नक्तन्दिवमिति अचतुरादित्वान्नि-पातितं, स्वार्थिकणान्तेन दिवाशब्देन समाहारद्वन्द्वो वा; हे भीरु! द्रुह्यतोऽपि द्रोहं कुर्वतोऽपि तेभ्यो नरेभ्यो वयं क्षमामहे इति यत् तत् कुतस्त्यम्? कुत आगतम्? "त्यबाद्यचिर—" इत्यादिना त्यः, 'यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थी' इति यदः; क्षमते तादर्थ्यविवक्षयैव। भीरु इति "तन्वादेर्वा" इति पक्षे ऊप्, "सुभ्रुटीदरज—" इति ह्रस्वः, ह्रस्वकरणान्न गुणः ॥ ३९॥ भ० म०

ताविति।—ततो निगदनादुत्तरकालं निर्ययतुः निर्गतवन्तौ, चतुर्दशसहस्राणि परिमाणं यस्य बलस्य "तदस्य परिमाणम्" इत्यस्मिन् विषये "शतमानविंशतिकसहस्रवसनादण्" प्राग्वतेः "सङ्ख्यायाः संवत्सर—" इत्युत्तरपदवृद्धिः, चतुर्दशसाहस्रं बलं ययोः तौ, तथा पारश्वधिक-धानुष्क-याष्टिक-प्रासिकान्वितौ परश्वधः प्रहरणमेषामिति "परश्वधात् ठञ्", तथा धनुः प्रहरणमेषां यष्टिः प्रहरणमेषामिति "शक्ति-यष्ट्योरीकक्", प्रासः कुन्तः प्रहरणमित्यौत्सर्गिकष्ठक् तत्र धनुषष्ठक्, "इसुसुक्तान्तात् कः," ततः सेनाङ्गत्वात् कृतैकवद्भावः, तेनान्वितावनुगतौ ॥ ४० ॥ अ०म०

* "प्रात्तिक" इत्यत्र "याष्टिक" इति जयमङ्गलासम्मतः पाठः।

**अथ सम्पततो भीमान् विशिखै रामलक्ष्मणौ ।**
**बहुमूर्द्ध्नो द्विमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥ ४१ ॥**

ताविति ।—ततो वचनानन्तरं तौ खरदूषणौ निर्ययतुः निर्गतौ, चतुर्दशसहस्राणि परिमाणमस्य चतुर्दशसाहस्रं, "विकासङ्ख्य—" इत्यादिना तदस्य परिमाणमित्यर्थे ण्यः, सुपञ्चालादित्वात् परपदे वृद्धिः, चतुर्दशसाहस्रं बलं ययोः तौ, तथा परश्वधैः परशुभिर्युध्यन्ते पारश्वधिकाः, धनुर्भिर्युध्यन्ते धानुष्काः, शक्तिभिर्युध्यन्ते शाक्तिकाः, प्रास्यन्ते इति प्रासाः लगुडाः, कर्मणि घञ्, प्रासैर्युध्यन्ते प्रासिकाः, एभिरन्वितौ अनुगतौ, "ढघे कात्—" इति णिक-कण्-ष्णीकाः ॥४०॥ भ० म०

अथेति ।—अथ एतस्मिन् प्रस्तावे राम-लक्ष्मणौ मृधे सङ्ग्रामे विशिखैः शरैरहतां हतवन्तौ, हन्तिः परस्मैपदी, तस्माल्लङि तसस्ताम, तस्य ङित्वे "अनुदात्त—" इत्यादिना अनुनासिकलोपः । कान्? राक्षसान्, विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वाद्वा; सम्पततोऽभिपततः, बहुमूर्द्ध्नो बहुशिरसः तथा द्विमूर्द्धांस्त्रिमूर्द्धांश्च "द्वित्रिभ्यां षो मूर्द्ध्नः" इति समासान्तः षः; अत एव भीमान् भयानकान्; त्रिमूर्द्धांश्चेत्यत्र "नश्छव्यप्रशान्" इति रुः, पूर्वस्य त्वनुनासिकः,"विसर्जनीयस्य सः" इति सुत्वम् ॥४१॥ ज०म०

अथेति ।—निर्गमनानन्तरं सम्पततः सङ्गच्छतः सम्मुखमागच्छतो राक्षसान् अथात् राम-लक्ष्मणौ मृधे युद्धे विशिखैः बाणैः अहतां, "वनतनाद्यानिमाम्—" इति नस्य लोपः । बहुमूर्द्ध्नो बहुमस्तकान्, एवं द्विमूर्द्धान् त्रिमूर्द्धान्, "द्वित्रेर्मूर्द्ध्नः" इति षः, "रात्सो लोपो नौ—" इति नस्य लोपः । बहुशब्दः विपुलार्थश्चतुष्टादिसङ्ख्यार्थको वा, अत एव भीमान् भयङ्करान् ॥ ४१ ॥ भ० म०

तैर्वृक्ण-रुग्ण-सम्भुग्न-क्षुण्ण-भिन्न-विपन्नकैः ।
निमग्नोद्विग्न-संक्षीणैः पप्रे दीनैश्च मेदिनी ॥४२॥

तैरिति ।—तैः राक्षसैर्मेदिनी पप्रे पूरिता, 'प्रा पूरणे' इत्यस्मात् कर्मणि लिट् । वृक्णैः छिन्नैः, रुग्णैः भग्नहस्तपादैः, सम्भुग्नैः वक्रीकृतदेहैः, क्षुण्णैः सम्पिष्टशरीरैः, भिन्नैः विदारितैः, विपन्नकैः नष्टैः, "अनुकम्पायां कन्"; निमग्नैः परिभूतैः, उद्विग्नैर्भीतैः, संक्षीणैर्जितैः, वयमपीदृशीं दशां प्राप्ता इति, दीनैः हा मातः ! हा भ्रातः ! इत्येवं भाषमाणैः, तत्र व्रश्चि-रुजि-भुजि-मस्जि-विजिभ्यो निष्ठायाम् "ओदितश्च" इति नत्वम्; "चोः कुः" इति कुः, क्षुदि भिदि-पदिभ्यः "रदाभ्यां—" इति दस्य च नः । संक्षीण इति "नुदविद—" इत्यादिना, 'दीङ् क्षये' इत्यस्य स्वादय ओदित इति "ओदितश्च" इति नत्वम् ॥ ४२ ॥ ज० म०

तैरिति ।—तै राक्षसैर्मेदिनी पप्रे पूरिता, 'पॄलि पूर्त्तौ' कर्मणि ठौ । कीदृशैः ? वृक्णैः छिन्नैः, "व्रश्चेः कङ् च" इति क्तस्य नत्वं कङ् च, चस्य वत्वे तन्निमित्तस्य शस्य सत्वे "स्कादेः सो लोपः—", "ग्रहस्वपाद्योः—" इति ञिः । रुग्णैर्भग्नहस्तपादैः, 'रुजो शौ भङ्गे' ओदित्त्वात् "सूत्वाद्योः—" इति क्तस्य नः, जस्य गत्वविधानं "मग्नस्य दोर्भिर्भुवनस्य भारम्" इत्यत्र व्याख्यातम् । सम्भुग्नैर्वक्री-कृतैः, 'भुजो शौ वक्रणे' पूर्ववत्, क्षुण्णैः सम्पिष्टदेहैः, 'क्षुदिर् सम्पेषणे' दान्तत्वात् "सूत्वाद्योः—" इति क्तस्य दस्य च नः, "ष्टुर्णोऽदान्ते—" इत्यादिना पूर्वस्य णत्वे "ष्टुभिः—" इति परस्य नस्य णत्वम्; भिन्नैः विदारितैः, विपन्नकैर्मृतैः, विपूर्वपदिर्मरणे वर्त्तते, स्वार्थे कुत्सायां वा कः; निमग्नैर्भीत्या गुप्तैः, रुधिरप्रवाहे मग्नैर्वा, उद्विग्नैर्भीतैः, 'ओ विजी भय-चलनयोः'; संक्षीणैः योद्धुमसामर्थ्यात् लज्जितैः,

केचित् वेपथुमासेदुरन्ये दवथुमुत्तमम् ।
सरक्तं वमथुं केचित् भ्राजथुं न च केचन ॥४३॥

मृगयुमिव मृगोऽथ दक्षिणेर्मा
दिशमिव दाहवतीं मरावुदन्यन् ।
रघुतनयमुपाययौ त्रिमूर्धा
विषभृदिवोग्रमुखं पतत्रिराजम् ॥४४॥

'ह्री लज्जायां' "ह्रीघ्रात्वोन्द—" इति तस्य नः ; दीनैः सुतादि-दुःखान्वितैः, 'घो दीङ्क्षय चये' ॥ ४२ ॥ भ० म०

केचिदिति ।—तेषां मध्ये केचित् वेपथुं कम्पं,'टु वेपृ कम्पने', आसेदुः प्रापुः, अन्ये दवथुमुपतापमुत्तमं महान्तं, 'टु दु उपतापे', केचिद्वमथुं छर्दनं सरक्तं सशोणितं 'टु वमु उद्गिरणे' भ्राजथुं शोभां नैव केचन न केचिदपि, 'टु भ्राजृ दीप्तौ' सर्वत्र "ट्वितोऽथुच्" ॥ ४३ ॥ ज० म०

केचिदिति ।—तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पम् आसेदुः प्रापुः, 'वेप टवङ् चलने', अन्ये दवथुम् उपतापम् उत्तमं महान्तम् आसेदुः, 'टु दु उपतापे', केचित् वमथुं रक्तेन सह छर्दिमासेदुः, 'टु वम उद्गिरणे', केचन भ्राजथुं दीप्तिं नासेदुः, 'टु भ्राजृ कृष दीप्तौ'. सर्वत्र "ट्वितोऽथुर्भावे" इति अथुः ॥ ४३ ॥ भ० म०

मृगयुमिति ।—अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्धः त्रिशिरा नाम राक्षसः रघुतनयमुपाययौ उपागतः, मृगयुमिव लुब्धकमिव,मृगान्।यातीति मृगयुः 'मृगय्वादयश्च' इत्यौणादिक-कुप्रत्ययान्तः ; दक्षिणेर्मा दक्षिणे ईर्म व्रणं यस्येति "दक्षिणेर्मा लुब्धयोगे" इत्यनिच्, यथा मृगो लुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति, दिशमिव दाहवतीं यथा दिशं दावाग्निवृतां

शितविशिखनिकृत्तकृत्तवक्त्रः
क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः ।
भयमुपनिदधे स राक्षसानाम्
अखिलकुलक्षयपूर्वलिङ्गतुल्यः ॥४५॥

इति भट्टिकाव्ये चतुर्थः सर्गः ॥ ४

मरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाषी उपयाति, उदकमिच्छति "सुप आत्मनः—" इति क्यच्, उदकस्योदन्-भावः, "अशनायो—"इत्यादिना निपातितः, तदन्तात् शतृ-प्रत्ययः ; विषभृदिव यथा विषधरः सर्पं उग्रमुखं भीषणमुखं पतत्रिराजं गरुड़मुपयाति, तद्वत् तमित्यर्थः । "राजाहःसखिभ्य-ष्टच्" ॥ ४४ ॥ ज० म०

मृगयुमिति ।—अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरा नाम राक्षसो रघुतनयं रामम् उपाययौ उपागतः,यथा दक्षिणेर्मा व्याधेन क्षतदक्षिणाङ्गो मृगस्तमेव मृगयुं व्याधं याति तद्वत, मृगं यातीति मृगयुर्निपातनात् ; दक्षिणेऽङ्गे ईर्मं व्याधघातव्रणं यस्य स दक्षिणेर्मा,'दक्षिणादीर्माटम् व्याधव्रणितदक्षिणाङ्गे मृगे' इति परसूत्रं, स्वमते ईर्मन्शब्दोऽप्यस्ति ; किंवा दक्षिणे ईर्मं व्रणं यस्येति "धर्मादन्" इत्यस्य योगविभागादन्, लुब्धकयोगस्त्वभिधा-नात् ।"व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः । यथा वा उदकपानाभि-लाषी मृगो मरौ निर्जलदेशे दाववतीं दिशम् उपयाति, उदकं पातुमिच्छतीति "धनोदकाशन—" इति क्ये इनङ् शतृः । यथा वा विषभृत् सर्पं उग्रमुखं भीषणवदनं पतत्रिराजं गरुड़म् उपयाति ॥४४॥ भ० म०

शितेति ।—त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उप-निहितवान् । कीदृशः ? शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि

छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य सः, क्षिति-भृदिव भूधर इव, कीदृशः ? क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गाणि यस्य क्षितिभृतः, अखिलस्य सर्वस्य कुलस्य क्षये विनाशे यत् पूर्वं लिङ्गं तेन तुल्यः असावप्यखिल-राक्षसक्षयस्य पूर्वलिङ्गतुल्यः ॥ ४५ ॥ ज० म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामप्रवासश्चतुर्थः सर्गः ॥४॥

---

शितेति ।—शितविशिखैस्तीक्ष्णबाणैर्निकृत्तानि छिन्नानि कृत्स्नानि सर्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान्, क्षितिभृदिव पर्वत इव, क्षिति-कम्पात् कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स तथा । त्रिमूर्द्धः किम्भूतः ? अखिलकुलक्षयपूर्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः, तस्य यत् पूर्वलिङ्गं पूर्वचिह्नं भाविक्षयसूचक उत्पातः, तत्तुल्यः । केचित्तु अखिलकुलस्य क्षये पूर्वलिङ्गम् आदिचिह्नं त्रिमूर्द्धः, तादृशः पर्वत इत्याहुः ॥ ४५ ॥ भ० म०

इति सद्वैद्यगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धवधो नाम चतुर्थः सर्गः ॥४॥

---

# पञ्चमः सर्गः ।

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥१॥
तौ खड्गमुषलप्रास-चक्रबाणगदाकरौ ।
अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥२॥

---

निराकरिष्णू इति।—खरदूषणौ रणं परितः समन्तात्, 'अभितः—'इत्यादिना द्वितीया ; चेरतुः भ्रान्तौ, निराकरिष्णू शत्रुनिराकरणशीलौ, वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ, न पलायनशीलौ, वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ, उत्पतिष्णू नभस उत्पतनशीलौ, सहिष्णू शस्त्रप्रहारसहनशीलौ, सर्वत्र "अलंकृञ्—"इत्यादिना इष्णुच् ॥१॥ ज॰ म॰

निराकरिष्णू इति।—खरदूषणौ रणं परितः सर्वतश्चेरतुः,'चर गत्यां' ठौ, "धिक् समया—" इति परितोयोगे द्वितीया। निराकरिष्णू शत्रुनिराकरणशीलौ, वर्त्तिष्णू वर्त्तनशीलौ, अर्थात् प्रतियोद्धृसम्मुखे रणं परित इति वा अनुषञ्जनीयम् ; वर्द्धिष्णू मायया वर्द्धनशीलौ, उत्पतिष्णू आकाशादुत्पतनशीलौ, सहिष्णू प्रतियोद्धृशस्त्राघातादिसहनशीलौ, सर्वत्र "णिश्राजभूसह—" इत्यादिना कर्त्तरीष्णुः, शीलार्थता तु "ढन्श्रे क्रत्यच्य—" इति सूत्रे शीलार्थे तृन् इत्युक्तं, किन्तु तृन्विधायकसूत्रे शीलार्थता नोक्ता, अत एव तृनादयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात्, किंवा अभिधानाच्छीलार्थता, अनुक्तावपि न क्षतिः। निराकुर्वतः शत्रूनित्यादिवाक्यं विधेयम् ॥१॥ भ॰ म॰

ताविति।—रणे रणभूमौ रजःसन्तमसे सङ्गतं तमः सन्तमसम्,

अथ तीक्ष्णायसैर्बाणैरभिमर्म रघूत्तमौ ।
व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ ॥३॥

"अवसमन्धेभ्यस्तमसः" इत्यच् ; रजसा सन्तमसम् यस्मिन् इति रजःसन्तमसं तस्मिन् रजसा कृतान्धकारे, तौ खरदूषणौ आयुधच्छायमायुधबाहुल्यमकार्ष्टां कृतवन्तौ,आयुधानां छायेति "छाया बाहुल्ये" इति नपुंसकत्वे क्लीबत्वं, खड्गादीनां बाणान्तानां द्वन्द्वैकवद्भावं कृत्वा पश्चात् तेन अन्विता गदेति शाकपार्थिवादित्वात् सः ; अन्यथा समुदायस्य "जातिरप्राणिनाम्" इत्येकवद्भावेन नपुंसकलिङ्गता स्यात् बाणगदमिति, खड्ग-मुषल-प्रास-चक्र-बाण-गदाः करे येषामिति समासे 'प्रहरणार्थेभ्यः—' इत्यादिना करशब्दस्य परनिपातः ॥२॥ ज० म०

ताविति ।—खरदूषणौ रणे युद्धे आयुधानां बहूनां छायामकार्ष्टां कृतवन्तौ, रणपदं रणभूमिवाचकमित्यन्ये । सम्यक् तमः सन्तमसं "समवान्धात्तमसः" इति अः ; रजसा सन्तमसं यत्र रणे आयुधानां बाहुल्यात्, छायाशब्दस्य नपुंसकत्वमभिधानात् । कीदृशौ ? खड्गादयः करे ययोस्तौ । अकार्ष्टामिति कृञः "च्लि सिः" "अजवद—" इति व्रिः ॥२॥ भ० म०

अथेति ।—अथैतस्मिन् सङ्ग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ कर्मभूतौ द्विषाविति "सत्सूद्विष—" इत्यादिना क्विप्, यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ, "तदधीनवचने" इति सातिः ; तीक्ष्णायसैर्बाणैः तीक्ष्णमायसं फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा,"आभीक्ष्ण्ये णमुल्—" तत्र "समानकर्तृकयोः पूर्वकाले" इति वर्त्तते, आभीक्ष्ण्ये द्वे भवत इति द्विर्वचनम् । अभिमर्मेति विभक्त्यर्थेऽव्ययीभावः । अमूढौ सावधानौ रामलक्ष्मणौ ॥३॥ ज० म०

हतबन्धुर्जगामासौ ततः शूर्पणखा वनात् ।
पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिम् ॥४॥

मर्म्मवेधमेवाह, अथेत्यादि ।—तयोर्विक्रममानन्तरं रघूत्तमौ कर्त्तृभूतौ तीक्ष्णायसैस्तीक्ष्णफलैर्बाणैरधिमर्म जीवितस्थाने व्याधं व्याधं विद्धा विद्धा तौ द्विषौ खरदूषणौ कर्मभूतौ यमसात् यमाधीनौ चक्रतुः । रघूत्तमौ किम्भूतौ ? अमूढौ रणपण्डितौ, किंवा खरदूषणौ अमूढौ अस्त्रवर्षेऽप्यमन्दौ, मर्मवेधे सावधानौ वा, रणपण्डितावपि वा ; तीक्ष्णमायसमयोविकारः फलं यत्र, मर्म्म विध्यतीति कारकार्थेऽव्ययीभावः,'व्यधौ ताड़े' इत्यस्मात् "णमुल् वाऽऽभीक्ष्ण्ये—" इति णमुल्, आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं, "कात्स्न्यार्थयोः सम्पद्यकादौ—" इत्यधीनत्वे सात्, किंवा "देये त्राच"इति देयेऽर्थे चकारात् सात्."त्रासुम्—"इत्यादिना द्विषः क्विप् ॥३॥ भ० म०

हतेति ।—असौ शूर्पणखा हतबन्धुः व्यापादितभ्रातृद्वया ततो वनाद्दण्डकारण्यात् रावण पति प्रभुं शरणं जगाम गतवती, पारेसमुद्रं समुद्रस्य पारे इति "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः, तत्सन्नियोगेन पूर्वपदस्यैकारान्तत्व. पश्चात सप्तमी, "नाव्ययीभावात—"इत्यभावः ; समुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमित्यर्थः ॥ ४ ॥ ज० म०

हतबन्धुरिति ।—असौ शूर्पणखा हतबन्धुः सती परैर्व्यापादितभ्रातृद्वया सती ततो वनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम, पारेसमुद्रं समुद्रपारे स्थितायां लङ्कायां वसन्तं, पारेसमुद्रमित्यव्ययीभावः, एत्वञ्च निपातनात, "वोत्थावौ" इति समस्याम । "प्रति" इति पाठे—रावणं प्रति लक्षीकृत्य जगाम ॥ ४ ॥ भ० म०

सम्प्राप्य राक्षससभं चक्रन्द क्रोधविह्वला ।
नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके ॥५॥
दण्डकाम्*अध्यवात्तां यौ वीर ! रक्षःप्रकाण्डकौ ।
नृभ्यां सङ्ख्येऽक्षणातां तौ सभृत्यौ भूमिवर्द्धनौ ॥६॥

सम्प्राप्येति ।—सा सूर्पणखा राक्षससभं सम्प्राप्य ढौकित्वा राक्षसानां सभेति "सभा राजा—" इत्यादिना नपुंसकता ; चक्रन्द क्रन्दनं कृतवती, क्रोधविह्वला क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रुदितवती, नामग्राहं नाम गृहीत्वा भ्रातरौ खरदूषणाविति, "नाम्न्यादिशिग्रहोः" इति णमुल्, अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वात् रुदिः सकर्मकः, रावणान्तिके रावणसमीपे, "सप्तम्यधिकरणे च" इति चकारात् "दूरान्तिकार्थेभ्यः —" इति सप्तमी ॥ ५ ॥ ज० म०

सम्प्राप्येति ।—सा सूर्पणखा राक्षससभं सम्प्राप्य चक्रन्द, राक्षसानां सभा राक्षससभं, क्लीवत्वमभिधानात्, क्रोधेन विह्वला व्याकुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावणान्तिके समीपे अरोदीत्, रुदेर्ण्यां त्वां वा "रुदाद्यस्तिसेः—" इतीम् ; पूर्वं क्रन्दनमुक्तम्, अत्र नामग्रहणमुक्तमिति भेदः, अश्रुविमोचनमात्रे रुदिः अकर्मकः, शब्दयुक्तक्रन्दने तु सकर्मकः इति प्राञ्चः ; भ्रातरौ चक्रन्द आजुहाव, 'क्रदि आह्वाने' ; नामग्राहमरोदीदित्यन्वय इति केचित् । नामग्राहमिति नाम्नो ग्रहणमभिधानात्, किंवा हा खरदूषणेति नाम्नो ग्राहो ग्रहणं यत्रेति वा रोदनक्रियाया विशेषणम् । ग्राहो घञन्तः ॥५॥ भ० म०

तयोः किं जातम् ? इति रावणेन पृष्टा आह, दण्डकान् इति ।—हे वीर ! दण्डकान् दण्डकारण्यसन्निवेशान् अध्यवात्ताम्

* "दण्डकाम्" इत्यत्र "दण्डकान्" इति जयमङ्गलासम्मतः पाठः ।

मध्युषितवन्तौ, 'वस निवासे' इत्यस्मात्लुङ् छलन्तलक्षणा वृद्धिः, "सः सि—"इत्यादिना धातुसकारस्य तत्वं, "झलो झलि" इति सिचो लोपः ; रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ, "प्रशंसावचनैश्च"—इति सः, ततः स्वार्थे कन्,"स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यति-वर्त्तन्ते" इति नपुंसको न भवति ; अन्यथा रूढ़िशब्दाः प्रशंसा-वचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादा-नादेव समानाधिकरणाः स्युः, यथा गोप्रकाण्डमिति, तौ नृभ्यां मनुष्याभ्यां सङ्ख्ये युद्धे भूमिवर्द्धनावक्रषातां क्वतौ, कर्मणि लुङ्, अचिण्वद्भावे रूपम्। वर्द्धते इति वर्द्धनौ "कृत्यल्युटो बहुलम्" इति कर्त्तरि ल्युट्। भूमेर्वर्द्धनाविति सः, भस्मीकृतशरीरस्य भूमौ लीयमानत्वात्। सभृत्यौ नैकाकिनौ॥६॥ ज० म०

दण्डकामिति।—एवंप्रकारेणारोदीदित्यन्वयः। वीरेति सोपालम्भसम्बोधनं, यौ रक्षःप्रकाण्डकौ प्रशस्तराक्षसौ दण्ड-कामध्यवात्तां, सभृत्यौ तौ नृभ्यां मनुष्याभ्यां सङ्ख्ये सङ्ग्रामे भूमि-वर्द्धनौ अक्रषातां,क्वञः कर्मणि टौ,"इगुङ्गमढ़—"इति किस्वान्न गुणः ;"शवस्तु चितिवर्द्धनः"इति त्रिकाण्डशेषः। अरण्ये दण्डका-शब्दः स्त्रीलिङ्गः, "क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः" इति भवभूतिः। "दण्डकान्"इति पाठे—दण्डकारण्यसन्निवेशा-नित्यर्थः। केचित्तु दण्डकाशब्दः स्त्रीलिङ्गबहुवचनान्त एव इत्युक्त्वा दण्डका इति शसन्तं पठन्ति। अध्यवात्तामिति अधिपूर्वाद्वसेर्लौ तां,"स्यां सिः","स त् स्वरे"इति सस्य तः,अनिमत्वात् त्रः। रक्षसां मध्ये प्रकाण्डकौ प्रशस्तौ, एकार्थत्वात् कर्मधारयो वा ; समासे विशेषणमपि परं स्यात्। 'प्रशंसावचनैश्च'इति परसूत्रम्। यद्यपि "प्रकाण्डमुद्धतल्लजौ"इत्यमरेणोक्तं,दृश्यते च गोप्रकाण्डमित्यादाव-जहल्लिङ्गता, तथाऽपि कप्रत्यये सति"स्वार्थिकाः प्रकृतितो लिङ्ग-वचनान्यतिवर्त्तन्तेऽपि" इति न्यायात् पुंस्त्वं, वस्तुतस्तु पुंलिङ्गोऽपि

विग्रहस्तव शक्रेण बृहस्पतिपुरोधसा।
सार्द्धं कुमारसेनान्या शून्यश्चासीति को नयः?॥७॥
यद्यहं नाथ! नायासं विनासा हतबान्धवा।
नाज्ञास्यस्त्वमिदं सर्वं प्रमाद्यंश्चारदुर्बलः॥८॥

प्रकाण्डशब्दोऽस्ति, "निगडाक्रीडनलप्रकाण्डकाण्डाः" इति पुं-नपुंसककाण्डे हेमचन्द्रः। "उद्भप्रकाण्डौ द्वौ प्रशंसायाम्" इति हलायुधः। भूमिं वर्द्धयत इति नन्द्यादित्वादनः॥ ६॥ भ० म०

विग्रह इति।—बृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन, कार्य्येषु पुरा धीयते इति पुरोधाः, पुरःपूर्वाद्धाञः 'सर्वधातुभ्य असुन्' तथा कुमारः कार्त्तिकेयः सेनानीर्यस्य, सेनां नयतीति "सत्सूद्विष —" इत्यादिना क्विप्; तेन शक्रेण सह सार्द्धं तव विग्रह आसीत्, इदानीं कार्य्यनिपुणाभावात् शून्यश्चासि, "तासस्त्योर्लोपः" इति सकारलोपः; तस्मात् को नयः? नय एव न भवतीत्यर्थः॥ ७॥ जं० म०

विग्रह इति।—शक्रेण सार्द्धं तव विग्रहो विरोधः,तथाऽपि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि, इति को नयः? न काऽपि नीतिस्तवेत्यर्थः। किम्भूतेन? बृहस्पतिपुरोधसा बृहतां देवानां गुरुत्वात् पतिः बृहस्पतिः मनीषादित्वान्निपातः,स पुरोधाः पुरोहितो यस्य, कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य, सेनां नयतीति क्विप्, "कव्याद्यनेकाचः—"इति यत्वम्। "लोपोऽस्त्यसोः —"इति अस्तेः सौ सलोपः॥ ७॥ भ० म०

तदेव दर्शयन्नाह, यदीति —विनासा विगता नासा यस्याः, नासैव नासिकेति "केऽणः" इति ह्रस्वत्वे रूपम्; तस्या नसादेशस्य विधीयमानत्वात् अत्र सम्भव एव नास्ति। "विनसा" इति पाठान्तरं, तत्र विगता चासौ नासिका च विनासिका, तत इत्यभूत-

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः ?।
अपकारे कृतेऽप्यज्ञो विजिगीषुर्न वा भवान् ? ॥९॥

लक्षणायां तृतीयायां "पद्दन्नोमास्—" इत्यादिना नसादेशः, विगतया नासिकयोपलक्षितेत्यर्थः, विगता नासिका यस्या इति बहुव्रीहिणा व्याख्याने "अञ्नासिकायाः—" इत्यादिना अच् नसादेशश्च प्राप्नुतः, तच्च संज्ञाविषयत्वात् "उपसर्गाच्च" इत्यसंज्ञायां विधीयमानो न भवति 'वेर्ग्रो वक्तव्यः' इति ग्रादेशो बाधकः। हे नाथ ! यद्यहं विनासा कृतवान्धवा नायास्यं न आयाता भविष्यं, तदा तदिदं सर्वं भावीविधं नासाच्छेदश्च नाप्नाप्स्यः न प्राप्तोऽभविष्यः, क्रियाऽतिपत्तौ लृङ्। अप्राप्ते कारणमाह, प्रमाद्यन् विषयेषु प्रमादं गच्छन्,चारदुर्बलः चारहीनः,चारा हि चक्षुरूपाः कार्य्याकार्य्यज्ञानाय, लोके चरतीति चरः, पचाद्यच्, चर एव चारः, प्रज्ञादित्वादण् ॥ ८ ॥ ज० म०

यदीति।—हे नाथ ! विनासा कृतबान्धवा च सती यद्यहं नायास्यं तदा त्वमिदं सर्वं पूर्वोक्तं नाप्नाप्स्यः,आप्-धातो,"ध्वर्थामण्यवे श्रो"। अप्राप्ते हेतुमाह,प्रमाद्यन् विषयेषु अनवधानतां गच्छन्, "शमामष्टानां दीर्घः श्यनि—" इति शमादित्वाद्दीर्घः, "प्रमादोऽनवधानता" इत्यमरः ; चारेण दुर्बलो हीनः,"राजा चारैर्जगत् कृत्स्नं प्राप्नुया लोकसम्मतैः" इति हि शास्त्रम्। विनासा इति विगता नासा नासिका यस्याः सा विनासा। केचित्तु विगतया नासिकया उपलक्षिता विशेषणे तृतीया,"पाददन्त—"इति नसादेशः इत्याहुः। बन्धुरेव बान्धवः, चर एव चारः स्वार्थे अणः ॥८॥ भ० म०

करिष्यमाणमिति।—परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणं कार्य्यं विज्ञेयं, किन्नु कृतमेव यत् ? तदवश्यमेव विज्ञेयमित्यर्थः, त्वं पुनः परैरपकृतोऽपि अज्ञोऽविदितस्वरूपः, अतो

हतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान् ।
पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥१०॥

विजिगीषुर्न वा ? भवान् सुप्तो न राज्यं सम्भावयतीत्यर्थः ॥ ९ ॥ जं० म०

करिष्यमाणमिति।—परैः शत्रुभिः करिष्यमाणमपि कार्यं विज्ञेयम् यथाविजिगीषुणा, किम् कृतम् ? तदवश्यमेव विज्ञेयमित्यर्थः, परे कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् न वा विजिगीषुः, "जेर्गिः सन्यो" इति गिः, जानातीति ज्ञः, "इगुपधज्ञाप्रीकिरः कः"—इति कः, "आतो लोप इटि च"—इत्यादिना आकारलोपः, आदन्तात् केनेष्टसिद्धौ "इगुपध—" इत्यत्र ज्ञाग्रहणेन "हनजनात्—" इत्यस्य उपपदस्यैव विषयः,"इगुपधज्ञा—"इत्यस्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितम् । वाशब्दः आक्षेपे प्रश्ने वा ॥९॥ भ०म०

हत इति ।—अत्यन्तं गामिनीति "अषडक्षाशितङ्ग्वलंकर्मालम्पुरुषाध्युत्तरपदात् खः"—"अवारपारा—"इत्यादिना खः, तस्य भावोऽत्यन्तीनत्वं नेवात्यन्तीनामत्यन्तगामिनीं श्रियं नेता न प्रापयिता,"तृन्"इति ताच्छीलिकस्तृन्,"न लोका—" इति षष्ठीप्रतिषेधः, यद्यपि महोदयं राज्यं प्राप्तवानसि तथाऽपि न चिरकालमित्यर्थः.यतस्त्वमुन्मनाः भ्रान्तचित्तः,यतः पानशौण्डः पाने प्रसक्तः, "सप्तमी शौण्डैः" इति सः, अत एव प्रमादवान्, अतोऽपि खट्वारूढः उत्पथप्रस्थितः,"खट्वा क्षेपे"इति द्वितीयासः ; अत एव पात्रेसमितैः भोजनपात्रे एव सन्निहितैः अनुजीविभिर्हतः, "पात्रेसमितादयश्च" इति क्षेपे सः ॥१०॥ ज० म०

हत इति ।—त्वं श्रियम् आत्यन्तीनत्वम् अत्यन्तगामित्वं न नेता न प्रापयिष्यसि, नीञा द्विकर्मकात् तृन्, "ढचे कृत्यच्—" इत्यादौ शीलार्थे तृन्वर्जनात् न षो, अत्यन्तशब्दात् "ढचे कात् —" इति तद्गामिन्यर्थे खीनः, 'त-त्वे त्वतात्याद्य' इति पुंवत् ।

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान् ।
अत्तुं महेन्द्रियं भागमेति दुश्च्यवनोऽधुना ॥११॥

हेतुमाह, पानैर्वामितैर्भोजनपानैरेव वामितैः सन्निहितैः; कार्यान्तराक्षमैरनुजीविभिर्वृतो वेष्टितः, अत्राक्षेपे समासो विभक्त्यलोपश्चाभिधानात्; खट्वारूढः विपथप्रस्थितः, 'क्तेन क्षेपे खट्वाया द्वितीयातत्पुरुषः' इति परे, स्वमते समासे सति मधुपर्कादिवत् स्वभावादर्थान्तरे वृत्तिः; प्रमादवान् अनवधानतायुक्तः, यतः पानशौण्डः पाने प्रसक्तः, अत एव उन्मना उद्भ्रान्तचित्तः ॥१०॥ भ० म०

अध्वरेष्विति ।—त्वय्येवम्भूतेऽधुना दुश्च्यवनः इन्द्रः आश्रमान् ऐति आगच्छति, आङ्पूर्वस्येणः "एत्येधत्यूठ्सु" इति वृद्धिः, सोमसुत्वतः सोमं सुनोतीति "सोमे सुञः" इति क्विप्, सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप्, "तसौ मत्वर्थे" इति भत्वे तकारस्य जश्त्वं न भवति, "झयः" इति मतोर्वत्वम्। किमर्थमेति ? इत्याह, अत्तुं भक्षयितुं, महेन्द्रियं भागं महेन्द्रः देवता अस्येति "महेन्द्राद्घाणौ च" इति घः; क्व ? अध्वरेषु यज्ञेषु अग्निचित्वत्सु अग्निश्चितवन्तः अग्निचितः आहिताग्नयः, "अग्नौ चेः" इति क्विप् ते सन्ति येष्विति पूर्ववन्मतुप् ॥११॥ ज० म०

अध्वरेष्विति —तवैव प्रमादात् अधुना इदानीं दुश्च्यवनः इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागम् अत्तुं भक्षयितुम् आश्रमान् ऐति आगच्छति, स भागो राक्षसग्राह्य एवासीदिति भावः। कीदृशेषु ? अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मानिः, "क्वासुत्—" इति चेः क्विप्, "स्वच तन् पिति" तनोऽस्त्यर्थे "मोङ्मझपादतुः" "न टं तसौ—" इति पदत्वनिषेधात् न "जषोऽबे जव"। कीदृशान् ? सोमसुत्वतः सोमं

आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधम्।
हविर्हैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः ॥१२॥

सुतवान् सोमसुत् यजमानः सद्युक्ताम्, पूर्ववत् क्विबादि, सोमसुतामयनं सद्मानं, महेन्द्रो देवता अस्येति "विकारसङ्घ—" इत्यादिना ष्यः ॥११॥ भ० म०

आमिक्षीयमिति।—दध्ना सहितं शृतं पय आमिक्षा तस्मै हितमामिक्षीयं, "विभाषा हविरपूपादिभ्यः" इति छयतो दधि च क्षीरञ्चेति "विभाषा वृक्ष—" इत्यादिना व्यञ्जनत्वादेकवद्भावः, पुरोडाशाय हितमौषधं नीवारतण्डुलादि पुरोडाश्यम्, अपूपादित्वात् यत्। ओषधिरेवौषधम्, "ओषधेरजातौ" इत्यण् तण्डुलानामजातित्वात्, "स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति नपुंसकलिङ्गता, हविः हूयते इति हविः, 'अर्चिशुची—' इत्यौणादिक इस्; हैयङ्गवीनं घृतं, ह्यो गोदोहस्य विकार इत्यर्थे हैयङ्गवीनं, "संज्ञायाम्—" इति निपातनात् खञ् ह्यियङ्ग्वादेशश्च, तानि नाप्युपघ्नन्ति राक्षसाः, त्वय्युदासीने सति ॥१२॥ ज० म०

आमिक्षीयमिति।—अधुना राक्षसा अपि एतानि वस्तूनि न उपघ्नन्ति, अपिशब्दः पूर्वापेक्षया; कानि? आमिक्षायै हितं दधि दुग्धञ्च, 'व्यञ्जनत्वे समाहारः' इति परः; स्वमतेऽभिधानात्; "आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः" हितार्थे ईयः; तथा पुरोडाशाय हितम् ओषधं नीवारतण्डुलादि, पुरो दाश्यते इति पुरोडाशोऽन्नविकारः पिष्टकादिः, निपातनात्, ततो हितार्थे यः, ओषधिशब्दात् स्वार्थे अणः ओषधं, क्वचित् "स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति क्लीवत्वं, हविश्चन्यश्च 'हु दाने' "अर्चिशुच—" इति इस्, ह्यो गोदोहस्य विकारो हैयङ्गवीनं निपात-

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः।
रामो यज्ञद्रुहो हन्ति कालकल्पशिलीमुखः॥१३॥

नात्। "तनु हैयङ्गवीनं यत् ह्यो गोदोहोद्भवं घृतम्" इत्यमरः॥ १२॥ भ० म०

इदानीं कार्य्यप्रदर्शनेन प्रोत्साहयितुमाह, युवजानिरिति।— युवतिः यौवनवती जाया यस्य युवजानिः "जायाया निङ्" वलिलोपः, "स्त्रियाः पुंवत्—" इति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते, धनुष्पाणिः पाणौ धनुर्यस्य, "प्रहरण—" इत्यादिना परनिपातः। भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः, "सुपि स्थः" इति कः, "अम्बाम्ब—" इत्यादिना षत्वम्। कालकल्पशिलीमुखः मृत्युतुल्यशरः रामः राक्षसान् हन्ति, खविचारिणः आकाशचरणशीलान्, "सुप्यजातौ—" इति णिनिः; यज्ञद्रुहः क्रतुविघातकान् इति भावः। द्रुहेः क्विपि रूपम्॥ १३॥ ज० म०

युवजानिरिति।—भूमिष्ठोऽपि रामः खविचारिणोऽपि यज्ञद्रुहो राक्षसान् हन्ति, भूमौ तिष्ठतीति "सुपि स्थः—" इति कः, षत्वं मनीषादित्वात्। खे आकाशे विचरितुं शील येषां, तथा 'सुपि अजातौ णिनिः ताच्छील्ये' इति परः; खमते खे विचरन्तीति ग्रहादित्वात् णिन्, यज्ञाय द्रुह्यन्तीति क्विप्। कीदृशो रामः? युवजानि युवती जाया यस्य स तथा, 'बहुव्रीहौ जायाया इत्जानङ्' इति परः, स्वमते जायासमानार्थो जानिशब्दोऽस्ति, "जनीसोमन्तिनीवध्वोः" इत्यनुशासनात्, जनीशब्दस्य स्वार्थिकप्रत्ययान्तस्य जानिरिति रूपं वा, "पुंवत् स्त्रीसमपुंस्क—" इति पुंवद्भावः; धनुः पाणौ यस्य स तथा, षत्वविधान "गशाद्धज लैः" इत्यत्र व्याख्यातम्; ईषदूनः कालः कालकल्पा यमतुल्य इत्यर्थः, तादृशः शिलीमुखो बाणो यस्य स तथा, "त्यादेशोने—" इति कल्पः॥ १३॥ भ० म०

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः।
अश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः ॥१४॥
कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज।
लक्ष्मीं परम्परीणां त्वं पुत्त्रपौत्त्रीणतां नय ॥१५॥

---

मांसानीति।—ओष्ठावलोप्यानि ओष्ठाभ्यां छेदार्हाणि शक्यानि वा, अर्हार्थे शक्यार्थे वा कृत्यः "कृत्यैरधिकार्थवचने" इति सः ; साधनीयानि यज्ञस्य साधनाय हितानि, "तस्मै हितम्" इति छः ; "सावनीयानि" इति पाठान्तरम् ; तत्र सवनं स्नानं, तद्योगात् स्नातकोऽपि तथोच्यते, तत्र भवः सावनो यज्ञः, "तस्मै हितानि" इति छः, तानि मांसानि देवता अश्नन्ति भुञ्जते, न राक्षसा रक्षांसि, किन्तु रामात् बिभ्यति, "वा नपुंसकस्य" इति शतुर्नुमभावपक्षे रूपम् ; दिशोऽश्नुवते व्याप्नुवन्ति ॥१४॥ ज० म०

मांसानीति।—इदानीं देवता मांसानि अश्नन्ति, रक्षांसि तु रामात् बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति, पलायन्ते इत्यर्थः। कीदृशानि मांसानि ? ओष्ठावलोप्यानि ओष्ठाभ्यां छेत्तुं शक्यानि, 'लुप् छेदने' "ते ण्यः शक्यार्ह—" इति शक्यार्थे घ्यण् ; साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि, सुरसभायाः साधनं घृतादि तेन संस्कृतानि वा, अश्नन्तीति 'अश भोजने' "श्नाध्वोः—" इत्यालोपः, बिभ्यतीति 'ञि भी क्लि भीत्यां' शङ्कः "ह्वादौ रे द्विः" "द्वेः शतुर्नुम् श्नौ" इति पक्षे नुमोऽभावः, अत्यन्तामिति केचित्, तदा "अन्तोऽद्वेः" इत्यम्। 'अशू ङ् न व्याप्तिसंहत्योः' "श्नुध्वोः—" इत्युव् "मान्तोऽदन्तः" ॥१४॥ भ० म०

कुर्विति।—कुशाग्रीयां कुशाग्रमिव सूक्ष्मां, "कुशाग्राच्छः" इति इवार्थे छः ; स्थूलबुद्धिर्मा भूदित्यर्थः, अनुकामीनतां त्यज

सहायवन्त उद्युक्ता बहवो निपुणाश्च याम्।
श्रियमाशासते लोलां तां हस्तेकृत्य मा-श्वसीः॥१६॥

यथेच्छगामितां त्यज, "अवारपार—" इत्यादिना खः; परम्परीणां परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् "परोवर—" इत्यादिना खः पराादेशश्च, तां लक्ष्मीं क्रमायातां त्वं पुत्रपौत्रीणतां नय, पुत्रांश्च पौत्रांश्चानुभवतीति खः तस्य भावः, पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः॥ १५॥ ज० म०

कुर्विति।—त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु, "विकारसङ्घ—"इति कुशाग्रादिवार्थे छः; अनुकामीनतां कामस्य अभिलाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज, अनुकामात् तद्गामिन्यर्थे"ढघे कात्—"इतीनः, परम्परीणां क्रमादायातां लक्ष्मीं पुत्रपौत्राधीनतां नय प्रापय, परश्च परतरश्च इति द्वन्द्वे परम्परादेशो निपातनात्, ततस्तदनुभवतीत्यर्थे पूर्वेण ईनः॥ १५॥ भ० म०

सहायेति।—याश्च श्रिं त्वदीयां शौर्योपात्तां सहायवन्तः ससहाया उद्युक्ता उत्साहवन्तो निपुणाः कुशला आशासते इच्छन्ति, आङः 'शासु इच्छायाम्' इत्यादादिकस्यात्मनेपादनो रूपम्, "आत्मनेपदेष्वनतः" इत्यदादेशः; तां हस्तेकृत्य स्वीकृत्य मा श्वसीः आश्वासं मा कार्षीः, चञ्चलत्वात्, यदाह लोलामिति "ह्म्यन्तक्षणश्वसजागृणि—" इति वृद्धिप्रतिषेधः,"इट ईटि" इति सिचो लोपः, "नित्यं हस्ते पाणौ—" इति गतिसंज्ञायां समासे ल्यबादेशः।॥ १६॥ ज० म०

सहायवन्त इति।—सहायवन्तः प्रशस्तसहाययुक्ता उद्युक्ता उद्योगिनः, बहवो निपुणाः कर्मकुशला यां श्रियम् आशासते इच्छन्ति, तां श्रियं हस्तेकृत्य स्वीकृत्य मा श्वसीः आश्वासं मा

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्।
अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥१७॥
योषिद्वृन्दारिका तस्य दयिता हंसगामिनी*।

कार्षीः, यतो लोलां चञ्चलाम्, आङः 'शास इच्छायाम्' अदादिरात्मनेपदी, हस्तेशब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः स्वीकारे वर्त्तते, "हस्ते पाणौ प्राध्वम—" इत्यादिना समासः, "ध्यादनञः क्त्वा यप् से" आङः शासः "क्त्वा मिः" "इसादेः सेमः—" इत्यादौ सवर्जनान्न त्रिः ॥ १६ ॥ भ० म०

तां लोलतां दर्शयन्नाह, लक्ष्मीरिति।—त्वयैवं न मन्तव्यम् अन्यः प्रार्थ्यमानाऽपि न मां परित्यजतीति, यतः छलेन व्याजेन अन्यं निरीक्षते, किमर्थम्? पुंयोगमाशंसुः अभिलषन्ती, "सनाशंसभिक्ष उः"; कुतूहलात् कोऽस्य विशेष इति स्नेहादन्तिके अदूरेऽपि स्थिता पत्युः "दूरान्तिकार्थैः—" इत्यादिना षष्ठी; कुलटेव बन्धकीव, शकन्ध्वादिषु दर्शनात् पररूपम् ॥ १७ ॥ ज० म०

लोलतां दर्शयति, लक्ष्मीरिति।—लक्ष्मीः पत्युरन्तिके स्थिताऽपि सुतरां दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरीक्षते केनापि छिद्रेण गन्तुमित्यर्थः, यतः पुंयोगमाशंसुः अभिलषन्ती, एकेन पुंसा तृप्तिर्नास्तीत्यर्थः, अत एव कुलटा इव असतीव, कुलान्यटति पचादित्वादच्, मनीषादित्वादकारलोपः, "सनाशंसभिक्ष उः" इति आङ्पूर्वशंसेरुः ॥ १७ ॥ भ० म०

युवजानिरित्युक्तं, तद्योषित्प्रलोभनायाह, योषिदिति।—योषिच्चासौ वृन्दारिका चेति "वृन्दारक—" इत्यादिना सः,

* "हंसगामिनी" इत्यत्र "हंसनादिनी" इति भरतसम्मतः पाठः।

**दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला॥१८॥**

रूपेण प्रियेत्याह, दयिता प्रिया, प्रशस्तत्वे कारणमाह, हंस इव गन्तुं शीलं यस्याः, "कर्त्तर्य्युपमाने" इति णिनिः ; दूर्वाकाण्डमिव श्यामा दूर्वास्तम्बं तदिव श्यामा, न्यग्रोधपरिमण्डला "उपमानानि—" इत्यादिना सः॥ १८॥ ज० म०

प्रलोभनार्थमिदमुच्यते, योषिदिति।—तस्य रामस्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दारिका रूपवती, हंसवद्वदतीति हंसनादिनी, 'कर्त्तर्य्युपपदाश्रिणिः' इति परः, समर्थे शब्दादित्वात्, हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति, यथा "गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्त-कोकिलसंशब्दा सा ज्ञेया हंसनादिनी॥" दूर्वाकाण्डमिव तत्तुल्या श्यामाङ्गीत्यर्थः, दूर्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं, तत्र गौरत्वकथनात् ; श्यामा-न्यग्रोधपरिमण्डलाशब्दौ रूढौ ; यथा "शीते सुखोष्णसर्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चन-वर्णाभा सा स्त्री श्यामेति कथ्यते॥" "स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेत् या सा न्यग्रोधपरि-मण्डला॥" अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डल-लक्षणमुक्तं, यथा "प्रसारितभुजस्येह मध्यभागद्वयान्तरम्। उच्छ्रा-येण समं यस्य न्यग्रोधपरिमण्डलः॥" इति। केचित् तु दूर्वाकाण्ड-मिव न्यग्रोधपरिमण्डला न्यग्रुणद्धीति न्यग्रोधम् अधः प्रसृतं परितो मण्डलं नितम्बमण्डलरूपं यस्याः, दूर्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः। अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः, एकदेशधर्मेणापि समुदायोपमाननादर्शनादित्याहुः। श्यामा अप्रसूतेति केचित् "अप्रसूताङ्गनायाञ्च श्यामा सोमलतौषधी। त्रिवृताशारिवा-गुन्द्राप्रियङ्गुषु॥" इति विश्वः॥ १८॥ भ० म०

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा ।
संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः॥ १९॥

सारोऽमाविन्द्रियार्थानां
यस्यासौ तस्य नन्दथुः ।
तल्पे कान्तान्तरैः सार्द्धं
मन्येऽहं धिङ्निमज्जथुम् ॥ २० ॥

नास्यमिति ।—तस्या आस्यं मुखं यो न पश्यति, दन्तच्छदम् ओष्ठं, छाद्यते अनेनेति घः "छादेर्घेऽद्व्युपसर्गस्य" इति ह्रस्वः, दन्तानां छदं न वा निंस्ते न चुम्बति, 'णिसि चुम्बने' इत्यादादिक आत्मनेपदी, "इदितो नुम् धातोः" उक्तानि उदितानि न संशृणोति "समो गमि—"इत्यादिना तङ् न भवति, अकर्मकादित्यधिकारात्, मिथ्याऽसौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥ १९ ॥ ज० म०

नास्यमिति।—यस्तस्या आस्यं मुखं न पश्यति, न वा दन्तच्छदम् ओष्ठं निंस्ते चुम्बति, 'णिसि लङ् चुम्बने' न वा तस्या उक्तानि भाषितानि संशृणोति, असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियो मिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः। "वृथा" इति क्वचित् पाठः ; वृथा विहितानि इन्द्रियाणि यस्य स तथा, दन्ताश्छाद्यन्तेऽनेनेति "छादेः त्रमन्त्रोस् घे स्वः" इति ह्रस्वः, "घे स्वः" इत्युक्तेः "नाम्न्यर्थे तिक् च" इति संज्ञायां घप्रत्ययो बोध्यः।"ओष्ठाधरौ तु रदनच्छदौ"इत्यमरः ॥ १९ ॥ भ० म०

सार इति।—इन्द्रियार्थानां मध्ये सारोऽसौ दयिता इन्द्रियार्थः, रूपाद्यतिशययोगात्, यस्यासौ सम्पद्यते तस्य नन्दथुः

न तं पश्यामि यस्यासौ
भवेन्नोद्वेजया मतेः ।
त्रैलोक्येनापि विन्दस्त्वं
तां क्रीत्वा सुकृती भव ॥ २१ ॥

आनन्दश्चेतसः, तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः साकं निमज्जथं शयनं, सर्वत्र "टि्वतोऽथुच्" तस्य धिक् कुत्सितमहं मन्ये, "उभसर्वतसाः" इत्यादिना धिग्योगे द्वितीया ; तथा, साकं शोभनमित्यर्थादुक्तं भवति ॥ २० ॥ ज० म०

सार इति ।—इन्द्रियस्य अर्था विषयाः स्रक्चन्दनवनितादयस्तेषां मध्ये असौ सीतेव सारः श्रेष्ठा, यस्य असौ सीता विद्यते तस्यैव नन्दथुरानन्दः, कान्तान्तरैः साकं तल्पे शय्यायां निमज्जथं निमज्जनं शयनं धिक्, तथैव साकं युज्यते इत्यहं मन्ये, उभयत्र "ट्वितोऽथुर्भावे" "धिक्समया—" इति द्वितीया ॥२०॥ भ० म०

न तमिति ।—सर्वथा न तं पश्यामि जानामि जगति यस्य सम्बन्धिन्याः मतेश्चेतसः उद्वेजया उत्कम्पिकाऽसौ न भवेत्, चित्तक्षोभजनिकेत्यर्थः, उद्वेजयते इति "अनुपसर्गाल्लिम्प—"इति कर्त्तरि शः, कर्तृयोगे कर्मणि षष्ठी ; तस्मात् त्रैलोक्येनापि त्रयश्चैते लोकाश्चेति त्रिलोकाः त एव त्रैलोक्यं, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्, 'स्वार्थिका अतिवर्त्तन्ते' इति नपुंसकत्वं, तेनापि तां क्रीत्वा लब्ध्वा विन्दः, त्वं सुकृती भव पण्डितो भव, श्लाघ्यो वा भव, पाण्डित्यमस्य त्रैलोक्यमात्रेणापि स्तोकं क्रीत्वा लब्धमिति, विन्दतीति तेनैव सूत्रेण शः । ॥२१॥ ज० म०

न तामिति ।—असौ सीता यस्य मतेरुद्वेजया क्षोभजनिका न भवेत्, तं पुरुषं नाहं पश्यामि, त्रैलोक्येनापि तां क्रीत्वात्वं

नैवेन्द्राणी न रुद्राणी
न मनावी न रोहिणी ।
वरुणानी न चाग्नायी*
तस्याः सीमन्तिनी समा ॥ २२ ॥

विन्दो लाभवान् सुकृती च भव, सुकृती पुण्यवान् शोभनः कृती पण्डितो वा, तत्करणादेव तव लाभवत्त्वं पुण्यवत्त्वं पाण्डित्यञ्च सफलम् अन्यथा निष्फलमिति भावः, 'एजृ कम्पे' 'एजेरुटः शः' इति परः, स्वमते "माछिमाति—"इत्यादिना श्नेरित्यस्य मना निर्दिष्टस्य व्यभिचारात् शः । 'विद लृपञ्जौ लाभे' पूर्ववत् शः, मुचादित्वात् नुम् ; त्रिलोक्येव त्रैलोक्यं, स्वार्थे ष्यञ्, "स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपि" इति वाक्यात् क्लीवत्वम् ॥२१॥ भ० म०

अन्या अपि स्त्रियः सन्तीति चेदाह, नैवेति ।—तस्यास्तु सीतायाः,"तुल्यार्थैरतुलोपमाभ्याम्—"इति षष्ठी,न काचित् सीमन्तिनी स्त्री समा तुल्या, 'सीमन्तः केशवेशे' इति पररूपत्वम्, अन्यत्र सीमान्तः, स विद्यते यस्या इति इनिः,इन्द्राणी इन्द्रभार्य्या, न सम्यक्, किं पुनरन्या ? तथा रुद्राणी रुद्रभार्य्या, वरुणानी वरुणभार्य्या, "इन्द्रवरुण—"इत्यादिना आनुक्, मनावी मनुभार्य्या, "मनोरौ वा" इत्यौकारः, अग्नायी अग्निभार्य्या, "वृषाकप्यग्निकुसितकुसिद—" इत्यादिना ऐरिति, सर्वत्र "पुंयोगादाख्यायाम्" इति ङीष्, रोहिणी चन्द्रभार्य्या, रोहितशब्दात् "वर्णादनुदात्तात्—" इत्यादिना ङीष् नकारश्च, वरुणानी न

* "वरुणानी न चाग्नायी" इत्यत्र "वरुणानी न चाग्नायी" इति जयमङ्गलासम्मतः पाठः ।

प्रत्यूचे राक्षसेन्द्रस्ता-
माश्वसिहि बिभेषि किम् ? ।
त्यज नक्तञ्चरि ! क्षोभं
वाचाटे ! रावणो ह्यहम् ॥२३॥

अग्नायीत्यत्र प्रतिषेधः एकः पूर्वेण योज्यः द्वितीयः परेणेति । "न चाग्नायी" इति पाठान्तरम् ॥ २२ ॥ ज० म०

नेवेति ।—काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न, सर्वत्र नञ्सम्बन्धादिह नञ्सम्बन्ध उपपद्यते, इन्द्राणी इन्द्रस्य पत्नी तस्याःसमा न एव निश्चये, "व्रह्मरुद्रभव—"इत्यादिना पत्न्या ङीप् आनङ् च ; रुद्राणी रुद्रस्य पत्नी पार्वती समा न,पूर्ववत् ङीप् आनङ् च ; मनावी मनोः पत्नी शतरूपा न समा, "नारीसखी—"इत्यादिना निपातः ; रोहिणी चन्द्रस्य भार्य्या न समा, पूर्वेण निपातः; वरुणानी वरुणस्य पत्नी न समा,"व्रह्मरुद्र —"इतीप् आनङ् च ; अग्नायी अग्नेः पत्नी न समा, "वृषाकप्यग्नि—"इतीप् ऐङ् च । केचित्तु इन्द्राणी न समा, कीदृशी ? प्रशस्तसीमन्तयुक्ता, एवं रुद्राण्यादावित्याहुः । "सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धती" इति हलायुधः, मनीषादित्वात् साधुः । तस्या इति "समार्थैन—"इत्यादिना षष्ठी ॥२२॥ भ०म०

प्रत्यूचे इति ।—राक्षसेन्द्रो रावणः राक्षसीं प्रत्यूचे प्रतिवचनमुक्तवान्, आश्वसिहि खेदं त्यज, "रुदादि—"इत्यादिना इट्; बिभेषि किम्? किमर्थं तापसकात् ? हे नक्तञ्चरि ! मद्विषये क्षोभं रोषं त्यज, वाचाटे ! बहुभाषिणि ! "आलजाटचौ बहुभाषिणि" यस्माद्रावणोऽहम्, अनेनात्मोत्कर्षमावेदयति ॥ २३ ॥ ज० म०

मामुपास्त दिदृक्षावान्
याष्टीकव्याहतो हरिः ।
आज्ञालाभोन्मुखो दूरात्
काऽक्षेणानादरेक्षितः ॥ २४ ॥

प्रत्यूचे इति।—स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे प्रत्युत्तरमाह स्म, आश्वसिहि खेदं त्यज, "रुदादिभ्यो—" इति इम्; किं बिभेषि तापसकात्? हे नक्तञ्चरि! क्षोभं दुःखं मयि रोषं वा त्यज, हे वाचाटे! बहुनिन्द्यभाषणशीले! हि यस्मात् अहं रावणः, प्रसिद्धनामानुवादात् उत्कर्षः सूचितः, वाचोऽस्त्यर्थे "वाग्मिवाचाटवाचालाः" इति निपातः, "वाचाटो बहुगर्ह्यवाक्" इत्यमरः; रावणस्य विश्रवसोऽपत्यं रावणः 'विश्रवसः अपत्यार्थे णः' इति परः, रमते सर्वभूतानि रावयति आक्रन्दयति रावणः, नन्द्यादित्वाद्‌ल्युः, किंवा हिंसनधर्मत्वात् रावणः, हिंसार्थ-रुधातोरनटि रवणं, ततः अस्य शीलम् इत्यर्थे "विकारसङ्घ—"इत्यादिना णः, अत्रापि वा नन्द्यादित्वाद्‌ल्युः, ततः स्वार्थे णः, 'रु ल ध्वनौ' 'रु ङ् वधे गत्याम्' ॥ २३ ॥ भ० म०

तमेव स्फुटयन्नाह, मामिति।—मामुपास्त सेवितवान् हरिरिन्द्रः, दिदृक्षावान् द्रष्टुमिच्छावान्, आत्मदर्शनेच्छावानित्यर्थः, दूरादेव याष्टीकैः वेत्रधारिभिर्व्याहतोऽपसारितः, "कर्तृकरणे कृता—" इति सः, यष्टिः प्रहरणमेषामिति "शक्तियष्ट्योरीकक्"; आज्ञालाभे किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः, सप्तमीति योगविभागात् सः; अनादरेक्षितः अवज्ञाविलोकितः काऽक्षेण कुदृष्ट्या, "का पथ्यक्षयोः" इति कुशब्दस्य कादेशः, यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति

विकम्पोदग्रधाराग्रः
कुलिशो मम वक्षसि ।
अभिन्नं शतधाऽऽत्मानं
मन्यते बलिनं बली ॥ २५ ॥

विग्रहः, अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते, अथ तत्पुरुष इति नानुवर्त्तते सामान्येनादेशस्तदा कुत्सितमक्षि यस्येति "बहुव्रीहौ सक्थ्यक्ष्णोः—" इति षच्; काऽक्षेण मयेत्यर्थः ॥ २४ ॥ ज० म०

मामिति ।—हरिरिन्द्रो मामुपास्त सेवितवान्, आसेर्व्वा रूपम्; यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः, "ढचे कात्—" इति षीकः; तेन व्याहतस्ताड़ितोऽपि दिदृक्षावान् द्रष्टुम् इच्छावान्, मदाशाया लाभनिमित्तम् उन्मुखः ऊर्द्धमुखः, दूरात् समीपगमनायोग्यत्वात्, मया तु काऽक्षेण कुदृष्ट्या अनादरेणावज्ञया ईक्षितः अवलोकितः, कुत्सितमक्षं काऽक्षम, इन्द्रियसामान्यवाचिनोऽक्षशब्दस्यात्र प्रकरणाच्चक्षुरेवेत्यर्थः, कुत्सितमक्षि यस्येति वा "सक्थ्यक्ष्णः षः स्वाङ्गे" इति षः, "काऽक्षे"इति कोः कादेशः, तत्र अक्ष इति इन्द्रियवाचकत्वादक्षस्य अतसमासान्तस्य अक्षिशब्दस्य च ग्रहणम्, ईषदक्षं काऽक्षम् इति वररुचिः, तदा कटाक्षे तात्पर्य्यं, "कोरीषदर्थे" इति कादेशः ॥ २४ ॥ भ० म०

विकम्पेति ।—विकम्पानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् बली आत्मानमभिन्नं शतधा शतप्रकारं. "सङ्ख्याया विधार्थे धा"; बलिनं मन्यते अहो ! बलवानहं, न तेन शतधा भग्न इति, तस्य देवतारूपत्वात् बलमस्त्येव आत्मानं बलिनं मन्यते इवेत्युत्प्रेक्षा ॥ २५ ॥ ज० म०

कृत्वा लङ्काद्रुमालानमहमैरावतं गजम्।
बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजम्॥ २६॥
आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः।
ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा॥२७॥

विरुग्णेति।—कुलिशो वज्र आत्मानं बलिनं मन्यते,कुतः? इत्याह, मम वक्षसि शतधा शतप्रकारेण अभिन्नं केवलं विरुग्णानि भग्नानि उदग्राणि महान्ति धाराग्राणि यस्य तादृशः,बली वस्तुतो बलवानपि मद्बलस्य भङ्गादेव बलं जानाति, असुरसमूहविदारणादपीदमेव तस्याधिकमुत्कर्षस्थानमित्यर्थः, तस्य देवतारूपत्वान्मननमस्त्येव उत्प्रेक्षामात्रं वा मन्यते इव इत्यर्थः,"सङ्ख्याया धाच् प्रकारे"॥ २५॥ भ० म०

कृत्वेति।—एष्वालीयते इत्यालानम्,अधिकरणे ल्युट्"विभाषा लीयतेः" इत्यात्वम्; लङ्काद्रुमा आलानानि यस्यैरावतःख्यस्य गजस्य तं कृत्वा, नतं नम्रमुखं तृणमिव मत्वा सोऽहमत्यजं त्यक्तवान्,बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात्॥२६॥ ज० म०

कृत्वेति।—लङ्काद्रुम एवालानं बन्धनस्तम्भो यस्य तथाभूतम् ऐरावतं गजं कृत्वा नतं नम्रं तम् अहं तृणवत् अत्यजम्, अथवा तं गजं तृणवत् न अत्यजम्? अपि तु अत्यजमेवेति शिरश्चालने नञ्। कुतः? इत्याह, बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वा, आलीयतेऽस्मिन्नित्यालानम्, आधारेऽनट्; "मिथ्योर्यवणो ङाऽश्वर्नाल लियस्तु वा" इति पक्षे ङा, इरावान् समुद्रः तत्र जात इति "ढवे कात्—"इति णः॥ २६॥ भ०म०

आहो इति।—अहोपुरुषस्य भावः, मनोज्ञादित्वात् वुञ्; आहोपुरुषिका कार्य्यसिद्धावपि तत्साधने वृत्तिः तां मम सूर्पणखे! पश्य, सद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि ।
पूतक्रतायीमभ्येति सत्रपः किं नु गोत्रभित् ?॥२८॥

पूर्णचन्द्रस्य सन्निधिः सदा सन्निधानं, न पुनस्तेन कृत्यं, रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥ ज० म०

आह्नो इति ।—ममाहोपुरुषिकां पश्य, मद्रत्नकान्तिभिः मद्रत्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः, एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्तिष्ठति, देवैरपि भीत्या नासौ पीयते,चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितम् । अहमेव पुरुषो यत्रेति सम्भावनायामाहोपुरुषिका निपातनात् । "आहोपुरुषिका दर्पात् या स्यात् सम्भावनाऽऽत्मनि" इत्यमरः ; अहोपुरुषस्य भावः आहोपुरुषिका इति केचित्, तदा"विकारसङ्घ—"इति भावे वुण्, स्त्रीत्वमभिधानात्, "कप्यनाशीरके—'' इति प्रत इत्त्वम् । सदेति "कुतः क्वकुह—"इत्यादिना निपातितम् ॥ २७ ॥ भ० म०

हृतेति ।—हृतोच्चैःश्रव आदि रत्नो गोत्रभिदिन्द्रः, अत एव च्युतोद्योगः, दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तं प्रयच्छन् पूतक्रतायीं शचीं, "पूतक्रतोरै च" इति ङीष्, "पुंयोगादाख्यायाम्" इति ; सत्रपः सव्रीड़ः, किं नाभ्येति ? न ढौकते ? ॥ २८ ॥ ज० म०

हृतेति ।—गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः सन् पूतक्रतायीं स्वभार्यामपि नाभ्येति ? नाभिमुख्येन गच्छति किम् ? अपि तु गच्छत्येव । सत्रपत्वे हेतुमाह ; यथा हृतरत्नः हृतं रत्नं यस्य स तथा, गलितोद्योगः, राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति डः ; पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी, "वृषाकप्यग्नि—"इत्यादिना ङीप् ऐङ् च ; गोत्रान् पर्वतान् यो भिनत्ति सोऽतिबलीयान् इति साभिप्रायं पदम् ॥२८॥ भ०म०

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः।
त्रपाकरस्तथाऽप्येष यतिष्ये तद्विनिग्रहे॥ २९॥
उत्पत्य खं दशग्रीवो मनोयायी शितास्त्रभृत्।
समुद्रसविधावासं मारीचं प्रति चक्रमे॥ ३०॥

अतुल्येति।—तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः, "कृञो हेतु—" इत्यादिना टः; तथाऽपि त्वत्प्रार्थनया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रह-विषये तस्य यतिष्ये यत्नं करिष्यामि, "वर्त्तमानसामीप्ये वर्त्तमान-वद्वा" इति विकल्पेन लटो विधानात् लृड़् दाहृतः॥२९॥ ज० म०

अतुल्येति।—यद्यपि अतुल्यमहसा असहृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः, तथाऽपि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये, त्वत्प्रार्थनयेति शेषः। त्रपां लज्जां करोतीति "टकुष्टः"। निग्रहे इति विषयसप्तमी, निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये॥ २९॥ भ० म०

उत्पत्येति।—उक्त्वैवं खमाकाशमुत्पत्य मारीचं प्रति चक्रमे यत्र मारीचो राक्षसस्तत्र गत इत्यर्थः, "अनुपसर्गाद्वा" इति क्रमेस्तङ्; मनोवदाशु यातं शीलमस्येति "कर्त्तर्य्युपमाने" इति णिनिः; शितास्त्रभृत् गृहीततीक्ष्णचन्द्रहासः, समुद्रस्य सविधे समीपे आवासो यस्य मारीचस्य, सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीपवाची॥ ३०॥ ज० म०

उत्पत्येति।—एवमुक्त्वा दशग्रीवो रावणः खमाकाशम् उत्पत्य मारीचं प्रति लक्षीकृत्य चक्रमे गतः, "वाऽगेः" इति मं, द्वितीयानिमित्तकस्य प्रतिशब्दस्य भिन्नाभावात्; मन इव शीघ्रं यातीति मनोयायीति 'कर्त्तर्य्युपमाने उपपदे णिन्' इति परः, [illegible] णिन्। [illegible] कुर्वता

सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत् ।
वस्नुनाऽथ श्रुतार्थेन तेनागादि दशाननः ॥३१॥
अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर !।
यो रणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥३२॥

क्वचिदुपमानवाचकशब्दाभावेऽप्युपमानं गम्यते इति सूचितं, तेन मन इव यायीत्यर्थो गम्यते, शितं तीक्ष्णमस्त्रं बिभर्त्तीति क्विप्, समुद्रस्य सविधे समीपे आवासो यस्य तं "सदेशाऽभ्याससविध-समर्य्यादसवेशवत्" इत्यमरः॥ ३० ॥ भ० म०

सम्पत्येति।—असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे, अत्रापि सह नीडेनेति व्युत्पत्तिमात्रं, समेत्य यात्वा तं वृत्तान्तं शूर्पणखाकथितमशिश्रवत् श्रावितवान्, शृणोतेर्ण्यन्तस्य लुङि रूपम् ; तेन मारीचेन श्रुतार्थेन वस्नुना वमनशीलेन दशाननः अगादि उक्तः, कर्मणि लुङ् ॥ ३१ ॥ ज० म०

सम्पत्येति।—असौ रावणः तस्य सनीडे समीपे सम्पत्य सङ्गत्य तं मारीचं वृत्तान्तं शूर्पणखोक्तम् अशिश्रवत् श्रावितवान्, "समीपे निकटाऽऽसन्नसन्निकृष्टसनीडवत्" इत्यमरः ; अथ अनन्तरं श्रुतार्थेन तेन मारीचेन वस्नुना भीतेन दशाननोऽगादि उक्तः, कर्मणि टौ ॥ ३१ ॥ भ० म०

अन्तरिति।—हे राक्षसेश्वर ! त्वं तस्माद्रघुव्याघ्रादन्तर्द्धत्स्व अन्तर्हितो भव, व्यवहितो भवेति यावत्, दधातेर्लोटि "श्नाऽभ्य-स्तयोः—"इत्याकारलोपः, अभ्यासस्य "दधस्तथोश्च"इति भष्-भावः, "अन्तर्द्धौ येना—"इत्यपादानसंज्ञा ; यस्मात् स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यते इति"आतो युच्" ; यतो हस्तरोधं दधद्धनुः हस्तेन रुद्ध्वा सदैव यो धनुर्धत्ते स कथं दुरुपस्थानो न भवति ? हस्तशब्दे तृतीयान्त-उपपदे"समम्यासोप-

भवन्तं कार्त्तवीर्य्यो यो हीनसन्धिमचीकरत् ।
जिगाय तस्य हन्तारं स रामः सार्वलौकिकम् ॥३३॥

"पीड़कधकर्ष:" इति णमुल्, चकारेण तृतीयायाः समुच्चितत्वात् "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति सः ॥ ३२ ॥ ज० म०

अन्तर्धिरिति ।—हे राक्षसेश्वर ! तस्माद्दुष्प्राप्यात् त्वम् अन्तर्द्धेहि स यथा न पश्यति तथा व्यवहितो भव, अन्तःपूर्व-धाओो-ह्रि "ह्वादो रे हि:" "झभखय—" इत्यादिना खेर्ह्रस्व: धस्य दत्व, "झभान्तस्य—" इति दस्य धः, "श्रा-ह्रयोरालोप्यः—" इत्यालोपः, "झष्भषो:—" इति धस्य तः, "यतोऽपाय—" इत्यादिना अन्तर्द्धौ पञ्चमी। हेतुमाह—यो रामो दुरुपस्थानः दुःखेनोपस्थीयते उपगम्यते, शत्रुभिः समोपगमनमेवाशक्यं, किं पुनर्युद्धम् ? इति भावः, "आतोऽनोऽदरिद्र:" इति अनः ; यतो हस्तरोधं सदा धनुर्दधत् हस्तेन रुद्धा हस्तरोधम् 'आसत्तौ तृतीयान्ताद्रुधो णम्' इति परः, तेन सदा स्थिरतरं धनुर्दधातीत्यर्थः। केचित्तु हस्तं रुद्धेत्यर्थे 'स्वाङ्गात् रुधेर्णम्', तेनान्यकर्मनिवृत्तिर्हस्तस्य गम्यते इत्याहुः, स्वमते हस्तं रुणद्धि कार्य्यान्तरात् व्यावर्त्तयतीति "टात् अण्" धनुर्विशेषणम् ॥ ३२ ॥ भ० म०

तदेव दुरुपस्थानत्वं स्फुटयन्नाह, भवन्तमिति।—यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं सहस्रबाहुः भवन्तं हीनसन्धिमचीकरत् हीनेन दुर्बलेन यः सन्धिः तं भवन्तं कारितवान्, तेन हीनत्वं बलान्निर्जित्य कारित इति दुरुपस्थानमुक्तं. "हृक्रोरन्यतरस्याम्" इति द्विकर्मकता ; तस्य कार्त्तवीर्य्यस्य यो हन्ता परशुरामः, कृत्प्रयोगे कर्मणि षष्ठी ; तेन हि तस्याग्निहोत्रधेनुमपहृत्य गच्छतः परशुना बाहुसहस्रं छिन्नं, तस्य हन्तारं स रामो जिगाय जितवान्, जयतेर्लिटि धातु-जकारस्य "सन्-लिटोर्जे:"

**यमास्यदृश्वरी तस्य ताड़का वेत्ति विक्रमम् ।**
**शूरम्मन्यो रणाच्चाहं निरस्तः सिंहनर्दिना ॥ ३४ ॥**

इति कुलम्; सार्वलौकिकं सर्वलोके विदितं,"लोक-सर्वलोकाभ्यां ठञ्" "अनुशतिकादीनाञ्च" इत्युभयपदवृद्धिः । "सार्वलौकिकः" इति पाठान्तरम । अत्र राम इति योज्यम् ॥ ३३ ज० म०

दुरूपस्थानत्वं स्फुटीकुर्वन्नाह, भवन्तमिति ।—यः कार्त्तवीर्य्योऽर्जुनो भवन्तं हीनसन्धिं भग्नसन्धिम् अचीकरत् कृतवान्, कृञः स्वार्थे णिः,"चुर्भ्यो णिर्वा"इत्यस्य योगविभागात् क्वचिच्चुरादेरन्यस्मादपि स्वार्थे णिर्वा भवतीति बोध्यं, तेन "रामो राज्यमकारयत्" इत्यादिप्रयोगाः ; यद्वा—हीनजनेन सह सन्धिं सम्धानं मिलनं कारयामास, यद्भयात् भवता हीनजनोऽप्याश्रित इत्यर्थः, "वोऽञो णेः—"इति प्रयोज्यकर्त्तुः कर्मता ; कृतवीर्य्यस्यापत्यं कार्त्तवीर्य्यः, गर्गादित्वात् ष्यञः ; तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामं स रामो जिगाय "जेर्गिः सन्-ण्योः" ; सार्वलौकिकं सकलक्षत्रियनाशेन सर्वलोकविदितम् ; प्रथमान्तपाठे रामविशेषणं, तत्र विदित इत्यर्थे "ढचे कात्—" इति णिकः, "णित्ते व्रिः—"इति सुभगादित्वात् उभयपदे वृद्धिः ॥ ३३ ॥ भ० म०

यमास्येति ।—तस्य रामस्य विक्रमं ताड़का वेत्ति ज्ञातवती, "वर्त्तमानसामीप्ये—" इति भूते लट् । कीदृशी ? यमास्यदृश्वरी तच्छरताड़िता यममुखं दृष्टवती, मृतेत्यर्थः, "दृशेः क्वनिप्" "वनो र च"इति ङीप्-रेफौ ; अहमपि शूरम्मन्यः शूरमात्मानम्मन्यमानः, "आत्ममाने खश्च" ; सिंहनर्दिना रामेण, सिंह इव नर्दतीति "कर्त्तर्य्युपमाने" इति णिनिः ; रणान्निरस्तः बहिष्कृत इत्यर्थः ॥ ३४ ॥ ज० म०

यमास्येति ।—तस्य रामस्य विक्रमं ताड़का वेत्ति जानाति,

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ ।
अनुभूतो मया चासौ तेन चान्वभविष्यहम् ॥२५॥

...च वेत्ति । सा किम्भूता ? यमात्मद्वरी यममुखं दृष्टवती, ...तीति यावत्, "आतुस्—" इति दृशेः क्वनिप्, "वनखमाद्वनो—" इति ईप् रङ् च । अहं किम्भूतः ? शूरम्मन्यः आत्मानं शूरं मन्यमानः, "मन्यात् स्वार्थे" इति खश्, खित्वात् रत्वे "दिवसुतुद—" इत्यादिना यन् ; तेन सिद्धनर्दिना रणात् निरस्तः निराकृतः ; सिंह इव नर्दतीति मनोयायीतिवत् ; वेत्तीति लोकान्तरस्था ...ड़का इदानीमपि जानातीत्यभिप्रायेण वर्त्तमाने को,'वर्त्तमानसामीप्ये भूतेऽपि को' इत्यन्ये । रणादिति हेतौ पञ्चमी, रणभूमिः ...काशात् वहिष्कृतः इति वा ॥ २४ ॥ भ०म०

न त्वमिति ।—तेन रामेण त्वं नान्वभाविष्ठाः त्वमनेन नानुभूतः, कर्मणि लुङ् थासि "स्यसिच्—" इत्यादिना चिण्वदिट् ...त्वम् ; नान्वभावि त्वयाऽप्यसौ नानुभूतः येनैवमुच्यते, अत्र "चिण् भावकर्मणोः" इति चिण् ; अनुभूतो मया चासौ चशब्दः पुनरित्यर्थे, मया पुनरसावनुभूतः न शक्यो जेतुमिति, तेन रामेण चान्वभविष्यहमनुभूतोऽहं तेन सह योद्धुमक्षम इति, अत्र चिण्वद्भावो न कृतः, किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट्, तेन वृद्ध्यभावात् गुण एवेति ॥ २५ ॥ भ० म०

न त्वमिति ।—तद्वचने को भेदः ? मत्प्रसिद्धेऽव स दूरीभविष्यति इत्याशङ्कायामिदमुत्तरं, तेन रामेन त्वं न अन्वभाविष्ठाः न अनुभूतः, कथं त्वत्तोऽस्य भयं स्यात् ? अनुपूर्वो भूधातुः सकर्मकः कर्मणि थास्,"स्यसिच्—" इति पक्षे चिण् ; त्वयाऽपि असौ रामो न अन्वभावि न अनुभूतः, तेन तद्वाक्या न युक्ता, कर्मणि

अध्यङ् अस्त्रभृतां रामो न्यञ्चस्तं प्राप्य मद्विधाः।
स कन्याशुल्कमभनक्मिथिलायां* मखे धनुः ॥२६॥

टी-तम् ; असौ मया अनुभूतः, तथापि तस्यशोऽहमिति मद्दर्प
अस्वाभेति भावः, तेनाप्यहमन्वभविषि अनुभूतः, तेन अहमप्
अर्थे, पराजितस्य मम दर्शनेन तस्यावस्थाप्रसङ्गात्, कर्मणि टी
मृत्-मिथोरभावपक्षे इम् ॥ २५ ॥ भ० म०

अध्यङिति।—अस्त्रभृतां मध्ये रामोऽध्यङ् अधिकः, अध्य-
त्याधिक्येन वर्त्तते इति "ऋत्विग्—"इत्यादिना क्विन्, तस्मिन्
लुप्ते अनुनासिकलोपे "अगिदचाम्—" इति नुम्, तस्यानुस्वारपर-
सवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपौ, नकारस्य "क्विन्प्रत्य-
यस्य कुः" इति कुत्वेन ङकारः ; तं तादृशं प्राप्य मद्विधा न्यञ्चो
हीनाः, निशब्दोऽत्राधोभावे वर्त्तते, न्यञ्च इति पूर्ववत् क्विन्, अनु-
नासिकलोपः, नुम्, हल्लोपो नास्ति, अहल्त्वात् कुत्वञ्च नास्ति,
अपदसंज्ञत्वात् ; यो मिथिलायां मखेधनुरभनक् भग्नवान्, सो-
ऽस्मादपि कारणात् अस्त्रभृतामध्यङ्, भञ्जेर्लङि "श्नान्नलोपः" इति
हल्ङ्यादिलोपः कुत्वञ्च ; कन्याशुल्कं कन्यामूल्यं तद्धि यो रौद्रं
धनुरारोपितगुणं करोति तस्मै कन्या दीयत इति मूल्यीकृत्य
स्थापितम् ॥ २६ ॥ ज० म०

अध्यङिति।—अस्त्रभृतां मध्ये रामः अध्यङ् आधिक्येन पूजितः,
कर्मणि क्विप्, "अनिदितां हल उपधायाः क्ङिति" इति प्राप्त नलोपस्य "नाञ्चेः
पूजायाम्" इति प्रतिषेधः, विच्प्रत्ययो वा, "चुट्—" इति
अन्त्यः पृथक् ग्रहणात् लुप्, प्राक्कुङ्, "क्विन्—""अपि अमृतोः"
स्यान्तस्य लुप्, अध्यङ् आधिको वा, अधिपूर्वोऽञ्चतिराधिक्ये वर्त्तते ;
तं प्राप्य मद्विधा मत्प्रकारकाः पुरुषाः न्यञ्चः, निशब्दोऽधोभावे,

* "मखे धनुः" इत्यत्र "महद्धनुः" इति जयमङ्गलासम्मतः पाठः।

संविन्तः सह-युध्वानौ तच्छक्तिं खरदूषणौ।
यज्वानश्च समुत्वानो यानगोपीन्मखेषु सः ॥२७॥

न्यञ्चन्ति अधो गच्छन्तीति न्यञ्चो हीनाः इत्यर्थः। कुत इत्याह —स रामो मिथिलायां मखे यज्ञे धनुरभनक् भग्नवान्, भञ्जेर्ण्यां रुधादित्वात् नम्,नमो नलोपः"हसाङ्ग्रां दिसेः—"इति दिलोपः, "घुङ्—" इति कुङ्; कन्याशुल्कं कन्यापणं, धनुरारोपे सति कन्या देयेति मूल्येन स्थापितम् ॥ २६ ॥ भ० म०

संविन्त इति।—नाहमेव रामशक्तिमवेमि.अपि तु खरदूषणावपि संविन्तः ज्ञातवन्तौ, "वर्त्तमानसामीप्ये—" इति भूते लट्, सकर्मकत्वात् "समो गम्य –" इत्यादिना तङ् न भवति, नवाकर्मकादिति वर्त्तते; सह-युध्वानौ सह तेन युद्धवन्तौ, "सहे च" इति युधे क्वनिप्; यज्वानश्चाहिताग्नयः, समुत्वानः सोमयाजिसहिताः, "सुयजोर्ङ्वनिप्"; संविदन्तीति वचनविपरिणामेन योज्यम्; यानगोपीत् अरक्षीत् मखेषु रामः, लुङि रूपं, तथा मखद्रुहो राक्षसान् घ्नतो रामस्य शक्तिं ज्ञातवन्तः॥२७॥ज०म०

संविन्त इति।—न केवलमहमेव वेद्मि, खरदूषणावपि तस्य शक्तिं संविन्तः ज्ञातवन्तौ, ताडका वेत्तीतिवत् कौ, सह-युध्वानौ तेन सह युद्धवन्तौ,"वा सुस —"इति क्वनिप्; यज्वानश्चाहिताग्नयः विदन्ति, पूर्वेण क्वनिप्,बाहुल्यात्र जिः; समुत्वानः सुत्वभिः कृतसोमपानैः सहिताः, पूर्वेण क्वनिप्, "स्वय तन् पिति"इति तन्; तेषां ज्ञाने हेतुमाह—मखेषु यज्ञेषु स यानगोपीत् अरक्षीत्,तेषां यज्ञे राक्षसहननात् तेऽपि जानन्तीत्यर्थः, 'गुपू रक्षणे' "वाऽऽे" इति आयोऽभावः, पक्षे "ज्यां सिः", "वेमूत्—" इति पक्षे इम् ॥ २७ ॥ भ० म०

सुखजातः सुरापीतो नृजग्धो माल्यधारयः।
अधिलङ्कं स्त्रियो दीव्य माऽऽरब्धा बलिविग्रहम्॥३८

सुखेति।—यत एवं दुरुपस्थानः स तस्मात् बलिना रामेण विग्रहं माऽऽरब्धाः मा कार्षीः, रभेराङ्पूर्वात् "माङि लुङ्" थास्, "झलो झलि"इति सिज्लोपः, "झषस्तथोर्धोऽधः" "झलां जश् झशि"। किं कार्य्यम्? इत्याह—अधिलङ्कं लङ्कायामधि, विभक्त्यर्थेऽव्ययीभावः; स्त्रियो दीव्य क्रीड़, लोटि रूपम्; "दिवः कर्म च"इति कर्मसंज्ञायां"वाऽम्शसो."इतीयङ्। कीदृशः? सुखजातः जातं सुखमस्येति बहुव्रीहिः, कृतासवपानत्वात्, यदाह—सुरापीतः पीतमदिरः, नृजग्धः भुक्तमानुषः, निष्ठायामदो जग्धिः, पूर्ववद्बहुत्वम्, एषु वाऽऽहिताग्न्यादिदर्शनात् परनिपातः; माल्यं धारयतीति माल्यधारयः "अनुपसर्गात् लिम्प—"इत्यादिना शः॥३८॥ ज० म०

सुखेति।—रामो दुरुपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं माऽऽरब्धाः मा कार्षीः, आङ्-रभेर्द्दौ-थास् "झलस्तात्—" इति सिलोपः, "ढभास्तथोः—" इति थस्य धः; अधिलङ्कं लङ्कामधिकृत्य स्त्रियो दीव्य स्त्रीभिः क्रीड, कारकार्थेऽव्ययीभावः, "दिवसुतुट—" इत्यादिना दिवः श्यन्,"व्यंनच्तयि—" इति घं:, हेर्लोपः, "दिवो धं वा" इति करणे द्वितीया। कीदृशः? सुखं जातमस्य,सुरा पीता येन,ना मनुष्यो जग्धो भक्षितो येन स तथा, एषु अन्याहितादित्वात् 'क्तान्तस्य परनिपातः' इति परः, स्वमते पूर्वपरनिपातयोर्विवक्षाधीनत्वं "दैक्यं सोऽन्वये" इत्युक्तेः. "जग्धोऽदो यपि च" इति जग्धादेशः; माल्यानि धारयतीति "शाखिसाति—"इति शः॥३८॥ भ० म०

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत ।
यातयामं विजितवान् स रामं * यदि किं ततः ? ॥३९॥
अघानि ताड़का तेन लज्जाभयविभूषणा ।
स्त्रीजने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसम् ॥४०॥

तमिति।—तं मारीचं पूर्वोक्तं निराकुर्वन् रावणः प्रत्यभाषत प्रत्युक्तवान्, लङि रूपम् ; भीतङ्कारमाक्रुश्य भीतं कृत्वा भीतोऽसीति, "कर्मण्याक्रोशे कृञः खमुञ्" ; यातयामं गतवयसं यदि विजितवान् रामो दाशरथिः कि ततः ? किं तापसः शूरः ? ॥ ३८ ॥ ज० म०

तमिति ।—भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे, भीतङ्कारमिति कर्मण्याक्रोशे कृञो भाषणार्थे कृञ् णमुल् खितश्च इति परः ; स्वमते तमाक्रुश्य प्रत्यभाषत । तं किम्भूतम् ? भीतं भययुक्तं, पुनः किम्भूतम् ? कारं यो रणे दूरपलायन इत्यादेर्ज्ञापयितारं, 'कृकड़् विज्ञाने' इत्यस्मात् अन्तात् "कभावेऽमो"इति कर्त्तरि घञ्,किंवा"णमुल् वा—" इत्यस्य योगविभागात् आक्रोशे णमुल्, मनीषादित्वात् पूर्वपदस्य दीर्घाल्लत्वम् । किं प्रत्यभाषत ? इत्याह—स राघवो यातयामं वृद्धं रामं जामदग्न्यं विजितवान् ततः किम् ? न हि वृद्धजयेन शौर्य्यं ज्ञायते । "यातयामस्तु जीर्णे स्यात् परिभुक्तोज्झितेऽपि च" इति विश्वः ॥ ३९ ॥ भ० म०

अघानीति ।—तेन रामेण ताड़का अघानि व्यापादिता, हन्तेः कर्मणि लुङ्, लज्जा च भयञ्च विभूषणं यस्याः, स्त्रीत्वाच्च शौर्य्यम्, एवंविधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने

* "रामम्" इत्यत्र "रामः" इति जयमङ्गलासम्मतः पाठः ।

यद्गेहेनर्दिनमसौ शरैर्भीरुमभाययत् ।
कुब्रह्मयज्वके रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

:श्लाघ्यं श्लाघनीयं, "कृत्यानां कर्त्तरि वा" इति तृतीया, तं धिक् तं लोकं क्षुद्रमानसं हीनमानसम् ॥ ४० ॥ ज० म०

अघानीति।—लज्जा भयञ्च विभूषणं यस्याः सा ताडका तेन रामेण अघानि मारिता, हन्तेः कर्मणि टो,"र-तनोर्यगिणो" "खेर्णौ घो ञ्णिति च" इति घत्वम्; स्त्रीजने तत् कर्म यदि श्लाघ्यं श्लाघनीयं तदा क्षुद्रमानसं हीनचित्तं लोकं धिक्, "धिक् समया—"इति द्वौ ॥ ४० ॥ भ० म०

यदिति।—असौ रामो यज्वन्तं भीरुं शरैरभाययत् भायितवान्, णुगात्मनेपदे न भवतः भयहेतोरभावात्,अत्र हि शरेभ्यो भयं न तु रामात्; तत् किं पौरुषम्? पुरुषकारः किमसौ? युवादित्वादण्; गेहेनर्दिनं गेह एव नर्दिनं,"पात्रेसमिताद्यश्च" इति सः; कुब्रह्मयज्वके कुत्सिता ब्रह्माणः कुब्रह्माः 'कुः पापार्थे' इति सः,"कुमहद्भ्यामन्यतरस्याम्" इति समासान्तष्टच्; तेषां कुत्सितो यज्वा तस्मिन् सति, कुत्सायां कन्; तेन शूरम्मन्योऽहं रणाङ्केन निरस्तः इत्यपुष्कलमुक्तम् ॥४१॥ ज० म०

यदिति।—असौ रामः कुब्रह्मयज्वके यज्वन्तं शरैरभाययत् अत्रासयत्, तदपि न पौरुषं, कथम्? इत्याह—भीरुं भयशीलम्, अत एव गेहेनर्दिनं स्वगृहे एव नर्दतीति ग्रहादित्वाण्णिन्,'पात्रेसमितादित्वात् क्षेपे समासो विभक्त्यलोपश्च' इति परः; अभाययदिति भियो णिजन्तात् घो "भियोर्हेतु भये मन्त्र' इत्यस्य "भीभीष् वा" इत्यस्य च नात्र विषयः, यतः शरेभ्य एवात्र भयं विवक्षितं, न तु प्रयोजकात् कर्त्तुः; कुत्सितो ब्रह्मा ब्राह्मणः कुब्रह्माः,"देशात् ब्रह्मणः कुमहद्भ्यां तु वा" इति पक्षे षः, तथा

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः ।
किं चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ?॥४२॥

कुत्सितो यत्र इति निन्दायां "विकारसङ्घे—" इत्यादिना कः; अत एव प्रयोजनाभावात्तत्र समर्था राक्षसा न गच्छन्ति। पुरुषस्य भावः कर्म वेति पूर्वेण ष्यः ॥ ४१ ॥ भ० म०

चिरेति।—यदि रामेण क्षत्रियकान्तिके कुत्सितक्षत्रियसमीपे भग्नं धनुः किं तच्चित्रम्? आश्चर्यम्? क्षत्रिया जनकादयः तत्र कुत्सायां कन्, क्षत्रियकस्यान्तिके, दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात् "सप्तम्यधिकरणे च" इति चकारात् 'दूरान्तिकार्थेभ्यश्च' इति सप्तमी। किमिति न चित्रम्? इत्याह, चिरकालमुषितमिति "कालाध्वनोः—" इति द्वितीयां विधाय "अत्यन्तसंयोगे च" इति द्वितीयायाः समासः, जीर्णं चिरकालोषितत्वात् 'जॄष् वयोहानौ' निष्ठा, "ॠत इद्धातोः" इत्त्वे "हलि च—" इति दीर्घः, "रदाभ्याम्—" इति निष्ठानत्वम्। कीटैर्घुणैर्निष्कुषितं खादितं, निरः कुषः इत्यनुवर्त्तमाने "इण् निष्ठायाम्" इतीट् ॥ ४२ ॥ ज० म०

चिरेति।—क्षत्रियकान्तिके कुत्सितानां क्षत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रम्? कथं न चित्रमित्याह—चिरकालोषितं चिरकालं व्याप्य स्थितं "सदाऽध्वादि व्याप्तौ—" इति द्वितीयासमासः; तत एव जीर्णं 'जॄ 'जरायां हानौ' क्तः "ॠदिरणो—" इतीर् "व्यञ्जनतयो—" इति दीर्घं, "लूत्वाद्येत्—" इति नकारः। कीटैर्घुणैर्निष्कुषितम् अन्तः खादितं, "नेम् ङौ—" इत्यादौ निष्कुषवर्जनात् इम, षत्वविधानं "गवाश्वजादेरभिनिष्पतन्त्यः" इत्यत्र व्याख्यातम्; इदमधनुर्भङ्गज्ञापयेत् क्षत्रियाणां कुत्सा ॥ ४२ ॥ भ० म०

वनतापसके वीरौ विपक्षे गलितादरौ।
किं चित्रं यदि सावज्ञौ मम्रतुः खरदूषणौ?॥४३॥
त्वञ्च भीरुः सुदुर्बुद्धे! नित्यञ्च रणकाम्यसि *।
गुणांश्चापह्नुषेऽस्माकं स्तौषि भर्तृंश्च नः सदा॥४४॥

वनेति।—वने तापसो वनतापसः, कुत्सायां कन्, तस्मिन् वनतापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयं करिष्यतीत्यश्रद्धयैव योधितवन्तौ खरदूषणौ वीरौ यदि मम्रतुः मृतौ, को दोषः? किं चित्रम्? "म्रियतेर्लुङ्लिङोश्च" इति नियमात् लिट्यात्मनेपदं न भवति॥ ४३॥ ज० म०

वनेति।—खरदूषणौ यदि मम्रतुः तदपि किं चित्रम्? नैवाश्चर्यमित्यर्थः, तपःशीलस्तापसः कुत्सितस्तापसो वनतापसको रामस्तस्मिन् विपक्षे किमयं करिष्यतीति मत्वा गलितादरौ वीरावपि सावज्ञौ विपक्षादराभावात् युद्धेऽपि सावहेलौ।"मृङ् ष्टौक्ये मम्" इति नियमात् "नवशः पमे—" इति ञितोऽन्यत्वात् व्याः परस्मैपदम्॥४३॥ भ० म०

त्वञ्चेति।—हे सुदुर्बुद्धे! त्वं पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि आत्मनोऽनिशं रणमिच्छसि, आत्मेच्छायां काम्यच्; अस्माकञ्च सतो गुणानपह्नुषे अपनयसि, 'ह्नुङ अपनये' अादादिकः, ङित्वात्तङ्, भर्तृंश्च नोऽस्माकं स्तौषि, स्तौतेः "उतो वृद्धिर्लुकि हलि"॥४४॥ ज० म०

त्वञ्चेति।—हे सुदुर्बुद्धे! मारीच! त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च, "लेः काम्यक् स्वेच्छायां" भीरोर्युद्धेच्छा अनुचितैव, युद्धे पराजयोऽवश्यम्, एवमस्माकं गुणां-

* "नित्यञ्च रणकाम्यसि" इत्यत्र "नित्यं मरणकाम्यसि" "नित्यं स रणकाम्यसि" इति च पाठान्तरद्वयम्।

शीर्षच्छेद्यमतोऽहं त्वां * करोमि क्षितिवर्द्धनम्।
कारयिष्यामि वा कृत्यं विजिघृक्षुर्वनौकसौ ॥४५॥

व्यपह्नुषे शीर्य्यादीन् अपनयसि, 'ह्नुङ् अ चौर्य्ये' सदा नोऽस्माकं अघून् स्तौषि, 'ष्टुञ् अ स्तुतौ' "रपिवस्युतोऽदेर्व्रे."॥४४॥ भ० म०

शीर्षेति।—यत एवंविधस्त्वं दुष्टः अतोऽहं त्वा"त्वामौ द्वितीयायाः" इत्याष्टमिकलक्षणेन त्वादेशः, शीर्षच्छेद्यं शीर्षच्छेदार्हं, "शीर्षच्छेदात् यच्च", क्षितिवर्द्धनं करोमि शिरश्छित्त्वा व्यापादयामीत्यर्थः; अथवा कृत्यं करणीयं, "विभाषा कृवृषोः" इति क्यप्, कारयिष्यामि "हृक्रोः—" इति द्विकर्मकता, विजिघृक्षुः विग्रहीतुमिच्छुः, "सनि ग्रहगुहोश्च" इतीट्प्रतिषेधः, "रुदविद—" इत्यादिना सनः कित्त्वे "ग्रहिज्या—" इत्यादिना सम्प्रसारणं, "हो ढः" "एकाचो बशो भष्—" "षढोः कः सि", वनौकसौ रामलक्ष्मणौ, वनमोको गृहं ययोः, "न लोक—" इति कर्मणि षष्ठ्याः प्रतिषेधः ॥४५॥ ज० म०

शीर्षेति।—अतः कारणात् अस्मद्गुणापह्नवात् प्रत्रस्तवनाच्च शीर्षच्छेद्यं शीर्षच्छेदार्हं त्वां क्षितिवर्द्धनं मृतं करोमि शिरश्छित्त्वा मारयामीत्यर्थः, शीर्षच्छेदमर्हतीत्यर्थे "दण्डादित्वात्—" इति यः, किंवा छिदो ण्यत्, शीर्षे छेद्यं शीर्षं छेद्यं यस्येति वा विग्रहः; अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवनेच्छाऽस्ति तदा मत्कृत्यं कुर्व्विति भावः "कृवृषमृज—" इति पक्षे क्यप्, "णोऽणौ णे—" इति प्रयोज्यकर्तुः पक्षे कर्मत्वं, वनमेव ओको ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुम अभिभवितुं वा इच्छुरहं, ग्रहेः सन् "नेमुगुहग्रहः" इति इमनिषेधः, "ग्रहस्वपप्रच्छां किः" ॥४५॥ भ० म०

* "त्वाम्" इत्यत्र "त्वा" इति जयमङ्गलासम्मतः पाठः।

तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः।
मारीचोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते॥४६॥
हरामि रामसौमित्री मृगो भूत्वा मृगद्युवौ।
उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु॥ ४७॥

---

तमिति।—तं रावणम् एवमुक्तवन्तं निशात इति "शाच्छो-रन्यतरस्याम्" इतीत्वाभावपक्षे रूपम्, उद्यतः उत्थापितः निशात-स्तीक्ष्णोऽसिर्येन तं मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् —अभ्यमित्र्यो भवामि ते, अमित्रस्याभिमुखमभ्यमित्रम्, आभिमुख्येऽव्ययीभावः; अभ्यमित्रमलङ्गामीत्यस्मिन्नर्थे "अभ्य-मित्राच्छ च" इति चकारात् यत्-खौ च इति यत्; त्वदमित्राभि-मुखं गच्छामीत्यर्थः, अनुनयन् अनुकूलयन्, किमर्थम्? जिजीविषुः जीवितुमिच्छुः। ४६॥ ज० म०

तमिति।—मारीचो जिजीविषुर्जीवितुमिच्छुः सन् त्रासात् अनुनयन् तं रावणं प्रत्युवाच। त्रासहेतुमाह—उद्यत उत्था-पितो निशातस्तीक्ष्णोऽसिर्येन तं, निशातेति "छाशोर्वा" इति शतेः पक्षे न डिः। किं प्रत्युवाचेत्याह—अहं ते तव अभ्य-मित्र्यः शत्रुभिमुखगामी भवामि, अमित्रस्य अभिमुखम् अभ्य-मित्रम्, आभिमुख्येऽव्ययीभावः; अभ्यमित्रशब्दादिदं गच्छती-त्यर्थे "विकारसङ्घ—" इति यः॥४६॥ भ० म०

हरामीति।—अहं मृगो भूत्वा राम-सौमित्री हरामि देशा-न्तरं प्रापयामि, आखेटकाभिरतत्वात्, यदाह—मृगद्युवौ मृगै-र्दीव्यते इति क्विप् "च्छ्वोः शूडनुनासिके च" इति चकारात् क्वौ च ऊठ् यणादेशः ऊवङ्। "मृगद्युवौ" इति पाठान्तरम्। तत्र 'द्यु अभिगमने' मृगान् द्यौति अभिगच्छतीति क्विप्। त्वञ्च यथेष्टं

ततस्त्रिचीयमाणोऽसौ हैमरत्नमयो मृगः ।
यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥४८॥

यथारुचि तनुदुद्योगं सन्तनु विस्तारं कुर्वित्यर्थः, तनोतेर्लोटि "उतश्च—" इति हेर्लुक्, अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी "अभ्यमित्राच्छ च" इति चकारात् यत्-खौ च इति खः ॥४७॥ ज॰ म॰

उपायं दर्शयन्नाह, हरामीति।—अहं मृगो भूत्वा राम-सौमित्री हरामि अन्यत्र नयामि, यतस्तौ मृगद्युवौ मृगयारसिकौ, मृगैर्दीव्यते इति क्विपि "च्छ्वोः शूडानुनासिके—" इति वस्योट्, "धोरियुवचि"। "मृगद्युतौ" इति पाठे—'द्यु अभिगमने' इत्यस्मात् क्विपि "ह्रस्वस्य तुक् पिति" इति तुक्; मृगाभिगामिना-वित्यर्थः, ततस्त्वमपि अभ्यमित्रीणो यथेष्टमुद्योगं सन्तनु 'तन दुञ् विस्तारे' "हेर्लोपोऽस्योप्रोश्च" इति हिलोपः। अभ्यमित्रीण इति अभ्यमित्रयवत् ॥ ४७ ॥ भ॰ म॰

तत इति।—उक्तानन्तरमसौ मारीचो मायामृगो भूतः सन् हैमरत्नमयः रत्नञ्च हैम चेति विग्रहे "मयट् वैतयोर्भाषायाम्—" इति विकारे मयट्, निर्मलत्वात् सीताया अग्रतो यथामुखीनः प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमति स्म, इवशब्दलोपो द्रष्टव्य', यथामुखदर्शनमिति "यथामुखसम्मुखस्य दर्शनः खः"। बहु लोभयन् सुष्ठु स्पृहां जनयन्, यतश्चित्रीयमाणः आश्चर्यं भवन् हैमरत्नमयत्वात्, "नमोवरिव—" इत्यादिना क्यच्, 'चित्रङ् आश्चर्य्ये', ङकारस्यात्मनेपदार्थत्वात् शानच्। अवयवकृतं लिङ्गं समुदायस्य भवतीति ॥ ४८ ॥ ज॰ म॰

तत इति।—ततो वचनानन्तरम् असौ मारीचो मायया हैमरत्नमयो मृगः सन् सीताया यथामुखीनोऽग्रतः स्थायीभूत्वा

तेनाऽदुद्यूषयद्रामं मृगेण मृगलोचना।
मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनम् ॥ ४९ ॥

बहु लोभयन् चक्षुःस्पृहां जनयन् प्रुप्रुवे भ्रमति स्म, 'प्रुङ् गतौ' ठौ; चित्रं करोतीति चित्रीयमाणः, "चित्रङ् आश्चर्ये" कण्ड्वादित्वात् यक्,ङित्त्वादात्मनेपदम्; हेम रत्नञ्च प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट्, 'बाहुल्यात् विकार' इत्येके, मुखस्य सदृशं यथामुखं दर्पणादिस्थप्रतिबिम्बमुच्यते, सादृश्येऽव्ययीभावः; मृगस्य रत्नमयत्वेन स्वच्छतया यथामुखं दृश्यतेऽनेति "विकारसङ्घ—" इत्यादिना तदत्र दृश्यते इत्यर्थे ईनः, वस्तुतस्तु उपचारात् यथामुखीनशब्दोऽभिमुखमात्रेऽपि वर्त्तते, सीताभिमुखो भूत्वेत्यर्थः ॥ ४८ ॥ भ० म०

तेनेति।—तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितुमिच्छन्तं प्रयुक्तवती मृग्यतामयमिति, इच्छन्तस्य दिवेः "सनीवन्त—"इत्यादिना यदा नेट् तदा "च्छ्वोः शूट्—"द्विर्वचनं, तस्मात् सनन्त-ण्यन्तात् लङि रूपम्। मृगस्य लोचने इव लोचने यस्याः, मध्यपदलोपी सः; विपुलोरस्कं विस्तीर्णवक्षःस्थलम्; "उरःप्रभृतिभ्यः कप्"। किमर्थमदुद्यूषयत्? मृगाजिनं मृगचर्म प्रावुवूर्षुः प्रावरीतुमिच्छुः, प्राङ्पूर्वस्य वृङः "इट् सनि वा" इत्यनिट्पक्षे "अज्झनगमां सनि" इति दीर्घे, "उदोष्ठ्यपूर्वस्य" इत्युत्त्वं रपरत्वं, "र्वोरुपधाया दीर्घ इकः" द्विर्वचनम् "इणकोः" इति षत्वम्; रेफस्योष्ठ्यग्रहणेन ग्रहणाद्दन्त्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥ ज० म०

तेनेति।—मैथिली मृगाजिनं मृगस्य चर्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामम् अदुद्यूषयत् क्रीडितुमिच्छामकारयत्, दिवेः सन् "भ्रस्जश्रिस्मृयणुभरदरिद्रा—"

योगक्षेमकरं कृत्वा सीताया लक्ष्मणं ततः ।
मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥

इत्यादिना पञ्चेऽनिम्, "शुर्नोनिमि" इति गुणाभावे "क्षोः शूटा-वणो—" इति वस्य जत्वं ततो द्वित्वं, "ञिः प्रेरणे" द्विवेरकर्मक-त्वात् "णौऽणौ जे—"इति प्रयोज्यकर्तुः कर्मत्वम् । सा कीदृशी ? मृगस्येव लोचने यस्याः सा तथा । रामं कीदृशम् ? विपुलं अकीर्णमुरो वक्षःस्थलं यस्य तम्; 'उरःप्रभृतिभ्यः को बहुव्रीहौ' इति परः, स्वमते स्वार्थे कः, प्रावृवृषुरिति 'वृञ वरणे' सन्, "र्णोऽज्झनिक्रमां" "स्याद्वृद्दृः—" इति पञ्चेऽनिम्, दन्त्योष्ठ्य-स्याप्योष्ठ्यकार्यित्वात् "ऋदिरणावुर्वोष्ठ्यात्" इति उर् "र्वोमचतयो—" इति घः ॥ ४९ ॥ भ० म०

योगेति ।—ततो दुशूषानन्तरं रामो जगाम, योगक्षेमौ शरीरस्थितिपालने करोतीति "कञो हेतु—"इत्यादिना हेतौ टः, ग्रहणवता तदन्तविधेरभावात् "क्षेमप्रियमद्रेऽण् च" इत्यण्-खचौ न भवतः ; सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा रामः मृगस्यानुपदी अन्वेष्टा "अनुपद्यन्वेष्टा" इति निपात-नात् साधुः ; गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः ॥५०॥ भ० म०

योगेति ।—ततोऽनन्तरं लक्ष्मणं जानक्या योगक्षेमकरं कृत्वा गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनो वा रामो मृगस्यानुपदी सन् जगाम । फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः, तौ करोतीति "कृञः टः" अनुपदं यातीति बाहुल्यात् इन्, अनुपदमनुगमनं विद्यतेऽस्येति "नैका-जात्—" इति इन् वा ; 'अन्वेष्टर्यनुपदादिन्' इति परसूत्रम् ॥ ५० ॥ भ० म०

स्थायं स्थायं क्वचित् यान्तं
क्रान्त्वा क्रान्त्वा स्थितं क्वचित् ।
वीक्षमाणो मृगं राम-
श्चित्रवृत्तिं विसिष्मिये ॥ ५१ ॥

चिरं क्लिशित्वा मर्माविद्रामो विलुभितप्लवम् ।
शब्दायमानमव्यात्सीत् भयदं क्षणदाचरम् ॥५२॥

स्थायमिति ।—मृग चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणो रामो विसिष्मिये विस्मितः, स्मिङो ङित्त्वादात्मनेपदं, षोपदेश-त्वाच्चाभ्यासेण: परस्य सस्य षः । चित्रवृत्तितां दर्शयन्नाह— स्थायं स्थायं स्थित्वा स्थित्वा क्वचित् प्रदेशे यान्तं,क्रान्त्वा क्रान्त्वा क्वचित् प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम्, आभीक्ष्ण्ये णमुलि क्त्वा-णमुलो द्विर्वचनञ्च ॥ ५१ ॥ ज० म०

स्थायमिति ।—मृगं वीक्षमाणो रामो विसिष्मिये विस्मितः, स्मिङश्चरां रूपं,षोपदेशत्वात् खेरितात् षत्वं,"भ्रुव्वो:—"इतीयः । विस्मये हेतुमाह—चित्रवृत्तिम् आश्चर्यचेष्टं, चित्रवृत्तित्वं दर्श-यति—स्थित्वा स्थित्वा क्वचित् गच्छन्तं, "णमुल् वाऽऽभीक्ष्ण्ये पूर्वकाले" इति णमुल्,आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति"स्मारं स्मारं नमसि" इत्युदाहरणेन स्पष्टितं, क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं "क्रमोर्घो वा" इति पक्षे दीर्घः ॥ ५१ ॥ भ० म०

चिरमिति ।—रामः क्षणदाचरं मारीचमव्यात्सीत् विद्धवान्, व्यधेर्लुङि हलन्तलक्षणा वृद्धिः,मर्मावित् रामः मर्माणि विध्यतीति क्विप्, "नहिवृति—"इत्यादिना पूर्वपदस्य दीर्घत्वं,चिरं क्लिशित्वा महान्तं कालमायस्य, अत्यन्तसंयोगे द्वितीया, "क्लिशः क्त्वा-

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी।
मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत्॥५३॥

निष्ठयोः" इति विकल्पनेट्, तत्र "रलो व्युपधात्—" इति कित्त्व-विकल्पे "मृडमृद—" इत्यादिना कित्त्वं, विलुभितप्लवं व्याकुलितगमनं, "लुभोऽविमोहने" इतीट्, विमोहनं व्याकुलीकरणं; शब्दायमानं शब्दं कुर्वाणं, "शब्दवैर—" इति क्यङ्, भयदं भयावहं शब्दविशेषणं वा ॥५२॥ ज० म०

चिरमिति।—रामश्चिरकालं क्लिशित्वा श्रान्तो भूत्वा भयदं भयदायकं भयदायकं तं राक्षसम् अव्यात्सीत् 'व्यधौ ताड़ने', "पूङ्क्लिशुदित इम्" इति क्लिशेः पक्षे इम्, "सेमत्तुध—" इत्यादौ क्लिशवर्जनात् न गुणः, मर्माणि विध्यतीति क्विप् जि, "वीरुढो घञ् क्वौ" इति दीर्घनिर्देशात् क्वचित् क्विबन्ते पूर्वपददीर्घत्वं स्यादिति सूचितम्, आङ्पूर्वस्य रूपं वा, मर्मावित् मर्मज्ञो वा, वेत्ते रूपं, विलुभितप्लवं मर्मताड़नात् व्याकुलगतिं 'लुभ अ विमोहने' विमोहनं व्याकुलीकरणं, "लुधवसपूजा—" इत्यादिना इम् ; शब्दायमानं शब्दं कुर्वाणं, "शब्दसुखकष्टादेः—" इति ङ्यः, भयदमिति मृगस्य शब्दांशस्य या वा विशेषणम ॥५२॥ भ० म०

श्रुत्वेति।—विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं, 'टुओ स्फूर्जा वज्रनिर्घोषे' "ट्वितोऽथुच्", निनादं शब्दं, "नौ गदनद—" इति विकल्पनात् पक्षे घञ् ; श्रुत्वा मैथिली :कष्टश्रितं कृच्छ्रप्राप्तं रामं, "द्वितीयाश्रित—" इत्यादिना सः, मत्वा बुद्ध्वा, कृच्छ्रप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवनशीला शङ्कमाना, "सम्पृचानुरुधा—" इत्यादिना घिनुण्, सौमित्रिं गन्तुमैजिहत् ईहां कारितवती, ईहेर्णिजन्तात् लुङि "द्विवचनेऽचि" इति स्थानिवद्भावात् "अजादेर्द्वितीयस्य" इति हिशब्दस्य द्विर्वचनम् अभ्यासकार्यञ्च ॥५३॥ ज० म०

एष प्रावृषिजाम्भोदनादी भ्राता विरौति ते।
त्रातेयं कुरु सौमित्रे! भयात्त्रायस्व राघवम्॥५४॥
रामसङ्कुषितं नैतन्मृगस्यैव विवक्षिषोः।
रामस्वनितसङ्काशः स्वान इत्यवदत् स ताम्॥५५॥

श्रुत्वेति।—विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला, अर्थात् सीता सौमित्रिं गन्तुम् ऐजिहत् चेष्टामकारयत्, 'ईह ङ्—चेष्टायां' "णिः प्रेरणे" चङि ह्रस्वत्व 'टुओ स्फूर्जा वज्रनिर्घोषे', दीर्घवानित्येके, "ट्वितोऽथुर्भावे" ॥५३॥ ज० म०

एष इति।—एष ते भ्राता रौति, "उतो वृद्धिः—" इत्यौकारः; प्रावृषि जातः प्रावृषिजः "सप्तम्यां जनेर्डः" "प्रावृट्—" इत्यादिना सप्तम्या अलुक्, स चाम्भोदश्चेति "विशेषणम्—" इति सः; तद्वन्नदतीति "कर्त्तर्युपमाने" इति णिनिः; तस्मात् सौमित्रे! त्रातेयं त्रातिभावं तत्कर्म वा कुरु, "कपि-ज्ञात्योर्ढक्", तेन भयात् त्रायस्व राघवम् ॥५४॥ ज० म०

एष इति।—हे सौमित्रे! एष ते तव भ्राता विरौति शब्दायते, 'रु ल ध्वनौ' "रापिहस्यतोऽहेर्त्रिः"; प्रावृषि वर्षाकाले जातः प्रावृषिजः "इनजनात्—" इति डः; सप्तमीजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितम्; अम्भो ददातीति अम्भोदः पूर्ववत् डः; प्रावृषिजश्चासौ अम्भोदो मेघश्चेति स इव नदतीति ग्रहादित्वात् णिन्; त्वं त्रातेयं त्रातिकर्म कुरु। किन्तत्? इत्याह—भयात् राघवं त्रायस्व, "विकारसङ्ग—" इत्यादिना कर्मण्यर्थे त्रातेः ण्यः ॥५४॥ भ० म०

रामेति।—रामसङ्कुषितं रामशब्दितमेतन्न भवति,- घुषिरविशब्दार्थः, तस्य निष्ठायां "क्षुब्धस्वान्त—" इत्यादिना विकल्पे-

आप्यानस्कन्धकाण्ठांसं
　　　　रुषितं सहितुं रणे ।
प्रोर्णुवन्तं दिशो बाणैः
　　　　काकुत्स्थं भीरु ! कः क्षमः ? ॥५६॥

नेट्; मृगस्य विवञ्चिषोः कूर्दयितुमिच्छाः, 'वञ्चु गतौ' भौवादिकः तस्यानेकार्थत्वात् प्रलम्भने इति, चौरादिकस्याण्यन्तस्य वा प्रयोगः, येषामनित्यण्यन्ताश्चुरादय इति दर्शनं, तेषां मतेनात्रापि सिध्यति; एष स्वानो ध्वानः, "स्वनहसोर्वा" इति पक्षे घञ्; कीदृशः ? रामस्वनितसङ्काशः रामशब्दानुकारीति तां सीताम् एवमवदत् उक्तवान् स लक्ष्मणः ॥५५॥ ज० म०

रामेति ।—स लक्ष्मणस्तां सीताम् इति अवदत् । किमवत् ? इत्याह—एतच्च रामकुषितं, 'घुष रवे', विवञ्चिषोर्वञ्चयितुं छल-यितुमिच्छोर्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः, 'वञ्चु कङ्, वञ्चने' कित्वात् चौरादिकः, वञ्चनं प्रलम्भनं, "चुर्भ्यां णिर्वा" इति णाभावपक्षे रूपमिदं, केचित् तु 'वञ्चु गत्या' चौरादिक-धातोरनेकार्थत्वात् प्रलम्भनेऽपि वर्त्तते इत्याहुः । 'स्वन शब्दे' भावे क्ते स्वनितं, घञि स्वानः ॥ ५५ ॥ भ० म०

आप्यानेति ।—'प्यैङ् वृद्धौ' अस्मादाङ्पूर्वात् "संयोगादे-रातो धातोर्यण्वतः" इति निष्ठा-तो नः, 'ओ प्यायी वृद्धौ' इत्यस्य वा रूपम्, "ओदितश्च" इति निष्ठा-नत्वं, पीभावस्तु 'आङ्पूर्वस्य त्वन्धूधसोः' इति वचनात् इह न भवति, आप्यानस्कन्ध इति—आप्यानं स्थूलं स्कन्धकाण्ठांसं यस्य काकुत्स्थस्य, बाहुशिरोऽंसः, तस्य पश्चिमो भागः स्कन्धः तं, रुषितं क्रुद्धं रणे सङ्ग्रामे सहितुं हे भीरु ! कातरे ! कः क्षमः ? शक्तः ? अपितु न कोऽपीत्यर्थः, क्षमः शक्तोऽर्थत्वात् तदुपपदे "शकधृष—" इत्यादिना तुमुन्,

देहं बिभ्रत्सुरस्त्राग्नौ स्मरः प्रार्णोर्दिदेविषन्।
आघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया॥ ५७॥

"तीषसह—" इत्यादिना वेट्, ककुत्स्थस्यापत्यं काकुत्स्थः, "शिवादिभ्योऽण्"। कस्मात्र क्षमः? इत्याह—प्रोर्णुवन्तं दिशो बाणैः शतः सर्वाः दिशः बाणैः छादयन्तम्, ऊर्णोतेः शतरि उवङ्। क्षमते इति क्षमः पचाद्यच्॥ ५६॥ ज० म०

आप्यानेति।—हे भीरु! कातरस्वभावे! रणे रुषितं क्रुध्यन्तं काकुत्स्थं रामं सहितुम् अभिभवितुं कः क्षमः? शक्तः? न कोऽपीत्यर्थः, "वेस् सहलुभ—"इत्यादिना उभयत्र पक्षे इट्, क्षमेः पचादित्वादच्,ककुत्स्थस्यापत्यम् इति शिवादित्वात् अणः; आप्यानं स्थूलं स्कन्धकाण्ठांसं यस्य तम्.'ओ प्यायीङ् वृद्धौ'ओदित्वात् "सूल्वाद्योत्—" इति क्तस्य नकारः, "यूँलोपो व्यये" इति यलोपः, "आङोऽन्धूधसो."इति नियमात् न प्यादेश,'प्ये ङ् वृद्धौ' इत्यस्य रूपं वा। अंसो भुजशिरः। बाणैर्दिशः प्रोर्णुवन्तम् आच्छादयन्तम्॥ ५६॥ भ० म०

देहमिति।—एष स्मरो रामम् आयात् आगतवान्, यातेर्लङि रूपम्। किमर्थम्? स्वदेहं शरीरम् अस्त्राग्नौ अस्त्रे अग्नाविव बिभ्रत्सुः भ्रष्टुमिच्छुः,भ्रस्जेः "सनीवन्तर्ध—"इत्यत्रेड्भावपक्षे"स्कोः संयोगाद्योः—"इत्यनेन सलोपे षत्व-कुत्वयोश्च रूपम्; प्राणैर्दिदेविषन् क्रीडितुमिच्छन्, "दिवः कर्म च" इति चकारात् करणसंज्ञा, "सनीवन्त—" इतीट्पक्षे रूपम्; अथवा गुणेन घुष्टौ निघृष्टौ अत एव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणाद्यस्य, "घुषिरविशब्दने" इति निष्ठायामनिट्। मुमूर्षया मर्तुमिच्छया, मृङः सनि "उदोष्ठ्यपूर्वस्य" इत्युत्वम्, "अः प्रत्ययात्"॥५७॥ ज० म०

शत्रून् भीषयमाणं तं रामं विस्मापयेत कः ? ।
मास्म भैषीस्त्वयाऽद्यैव कृतार्थो दृक्ष्यते पतिः ॥५८॥

देहमिति।—एष मृगो मुमूर्षया मर्त्तुमिच्छया रामम् आयात् आगच्छत् 'या प्रापणे' घो ; मृङः सनि "घोऽज्झनि-क्रमाम्"इति दीर्घे "ऋदिरणी—"इति णर् ; रामस्य शस्त्रमग्नि-रिव तव स्वदेहं भ्रष्टुमिच्छुः, भ्रस्जेः सनि "भ्रस्जश्रिस्वृयुर्णुभर —"इति इमोऽभावपक्षे"स्थादेः सो लोपः—" "श्च्छ्राज—"इति षङ्,"षढोः कःसे"; प्राणैर्दिदेविषन् क्रीड़ितुमिच्छन्,इवन्तत्वात् पूर्वेण पक्षे इम् ; ज्याघुष्टो धनुर्गुणनिष्पिष्टः कठिनाङ्गुष्ठो यस्य तं रामं, 'घुष शब्दे' "क्षुब्धवाढ़—"इत्यादिना निपातः, निपातात् निष्पेषणार्थोऽपि गम्यते, गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तम् ; निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्टः शब्दितः सुप्र-सिद्धः कठिनाङ्गुष्ठो यस्येति ॥ ५७ ॥ भ० म०

शत्रूनिति।—तं रामं शत्रून् भीषयमाणं भीतान् कुर्वाणं "भियो हेतुभये षुक्" "भी-स्मोर्हेतुभये"इति तङ् ; विस्मापयेत कः ? क्षुभितचित्तं कुर्य्यात् ? नैवेत्यर्थः, "नित्यं स्मयतेः" इति णत्वम्, "अर्त्तिह्री—"इत्यादिना पुक्, निमन्त्रणे नियोगे वा लिङ्,पूर्ववदात्मनेपदम् ; तस्मान्मास्म भैषीः मा भूर्भीता,"स्मोत्तरे लङ् च"इति चकारात् लुङ्,सिचि वृद्धिः ; त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते, दृशेः कर्मणि लृट् ॥ ५८ ॥ ज० म०

शत्रूनिति।—शत्रून् भीषयमाणं भीतान् कुर्वाणं रामं को विस्मापयेत ? क्षुभितहृदयं कुर्य्यात् ? न कोऽपीत्यर्थः, "स्मि-श्योर्णाबुर्थे मश्च"इति स्मिधातोरिकार आ मश्च,"भीर्भीष् वा"इति भियः पक्षे भीषादेशः ; तस्मात् त्वं मा भैषीः भयं न कुरु, "माश्मेन धी-च्यौ"इति टी,"व्रजवद—" इति व्रिः,माद्योगे श्मा-

यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च।
इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥५९॥
मृषोद्यं प्रवदन्तीं तां सत्यवद्यो रघूत्तमः।
निरगात् शत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥६०॥

---

गमाभावः; त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्रक्ष्यते, दृशेः कर्मणि लृटि "वर्द्धोऽकिज्झसे—" इति रेफः॥ ५८ ॥ भ० म०

याया इति।—तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः, "कामप्रवेदनेऽकच्चिति" इत्यकच्चित्युपपदे लिङ्; न च गन्तुमुत्सहसे, "शकधृष—" इति तुमुन्; तस्मान्नूनं मां कामयितुमिच्छुः एवणशीलः, "समानकर्त्तृकेषु तुमुन्" "विन्दुरिच्छुः" इति निपातनात् साधुः; इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५९ ॥ ज० म०

याया इति।—त्वं रामान्वेषणाय याया इति मे मम कामोऽभिलाषः, "कामोक्तावकच्चिति" इति लिङ्; न तु गन्तुम् उत्सहसे, तस्मात् त्वं मां कामयितुम् इच्छुः, इच्छतीति इच्छुः "विन्दिच्छू" इति निपातः, "कमञ्ज्ञतोगुपूधूप—" इति कर्मणिङ्; इत्यसौ लक्ष्मणस्तया सीतया जगदे, कर्मणि ठौ॥ ५९ ॥ भ० म०

मृषोद्यमिति।—मां कामयितुमिच्छुरित्येतत् मृषोद्यं मृषावादं, "राजसूय—" इत्यादिना भावे क्यप्, यजादित्वात् सम्प्रसारणम्; प्रवदन्तीं तां सीतां रघूत्तमो लक्ष्मणः शपन् शत्रुहस्तं त्वं यास्यसीति शापं प्रयच्छन्, भौवादिकोऽत्र शपिर्न देवादिकः; निरगात् निर्गतः तस्मादुटजादित्यर्थात्। कथं मृषोद्यम्? इत्याह—वशी वशनं वशः इन्द्रियसंयमनं, 'वशिरण्योरुपसङ्ख्यानम्' इत्यप्, स यस्यास्ति स वशी जितेन्द्रियः, अत एव सत्यवद्यः

गते तस्मिन् जलशुचिः शुद्दन् रावणः शिखी ।
अञ्जपूकोऽक्षमालावान् धारयो मृद्लावुनः ॥६१॥

अवितथवादी, अवृद्दस्तं याच्ञतीति सत्यं वदतीति "अत्यस्यटो बहुलम्" इति कर्त्तरि यत्, "वदः सुपि क्यप् च" इति चकारात् यत्, भावे वा यतं विधायाच् अर्श-आदित्वात् ॥ ६० ॥ ज० म०

मृषोद्यमिति ।—त्वं अवृद्दस्तं याच्ञतीति तां सीतां आपन् आपं प्रयच्छन् रघूत्तमो लक्ष्मणो निरगात् निर्गतः, 'इण् गतौ' "गा त्वां" "भूस्था—" इति सेर्लुक्; इच्छुः कामयितुं मामिति मृषोद्यं मिथ्यावादं प्रवदन्तीं, मृषोपपद-वदेर्नित्यं क्यप, "लेर्वदः क्यप्यौ" इत्यनन्तरं "मृषोद्यं नित्यम्" इत्युक्तं, "ग्रह-स्पाद्योः—" इति जिः; सत्यं वदतीति "अहोः कभावे" इत्युक्तेः कर्त्तरि यः सत्यवद्यः, "लेर्वदः क्यप्यौ" इति भावे ये सत्यं वद्यं विद्यते अस्येति अर्श-आदित्वादः वा, सत्यं वद्यम् अस्येति बहुव्रीहिर्वा, यद्वा—वदनं वत्, 'वद स्थैर्ये' क्विप्, "विकारसङ्घ—" इत्यादिना तत्र साधावर्थे यः,सत्यस्य करणे साधुरित्यर्थः, वशी जितेन्द्रियः, वश इन्द्रियसंयमः सोऽस्यास्तीति "नैकाजात्—" इति इन्, अत एव सत्यवद्यः ॥६०॥ भ० म०

गते इति ।—तस्मिन् लक्ष्मणे गते सति रावणः सीतामूचे इति वक्ष्यमाणेन सम्बन्धः । कीदृशः ? जलशुचिः स्नातः इत्यर्थः, शुद्दन् निर्मलदशनः, शुद्धा दन्ता यस्य "अग्रान्त—" इत्यादिना दन्तस्य दटादेशः; शिखा अस्यास्तीति शिखी परिव्राजकः, व्रीह्यादित्वादिनिः; अञ्जपूकः पापाशयत्वात् गर्हितं जपतीति "लुपसद—" इति यङ्, "जपजभ—" इत्यभ्यासस्य नुक्, "यज-जपदशां यङः" इत्यूकः; अक्षमालावान् अक्षसूत्रयुक्तः, संसर्गे मतुप्; धारयतीति धारयः, "अनुपसर्गात्—" इति अः; कथं ?

कमण्डलुकपालेन शिरसा च मृजावता ।
संवस्त्र्य लाक्षिके वस्त्रे मात्राः सम्भाण्ड्य दण्डवान् ॥६२

मृदलाबुनः "नञि लम्बेर्नलोपश्च" इत्यौणादिके ऊकारे प्रत्यये अलाबूः,तस्य विकारः फलमिति "ओरञ्" तस्य फले लुक् नपुंसकह्रस्वत्वम् ; मृत्पूर्णमलाबु इति मध्यपदलोपो वा:, कृद्योगे कर्मणि षष्ठी. "इकोऽचि विभक्तौ" इति नुम् ॥ ६१ ॥ ज० म०

गते इति ।—तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः। कीदृशः ? जलशुचिः जलेन शुचिः स्नातत्वात्, शुद्धा निर्मला दन्ता यस्येति शुद्धदन् निपातनात् ; शिखी शिखायुक्तः,"नैकाजात्—"इति इन् ; पापाशयत्वात् गर्हितं जपतीति जञ्जपूकः "गत्यर्थात् गृलुप—" इत्यादिना यङ्, "जमजपजभ—" इति खेर्नुम्, "जागृयङन्तयजजप—" इति ऊकः यङो लुक् ; अक्षमालावान् अक्षसूत्रयुक्तः, मृदलाबुनो धारयः, धारयतीति "साहिसातिवेति—" इति शः, ढे णौ; मृच्च अलाबु च इति समाहारद्वन्द्वे "चर्गैक्यवं क्लीवम् ;" मृत्पूर्णमलाबु वा । "भवेदलाबुरालाबुरालाबु स्यादलाबु च"इति शब्दभेदः । अलाबुस्तुम्बीफलं, मृत्तीर्थमृत्तिका ॥६१॥ भ० म०

कमेति ।—कमण्डलुना कपालेन च "जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भावः ; मृजावता निर्मलेन शिरसा च उपलक्षितः, इत्थम्भूते तृतीया ; संवस्त्र्य परिधाय, 'वस्त्रात् समाच्छादने' इति "मुण्डमिश्र—" इत्यादिना णिच् ; लाक्षिके वस्त्रे लाक्षया रक्ते, "लाक्षारोचनात—"इत्यादिना ठक् ; मात्राः कमण्डल्वादिकान् सम्भाण्ड्य समाचित्य,राशीकृत्येत्यर्थः, 'भाण्डात् समाचयने' इति "पुच्छभाण्ड—" इत्यादिना णिङ् ; दण्डवान् गृहीतत्रिदण्डः, संसर्गे मतुप् ॥ ६२ ॥ ज० म०

अधीयन्नात्मविद्विद्यां धारयन् मस्करिव्रतम् ।
वदन् बह्वङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन् ॥६३॥

कमेति ।—कमण्डलुश्च कपाली भिक्षापात्रञ्चेति समाहार-द्वन्द्वः तेन उपलक्षितः ; केचित्तु कं जलं पालयतीति कपालः, कमण्डलुश्चासौ कपालश्चेति कर्मधारयः तेन उपलक्षितः, परिव्राजको हि दक्षिणकरे सजलं पात्रं धारयतीति भाव इत्याहुः ; मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः, 'मृज लूष शुद्धौ' इत्यस्मात् "भीषिचिन्ति—"इत्यादिना ङः स्त्रीलिङ्गत्वञ्च, विशेषणे तृतीया ; लाक्षिके वस्त्रे संवस्त्य परिधाय, "ञिः कण्वादेः" इति वस्त्रात् समाच्छादने परिधाने च ञिः, सम्पूर्वस्यैव तदभिधान-शक्तिः, प्रकृत्यर्थपरित्यागस्तु धातोः स्वभावात्, यदुक्तं "विशेष-कर्मसम्बन्धात् प्रकृतेस्तु गतार्थता" इति, लाक्षया रक्ते लाक्षिके, "विकारसङ्घ—" इत्यादिना तेन रक्तेऽर्थे णिकः ; मात्रां परि-च्छदं कमण्डलुप्रभृतिं सम्भाण्ड्य समाचित्य, युगपद्वहनार्थं राशी-कृत्य,भाण्डानि सञ्चिनोतीत्यर्थे पूर्ववत् ञिः,प्रकृत्यर्थत्यागः सम्पूर्व-तानियमश्च ; "मात्रा कर्णविभूषणे । अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदे"इति विश्वः ; दण्डवान् गृहीतदण्डः ॥६२॥ भ० म०

अधीयन्निति ।—"मा कुरुत कर्माणि शान्तिवः श्रेयसी"इत्येवं घोषयन्ति ये ते मस्करिणः परिव्राजकाः, तेषां व्रतमक्षच्छमसौ धारयन्,"मस्कर-मस्करिणौ—"इति परिव्राजके सुट् ; आत्मविदां योगिनां विद्यामुपनिषदमधीयन् जपन्, "इङ्धार्य्योः—" इति इङो धारेश्च अकृच्छ्रवति कर्त्तरि शतृप्रत्ययः, अन्तरा बहु प्रभूतं वदन्, अङ्गुलिस्फोटं पुनः पुनः स्फोटिकान् दत्त्वा भ्रूक्षेपञ्च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन्, उभयत्रापि"स्वाङ्गेऽध्रुवे" इति णमुल् ॥ ६२ ॥ ज० म०

सन्दिदर्शयिषुः साम निजुक्षुः चपाटताम् ।
चङ्क्रमावान् समागत्य सीतामूचे सुखाभव ॥६४॥
[कलापकम्] ।

अधीयन्निति ।—आत्मविदां योगिनां विद्यामुपनिषदम् अधीयन् पठन्, 'धारीङोरकृच्छ्रे शतृ:' इति परसूत्रं, स्वमते क्वचिदभिधानात् आत्मने-परस्मैपदिनोः परस्मैपदात्मनेपदिता ; मस्करिणः परिव्राजकस्य व्रतं धारयन्, अङ्गुलिस्फोटम् अङ्गुलिं स्फोटयित्वा बहु वदन् मितभाषितया बहु हस्तसंज्ञयैव वदतीति भावः, भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभाव इत्याशयः, उभयत्र 'पीड्यमानात् स्वाङ्गात् णमुल्' इति परः ; स्वमते बहु अङ्गुलेः स्फोटो यत्र वदनक्रियायां, भ्रुवोः क्षेपो यत्र विलोकनक्रियायां, स्फोट-क्षेपौ घञन्तौ ॥ ६१ ॥ भ० म०

सन्दीति ।—इह भयं मा भूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः, वदन् बह्वङ्गुलिस्फोटमिति योज्यं, दृशेर्ण्यन्त-सनन्तत्वे रूपम् ; चपाटतां राक्षसत्वं निजुक्षुर्निह्नोतुमिच्छुः, धारयन्मस्करिव्रतमिति योज्यम् ; ह्नोतेः "अज्झनगमां सनि" इति दीर्घः ; कुटिलं क्रमणं चङ्क्रमा, क्रमेः "नित्यं कौटिल्ये गतौ" इति यङ्, "नुगतः—" इत्यभ्यासस्य नुक्, "अः प्रत्ययात्" इत्यकारः, "अतो लोपः" "यस्य हलः" टाप्, सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः, समागत्य ढौकित्वा सीतामूचे। किम्? इत्याह, सुखाभवेति अनुकूला भवेत्यर्थः, यदहं प्रार्थये तत्र प्रतिकूला न भवेति भावः, "सुखप्रियादानुलोम्ये" इति कृभ्वस्तियोगे डाच् ॥६४॥ ज० म०

सन्दीति ।—साम सान्त्वं सन्दर्शयितुमिच्छुः, दृशेर्ण्यन्तात् सन् ; चपाटतां राक्षसभावं निह्नोतुमिच्छुः, 'ह्नु ह्नल चौर्य्ये' सनि

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीम्।
कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता॥६५

"घोऽज्ञनिङ्गमाम्" इति घः; चङ्क्रमावान् कुटिलगतियुक्तः, धमेध्यादिस्थलपरिजिहीर्षया चित्तक्रत्यं वा कौटिल्यम् इत्यर्थात् "गत्यर्थाद्गलुप—" इति यङ्, "अमजप—" इति खेनुंक् यङो लुक्, "मंस्थादः" ततो वतुः, ईदृशः सन् समागत्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे, "सपत्र-निष्पत्र—" इत्यादिना सुखादानुकूल्ये डाच्। यद्यप्यत्र "तीयशम्ववीज—" इत्यादिसूत्रात् कञोत्यनुवर्त्तते, तथाऽपि मण्डूकप्लुताधिकारात् "च्विः क्रभ्वस्त्यभूततद्भावे—" इति सूत्रात् क्रभ्वस्तित्यस्यानुवर्त्तनं बोध्यं पयोगदर्शनात, वृत्तौ कञोति लिपिकरप्रमादात् बाहुल्यार्थं वा; किंवा सुखं विद्यते यस्या इत्यर्श-आदित्वात् अः, तत आप्॥६४॥ भ० म०

सायन्तनीमिति।—का त्वम्? इति वक्ष्यमाणेन सम्बन्धः; सायं दिनावसानं तत्र भवां कान्तिं, यदा "षोऽन्तकर्मणि' इत्येतस्मात् घञ्प्रत्ययान्तः तदा "सायञ्चिरं—" इति ट्यु ट्युलौ तुट् च मकारान्त-त्वञ्च निपात्यते, यदा सायंशब्दो मकारान्तः तदाऽप्यव्ययत्वादेव अव्ययागमौ स्याताम्; कस्य? इत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धिक्षयाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति "सत्सूद्विष—" इति क्विप्, "उपसर्गादसमासे—" इति णत्वम् "एरनेकाचः" इति यणादेशः; पङ्कजानाञ्च कान्तिं कीदृशीम्? दिवातनीं दिवाभवां, कान्त्या त्वदीयया सदातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्तन्याश्च, सदा-भवत्वात्, जिह्रेतेः "अर्त्ति—" इत्यादिना णौ पुक्; शुचिस्मिता शुभ्रहासा॥६५॥ ज० म०

का त्वमेकाकिनी भीरु ! निरन्वयजने वने ? ।
क्षुध्यन्तोऽप्यघसन् व्यालास्त्वामपालां कथं न वा ? ६६
[युग्मकम्] ।

सायन्तनीमिति ।—"का त्वमेकाकिनी ? इति द्वितीयश्लोकेन सम्बन्धः ; तिथिप्रणीश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्कजानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्ती लज्जयन्ती, कीदृश्या ? सदातन्या सर्वकालास्थतया, चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठतीति लज्जाहेतुः, पञ्चदशतिथीः प्रणयति प्रवर्त्तयतीति तिथिप्रणीश्चन्द्रः, तस्य ह्रासवृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् ; "वामुस्—"इति क्विप्,"प्राग्वक्षो णः—" इति णत्वं, "कञ्चाद्यनेकाचः—" इति यत्वं, "तिथि-प्रणीर्दर्शविपक्षशामणिस्तिनेत्रचूडामणिरत्निनेत्रभूः" इत्यजयः ।
"मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृता" इति परिभाषिता कान्तिः सीतायाः, चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं, "त्यवाद्यचिरदोक्षणा—":इत्यादिना सायं--दिवा--सदाशब्देभ्य-ष्टनः भवार्थे ; शुचिस्मिता शुद्धहासा, "स्मितन्त्वहृष्टदशने हासे" इति वैजयन्ती ॥६५॥ भ० म०

का त्वमिति ।—का त्वम् ? देवी मानुषी राक्षसी वा ? इति एकाकिनी असहाया "एकादाकिनिच्चासहाये" इति आकिनिच्; भीरु इत्यामन्त्रणं भयप्रकृतित्वात् स्त्रीणाम् ; निरन्वया निरनुगमा जना यस्मिन् वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः, क्षुध्यन्तोऽपि बुभुक्षमाणा अपि, दिवादित्वात् श्यन् ; व्याला हिंस्रा व्याघ्रादयः कथं वा त्वां नाघसन् ? न भक्षितवन्त ? अदेः "लुङ्सनोर्घस्लृ" लृदित्वाच्च्लेरङ् ;"क्षुध्यन्तो नाघसन्"(?) इति पाठान्तरम् ; तत्र—कथं न वा अपरिचितामेवाघसन् ?(?) इति योज्यम् ; अपालां सतीम्

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनम् ।
कुर्वाणा भीममप्येतद्वदाभ्यैः केन हेतुना ? ॥६७॥

अविद्यमानः पालो यस्या इति 'पा ल रक्षणे' इति चौरादिकः पालयतीति पालः पचाद्यच्, यदा प्रयोजकविवक्षा तदा 'पातेर्लुगागमो णौ वक्तव्यः' इति लुक्, ततः पचाद्यच् ॥६६॥ ज० म०

का त्वमिति।—हे भीरु! वने एकाकिनी का त्वम् ? देवी मानुषी अन्या वा ? वने किमुते ? निरन्वयजने निरन्वया निःसम्बन्धा जना यत्र, भीरु इति सम्बोधनं भयप्रकृतित्वात् स्त्रीणां जातिभेदस्य प्रत्यक्षत्वाद्वा, एकादाकिबस्त्रायेऽभिधानात्; क्षुध्यन्तो बुभुक्षमाणा व्याला व्याघ्रादयो हिंस्राः अपालां पालकरहितां त्वां कथं नाघसन् ? न भक्षितवन्तः ? "घस्लृदः सन्-व्यल्घजि" इति अदस्त्रां घस्लृ, लृदनुबन्धात् "श्यामलिद्युत्—" इति ङः, 'क्षुध बुभुक्षायां' दिवादि; 'पाल रक्षणे' चौरादिकः पचादित्वादन्। "व्यालो दुष्टगजे सर्पे श्वापदे मान्यवत् खले" इति मेदिनी ॥ ६६ ॥ भ० म०

हृदयङ्गममिति।—केन हेतुना इदं वनमभ्यैः ? अभिगताऽसि ? वद कथय, अभिपूर्वादिणो लङ् मध्यमपुरुषैकवचनम् "आड्जादीनाम्" "आटश्च" इति वृद्धिः; हृदय गच्छति या मूर्त्तिः शरीरम् अत्यन्तसौन्दर्य्यात्, "गमश्च" इति खच्; सा एवंविधा मूर्त्तिर्यस्याः सा त्वं भीममप्येतद्वनं सुभगम्भावुकं सर्वस्यैवाप्रियं प्रियं कुर्वाणा, असुभगं भूत्वा सुभगं भवतीति "कर्त्तरि भुवः—" इति खुकञ् ॥ ६७ ॥ ज० म०

हृदयङ्गममिति।—केन हेतुना त्वम् एतद्वनम् अभ्यैः ? अभिगता ? इति वद, अभिपूर्वादिणो ध्याः सिप्, "लुगङ्गोऽपः" "वीटीथीषु—" इति अम्, "आदिरो चोः—" इति णः, "भूयोऽम्—"

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे ? ।
पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः ? ॥६८॥

"तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्—" इति तृतीया ; हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात्, हृदयं गच्छतीति "गमश्च—" इत्यादिना खः, गम्लोत्वस्य व्यभिचारो बाहुल्यात् ; भीममध्ये तद्दर्शनं सुभगम्मन्यतुकं कुर्वाणा, प्रागप्रियं प्रियं भवतीति "भुवो चे खिष्णु-खुकञौ" इति खुकञ् ॥ ६७ ॥ भ० म०

सुकृतमिति ।—सुकृतं पुण्यकारिणं,शोभनं कृतवानिति "सुकर्म-पाप—" इत्यादिना क्विप् ; कं रहसि विजने त्वमुपतिष्ठसे ? उपश्लिष्यसि ? सङ्गतकरणे तङ् ; प्रियकारी अनुकूलवर्त्तिनी सती, प्रियमनुकूलं करोतीति "क्षेमप्रियमद्रेऽण्च" इति अण्; "टिड्ढाणञ्—" इत्यादिना ङीप् ; पुण्यकृत् कृतपुण्यः, तत्र पूर्ववत् क्विप् ; चाटुकारः प्रियवाक्यकरः, "न शब्दश्लोक—" इत्यादिना टे प्रतिषिद्धेऽणेव भवति ; ईदृशस्ते किङ्करः दासः, "दिवा-विभा —" इति टः, 'किंयत्तद्बहुषु कृञोऽज्विधानम्—" इति तत्स्त्री-विषये द्रष्टव्यम् ; सुरतेषु शोभनरतेषु, "नपुंसके भावे क्तः" "अनुदात्तो—" इत्यादिनाऽनुनासिकलोपः ; अनेनोभयरुचि-राख्याता ॥ ६८ ॥ भ० म०

सुकृतमिति ।—त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृतं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे ? सङ्गच्छसे ? "मैत्रध्वसङ्गाथे"इति सङ्गमं, शोभनं करोतीति "सुकर्म—" इति क्विप्, प्रियं करोतीति "क्षेमप्रियमद्रात् कृञः" इति खाभाव-पक्षे "टात् घण्" ; कः पुण्यकृत्—ते तव सुरतेषु शोभनरतेषु किङ्करो दासः सन् चाटुकारः ? प्रियवाक्यकारी ? पुण्यं करोतीति क्विप् । रमेर्भावे क्तः "वनतनाद्यनिमाम्—" इति मलोपः । चाटु

परिपर्य्युदधे रूपमायुलोकाच्च दुर्लभम् ।
भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितम् ॥६९॥

करोतीति "क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते" इति न्यायात् "स्वकुष्टः" इति टविषयेऽपि "ह्वात् षण्", किमित्यव्ययं तस्मात् कृत्स्नः ॥६८॥ भ० म०

परीति ।—एतद्रूपं भावत्कं भवत्या इदमिति "भवतष्ठक्छसौ" इति ठक्छसौ, 'ठक्छसोश्चोपसङ्ख्यानम्' इति पुंवद्भावः, "इसुसुक्तान्तात् कः" दुर्लभं परिपर्य्युदधेः "अपपरी वर्जने" इति कर्मप्रवचनीयसंज्ञायां द्वितीयायां प्राप्तायां "पञ्चम्यपाङ्परिभिः" इति पञ्चमी, "अपपरिबहिरञ्चवः पञ्चम्या" इति विभाषासमासश्च, असमासपक्षे "परेर्वर्जने" इति द्विर्वचनम् ; उदधिं वर्जयित्वा चतुरुदधिमेखलायां भुवि दुर्लभमायुलोकाच्च स्वर्गलोकान्तञ्च यावत् दुर्लभम, अत्रापि पूर्ववत् पञ्चमी ; तादृशं दृष्टवत्स्वस्मासु अधि सुजीवितमस्मद्विषये आधिक्येन सुजीवितम् । "षष्ठी" वा सुजीवितमिति षष्ठीशब्दार्थे अधिशब्दो वर्त्तते ॥६९॥ ज० म०

परीति ।—एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितम् अधिकं शोभनं जीवनं, विषये सप्तमी ; यद्वा "अधिकेशार्थोवाधिभ्याम्" इति स्वाम्यर्थेनाधिना च योगे सप्तमी ; तेनास्मत्स्वामिकं सुजीवितमित्यर्थः, त्वामपश्यतस्तु जनस्य तन्नास्तीति भावः, भवत्या इदमित्यर्थे "विकारसङ्घ—" इति कण्, "पुंवत्स्युक्तपुंस्कः स्त्रियाम्—" इत्यादौ त-त्व-शसन्ततरादावितिलस्य तावतसंज्ञके त्वपर्य्यन्तप्रत्यये शसन्ततरादौ चेति देवोदासचक्रवर्त्ति-व्याख्यानात् पुंवत्, ये तु "त्वतौ भावे" इत्यत्रैव कृतयोस्त-त्वयोरेवमित्याहुस्तन्मतेऽभिधानात् योगविभागात् ; किंवा "पुंवत् से." इति पुंवत्, भवच्छब्दस्य स्त्रिसंज्ञायां पठितत्वात्,

**प्रपीतमधुका* भृङ्गैः सुदिवेवारविन्दिनी ।**
**सत्परिमललक्ष्मीका नापुंस्काऽसीति मे मतिः ॥७०॥**

"पुंवत् से:" इत्यत्र "कोर्नुक् त्ये च" इत्यस्मात् "त्ये च" इत्यनुवर्त्तते, वृत्तौ "त्ये च" इति यन्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं, तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात् । 'पुंवत् सर्वनाम्नो वृत्तिमात्रे तसादौ च' इति परसूत्रम् । कीदृशं रूपम् ? उदधेः परि परि उदधिं वर्जयित्वा दुर्लभं दुष्प्रापम्, उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः, समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः ; आद्युलोकाच्च स्वर्गलोकपर्य्यन्तञ्च दुर्लभम्, उभयत्र "अन्याराद्यार्थारात—" इत्यादिना पञ्चमी ; पर्य्याङौ त्यागसीमार्थौ, "आङ् व्याप्तिसीम्नोस्त्यागेऽन्यौ" इत्युक्तेः वर्जनार्थ-परेर्विभाषया द्वित्वमभिधानात् ॥ ६९ ॥ भ० म०

प्रपीतेति ।—परि सर्वतो मार्जनमिति परिमलः, 'कलस्तृपश्च' इत्यधिकृत्य 'मृजेष्टिलोपश्च' इति कलप्रत्यय औणादिकः ; इह सुरतोपभोगविमर्दः परिमलोऽभिप्रेतः, तस्य लक्ष्मीः तत्कृतत्वात्, सती विद्यमाना परिमलशोभा यस्याः "उरःप्रभृतिभ्यः कप्"; सा त्वमपुंस्का अविद्यमानभर्त्तृका नासीति मे मतिः, पूर्ववत् कप् । किमिव ? सुदिवेवारविन्दिनी पद्मिनी, शोभनं दिवा नीहाराद्य-भावाद्दिवा दिवसं यस्याः "सुप्रात—" इत्यादिना अच् ; प्रपीत-मधुका भृङ्गैः प्रपीतं मधु यस्याः, "शेषाद्विभाषा" इति कप्, यथेयं सत्परिमललक्ष्मीका तथा त्वमपीति ॥ ७० ॥ ज० म०

प्रपीतेति ।—त्वं न अपुंस्काऽसि किन्तु विद्यमानभर्त्तृका-ऽसीति मे मम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी । "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः । "सुरतोपभोग-

* "आपीतमधुका" इति पाठान्तरम् ।

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः ।
साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः॥७१॥

विमर्द एव परिमलः" इति जयमङ्गला । 'पुं-लक्ष्मीभ्यामिकावचनाभ्यां को बहुव्रीहौ' इति परः, स्वमते लक्ष्मीशब्दात् "शृतः कः" इति कः, अपुंस्केति "पुंवत्स्त्रयाम्पुंस्कः—" इति ज्ञापकात् "शृतः कः" इत्यस्य योगविभागेन क्वचिदन्यत्रापि क इति बोध्यं,स्वार्थे को वा ; यथा भृङ्गैः प्रपीतं मधु यस्यास्ताहशी सुदिवा अरविन्दिनी पद्मिनी, तथा त्वमपि सत्परिमललक्ष्मीका, शोभनं नीहारादिरहितं दिवा दिनं यस्याः, सुपूर्वात् दिवाशब्दात् 'बहुव्रीहौ मत्' इति परः, स्वमते दिवाशब्दात् स्वार्थे षाः, तस्यानित्यत्वविवक्षया न ङीप् हृहित्र । यद्वा—शोभने दिवसे इति सप्तम्यन्तं रूपम् ; दिवाशब्दोऽयमव्ययः ॥ ७० ॥ भ० म०

मिथ्यैवेति ।—श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य, "विभाषा कृञि" इत्यनुवर्त्तमाने "साक्षात्प्रभृतीनि च" इति गतिसंज्ञा, गतिसमासे ल्यबादेशः ; अहमभिमन्ये, किम ? मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः,किन्तु त्वमेवेति । "आत्ममाने खश् च" "दिवादिभ्यः श्यन्" "इच एकाचोऽम्प्रत्ययवच्च" इत्यम्भावः, तस्यामः प्रत्ययत्वाल्लोपाभावः "न विभक्तौ तुस्माः" इति वचनात् "अचि—" इतीयङादेशः, क्विबन्ता धातुत्वं न जहतीति 'क्विब्वचि—' इत्यादिना श्रयतेरौणादिकः क्विप् ; हरिरात्मानं श्रीमन्तं मन्यमानो मृषा न श्रीमान् इत्यहमभिमन्ये ॥ ७१ ॥ ज० म०

मिथ्यैवेति ।—श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते, हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते, त्वमेव

नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः ।
खेलायन्ननिशं नापि सजूःकृत्य रतिं वसेत् ॥७२॥

श्रीस्तदीयशोभाहरणात्, त्वत्पतिरेव त्वद्योगात् श्रीमानिति भावः । "मन्थात् स्वार्थे" इति स्वत्र, शिस्वात् "दिवसुतद—" इति यन्, "शिलव्याजयणो—" इति एकाजिजन्तत्वात् श्रीशब्दस्य ह्रीबान्तत्वं "हस्तेगाणौ प्राध्वं—" इत्यादिना समासपचे "व्याद-नञः क्षो यप् से" 'साक्षादादेरभूततद्भावे कृञः क्षो यप् वा' इति परः ॥ ७१ ॥ भ० म०

स्मरभार्य्या रतिः साऽपि रूपेण निकृष्टेति दर्शयति, नोदिति ।—चेत यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थं नोदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत्, 'ईक्ष दर्शने' इति 'कठि शोके' इति भौवादिकात् क्रियाऽतिपत्तौ लृङ्, नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत्, अपितु परित्यजेत्, अत्र क्रियाऽतिपत्तिर्न विवक्षिता, किन्तु हेतु-हेतुमद्भावः ; नापि रतिं सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् । ऊर्य्यादिषु 'सजूः सहार्थः' इति वचनात् गतिसंज्ञा । खेलायन् अनिशं क्रीडन् सर्वदा, खेलाशब्दात् कण्ड्वादित्वात् यक् ॥ ७२ ॥ ज० म०

रतिरपि न ते तुल्येति दर्शयन्नाह, नोदिति ।—स्मरं कामश्चेत् यदि त्वाम् ऐक्षिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितो नाभविष्यत्, 'ईक्षङ् दर्शने' 'कठिङ् आध्याने' उभयत्र "ध्वर्थाशब्वे णौ"; नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत्, तां परित्यजेदेव यदि त्वां पश्येत् इति हेतुपदमत्र बोध्य, "भव्ये वा फलहेत्वोः" इत्यस्य योगविभागात् भूतेऽपि खो, भव्येऽपि न चतिः,

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का ? ।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ? ॥७३॥
दुःखायते जनः सर्वः स एवैकः सुखायते ।
यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥७४॥

विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे यक्, सजुः-शब्दोऽयमव्ययः सहायार्थे वर्त्तते, शाकादादित्वात् "हस्तेपाणौ प्राध्व—" इत्यादिना समासः ॥ ७२ ॥ भ० म०

वल्गूयन्तीमिति ।—त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्री इह का ? इह जगति का स्त्री न मन्तूयेत् ? न कुप्येत् ? सर्वदा कुप्यत्येव ईर्ष्यायुक्तत्वात् स्त्रीणाम्, असम्भावने लिङ्; (?) वल्गु-मन्तुशब्दाभ्यां कण्ड्वादित्वात् यक्; को वा को नाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात् ते तव कान्तिं विलोक्य नाभिमनायेत ? पूर्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेता न भवेत् ? पूर्ववल्लिङ्, अभिमनसो भृशादित्वात् क्यङ् सलोपश्च ; महादेवतुल्यो वा,आस्तामन्यः, सोऽपि तावदभिमनायते ।७३॥ ज० म०

वल्गूयन्तीमिति ।—इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति ? न ईर्ष्यति ? स्वपतिवैराग्यशङ्कया सर्वैव कुप्यतीत्यर्थः, वल्गु-मन्तुभ्यां कण्ड्वादित्वात् यक्, "र्षोऽजृ-व्यरे" ; को वा स्थाणुसमोऽपि महादेववत् जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा तव कान्तिं विलोक्य न अभिमनायेत ? प्रीतमना न भवेत् ? अपि तु सर्व एवाभिमनायेत, "भृशादिभ्यो र्थे वा—"इति पाक्षिको ङ्यः सलोपश्च, "र्षोऽजृव्यरे" "प्रोक्ता सम्भावने" इति स्त्री ॥ ॥ ७३ ॥ भ० म०

दुःखेति ।—स एवैको जनः सुखायते सुखं वेदयते यस्याः

कः पण्डितायमानस्त्वामादायामिषसन्निभाम्।
त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनम्? ॥७५॥

न्तिके समीपे न त्वं प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि, उत्सुकायमाना उत्कायमाना सती, यस्य पुनरन्तिके अनुत्सुकायमाना प्रतीपायसे स सर्वो जनः दुःखायते दुःखं वेदयते, सुख-दुःखशब्दाभ्यां "सुखादिभ्यः कर्तृवेदनायाम्" इति क्यङ्, उत्सुक-प्रतीपशब्दाभ्यां भृशादित्वात् ॥ ७४ ॥ ज० म०

दुःखेति।—यस्यान्तिके समीपे त्वम् उत्सुकायमाना उत्सुकीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि, स एवैको जनो जगति सुखायते सुखमनुभवति, अन्यः सर्वो जनो दुःखायते दुःखमनुभवति, सुख दुःखशब्दाभ्यां "शब्दसुखकष्टादेः—" इति वेदे ङ्यः; केचित् तु सुख-दुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखः सुखी भवति अदुःखी दुःखी भवति इत्यर्थे "डाच् लोहितादेः पक्ष"इति ङ्यमाहुः। उत्सुक-प्रतीपाभ्यां भृशादित्वात् च्व्यर्थे ङ्यः। केचित् तु प्रतीपशब्दात् "वानृङ्यक्तौ—"इत्यादिना आचारे ङ्यमाहुः ॥ ७४ ॥ भ० म०

क इति।—पण्डितायमानः अपण्डितः कथमपि पण्डितो भवन्, भृशादित्वात् क्यङ्; त्वामामिषसन्निभां सर्वजनप्रार्थनीयत्वात्, आदाय गृहीत्वा कः शून्यं वनमन्ववसत्? शून्ये वने अवसत्? इत्यर्थः, "उपान्वध्याङ् वसः"इति कर्मसंज्ञा; कीदृशः? त्रस्यन् बिभ्यत् वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः, "शब्दवैर—"इत्यादिना क्यङ् "भीत्रार्थानाम्—"इत्यपादानसंज्ञा॥ ७५ ॥ ज० म०

क इति।—कः पण्डितायमानः अपण्डितः पण्डितो भवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वाम् आदाय गृहीत्वा शून्यं वनम् अन्ववसत्? वसति स्म? "कर्मक्रिया—"इत्यादिना डे ढं,

ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा ।
उवाच दशमूर्द्धानं सादरा गद्गदं वचः ॥ ७६ ॥

पच्छितात् भृशादित्वात् क्यः ; वैरायमाणेभ्यः वैरं कुर्वाणेभ्यः त्वत्तन्, शत्रुभयाभावे एवं कर्त्तुमनुचितमिति भावः । वैरात् शब्दादित्वात् "शब्दसुखकष्टादेः—"इति क्तौ क्यः, "यतोऽपाय-भी—"इति अपादानसंज्ञा । "आमिषं पलले लोभ्ये सम्भोगो-त्करयोरपि । आमिषं सुन्दराकारे रूपादिविषयेऽपि च ॥" इति विश्वः ॥ ७५ ॥ भ० म०

ओजायेति ।—एवमुक्तवति रावणे जनकसुता दशमूर्द्धान-मुवाच, दश मूर्द्धानः शिरांसि यस्य, तस्यार्घ्यं प्रणीय दत्त्वा अतिथिरयमिति, सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ; ओजायमाना ओज इवाचरन्ती "कर्त्तुः क्यङ् सलोपश्च" 'ओजसो-ऽप्सरसो नित्यम्'इति वचनात्, किञ्चिल्लज्जापरित्यागात् मां माऽभिभूदित्यतेजस्विनी भवन्तीत्यर्थः, किमुवाच ? वचो वक्ष्य-माणं सादरा सती परिव्राजक इति गद्गदमनभिव्यक्तमसंस्कृत-त्वात् ॥ ७६ ॥ ज० म०

ओजायेति ।—जनकात्मजा सादरा सती तस्य कपटपरि-व्राजकस्य अर्घ्यं प्रणीय अतिथिबुद्ध्या दत्त्वा दशमूर्द्धानं दश मूर्द्धानो यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यग-नभिव्यक्तं वचो वक्ष्यमाणम् उवाच, ओजायमाना किञ्चिल्लज्जा-परित्यागात् ओजस्विनीवाचरन्ती ओजःशब्दात् धर्मिप्रधानात् "धातुङ्याशौ—" इति क्यः सलोपश्च, भृशादित्वात् च्व्यर्थे वा क्यः । तस्य इति सम्प्रदानस्य सम्बन्धविवक्षायां षष्ठी । प्रणीये-त्यस्य समीपे स्थापयित्वा इति वाऽर्थः । "मूल्ये पूजाविधावर्घः" इति कोषः, अर्घाय इदमित्यर्थे "विकारसङ्घ—" इति यः ॥ ७६ ॥ भ० म०

महाकुलीन *ऐक्ष्वाके वंशे दाशरथिर्मम।
पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनाम् ॥७७॥

यदुक्तं तेन "कं रहस्युपतिष्ठसे ?" इति, अस्य प्रतिवचनं, महेति।—मम भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति "महाकुलादञ्-खञौ" इति खञ्, किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकुलस्यापत्यम् ? इत्याह—ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः "दाण्डिनायन—"इत्यादिना टिलोपनिपातनम्; अन्ये तत्र सन्तीत्याह—दाशरथिः दशरथस्यापत्यं यः स मम भर्त्ता, महाकुलीनः कीदृशः ? पितुः प्रियङ्करः अनुकूलकारी, तपस्विनाञ्च क्षेमकारः "क्षेमप्रियमद्रेऽण् च" इति चकारात् खच् ॥ ७७ ॥ ज० म०

"कं रहस्युपतिष्ठसे ?" इति रावणप्रश्ने उत्तरमिदं, महेति।—मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिम्ना च ज्येष्ठ एव गम्यते, दशरथस्यापत्यं "बाह्वादयत—"इति अदन्तत्वात् णिः, णित्त्वे वृद्धिः; ऐक्ष्वाके वंशे माहाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशे इत्यर्थात् गम्यते, शिवादित्वात् अण्, "कोर्णपोऽकद्रुणाण्डूरेये" इत्यत्र एयस्य अस्येति समासात् उकारलोपः, ये तु केवलस्यैयप्रत्ययइति व्याचक्षते तन्मते योगविभागात् महाकुले विद्यमानः "ढघे कात—"इति णीनः; "महाकुलीनः"इति पाठे—अनिष्टविवक्षया न वृद्धिः। महाकुलस्यापत्यमिति केचित्, पितुः प्रियङ्करः प्रियं करोतीति "क्षेमप्रियमद्रात् कृञो" इति खः, तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता, "ढात् पक्ष्" ॥ ७७ ॥ भ० म०

* "माहाकुलीन" इति भरतसम्मत-पाठान्तरम्।

निहन्ता वैरकाराणां सतां बहुकरः सदा।
पारश्वधिकरामस्य शत्रोरन्तकरो रणे॥ ७८॥
अध्वरेष्विष्टिनां पाता पूर्त्ती कर्म्मसु सर्व्वदा।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम्॥७९॥

निहन्तेति।—वैरकाराणां शत्रूणां, वैरपूर्वात् कृञो"न शब्द-श्लोक—"इत्यादिना टे प्रतिषिद्धे अणेव भवति; निहन्तेति तृजन्तस्य प्रयोगः, तत्र कर्मणि षष्ठी; सतां धर्मे स्थितानां बहुकरः बहुकार्य्यं करोतीति "दिवाविभा—"इति टः, स्त्रीविवक्षायान्तु 'किं-यत्तद्बहुषु—'इति करोतेरच्, 'आङ्परयोः खनिशृभ्यां डिच्च' इत्यौणादिकः कुः परशुशब्दः, तत्पर्य्याय एवाव्युत्पन्नः परश्वधशब्दः, सः प्रहरणं यस्य "परश्वधात् ठञ्च"; तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरो विनाशयिता, अन्तं करोतीति पूर्ववत् टः रणे सङ्ग्रामे तत्र भवः॥ ७८॥ ज॰ म॰

निहन्तेति।—तथा वैरकाराणां निहन्ता"ढात् षण्",कर्मणि षष्ठी; सतां साधूनां सदा सर्वदा बहूनि कार्य्याणि करोतीति "हकुष्टः" रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता। परश्वधेन परशुना प्रहरतीति ष्णिकः, परान् श्यति खण्डयतीति परशुः परश्वधेति निपातनात्॥७८॥ भ॰ म॰

अध्वरेष्विति।—इष्टमेभिरिति इष्टिनो यज्वानः"इष्टादिभ्यश्च" इतीनिः। किमिष्टवतः? अध्वरान् कर्माणि तत्र 'क्तस्येन्विषयस्य—'इति कर्मणि सप्तमी, अध्वरेष्विष्टिनामिति कर्मणि षष्ठी तद्योगे; पाता रक्षिता, पूर्त्ती कर्मसु सर्वदा, पृणोतेर्निष्ठायाम् "उदोष्ठ्यपूर्वस्य" इत्युत्त्वं, "न ध्याख्या—" इत्यादिना निष्ठानत्व-

पतत्त्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने ।
यस्य बाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

[ कलापकम् ] ।

---

प्रतिषेधः, पूर्त्तमनेनेति पूर्ववदिनिः । किं पूर्त्तमिति ? सर्वदा खात-श्राद्धादिकर्मणि, पूर्ववत् सप्तमी ; स राजत्वं राज्यं हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ्, पुषादित्वादङि रूपम् ; पितुर्नियोगात् नायोग्यत्वात्, स मे भर्त्तेति योज्यम् ॥७९॥ ज० म०

अध्वरेष्विति ।—तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता, 'पाल रक्षणे', इष्टं यजनं भावे क्तः, "ढचे क्तिन—" इति कर्मणि षष्ठी ; सर्वदा कर्मसु पूर्त्ती पूर्णं पूरणं भावे क्तः "सुत्वाद्योदि—" इत्यादौ पूर्वजनास्य क्तस्य नः, "वृदुश्रिभर्णाः—" इति इमनिषेधः, कर्मोपादानेऽपि भावे क्तः ; अध्वरान् इष्टमेभिः कर्माणि पूर्त्त-मनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययो भवेदिति परः, स्वमते "क्तेनाढ़े" इति ज्ञापकात् कर्त्तरि इन्, तद्योगे कर्मणि सप्तमी ; किंवा इष्ट-पूर्त्ताभ्यां भावक्तान्ताभ्यां "नेकाजात्—"इति अस्त्यर्थे इन्, अध्वर-कर्मभ्यां विषये सप्तमी । केचित् तु अध्वरा इष्टा एभिः कर्माणि पूर्त्तान्यनेन चेति कर्म-क्तादिन् कर्त्तरीत्याहुः ; यः पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् स मे भर्त्तेति योज्यम् ॥ ७९ ॥ भ० म०

पतत्त्रीति ।—यस्य बाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घनिद्रया शेरते स मम भर्त्तेति योज्यम् । शेरते इति "शीङो रट्"; कीदृशानि ? अश्रेणयः श्रेणयो भूतानि "ऊर्य्यादि-च्विडाचश्च" इति च्व्यन्तानां "कुगतिप्रादयः" इति सः "च्वौ च"

दीव्यमानं शितान् बाणानस्यमानं महागदाः ।
निघ्नानं शात्रवान् रामं कथं त्वं नावगच्छसि ? ॥८१॥

इति दीर्घः, च्व्यन्तानान्तु "श्रेण्यादयः कृतादिभिः" इत्ययं विषयः; पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिवृतानि ॥ ८० ॥ ज० म०

"वसन् वैरायमाणेभ्यः" इति वाक्ये तस्य त्रासो नास्तीत्युत्तरमिदं,पतत्रीति ।—यस्य बाणैः शरैर्निकृत्तानि खण्डितानि रक्षांसि मयदे वने शेरते पतितानि सन्तीत्यर्थः, स मे भर्त्तेति सम्बन्धः; शोङः क्ती झन्ते, "शीङो रे लुः", "मान्तो रम्—" "मान्तोऽद; नत." ; अश्रेणयः श्रेणयो भूतानि श्रेणीभूतानि "च्विः अभूततद्भावे—" इति च्विः दीर्घश्च, "त्यो-वमान्तो लोप्यः" इति च्विलोपः। पतत्रिभिः गृध्रादिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि परिवृतानि 'जुषमुदि सेवे' ॥ ८० ॥ भ० म०

दीव्येति ।—शितांस्तीक्ष्णान् बाणान् दीव्यमानं क्षेप्तुं शक्तं तच्छीलं वा अनेकार्थत्वात् धातून',दिवे."ताच्छील्यवयोवचन—" इत्यादिना शानच्,"दिवादिभ्यः श्यन्"; महागदाः अस्यमानं क्षेप्तुं शक्तं तच्छीलं वा, पूर्ववच्छानच्; शात्रवान् शत्रून् प्रज्ञादित्वादण्; निघ्नानं हन्तुं शक्तं तच्छीलं वा, पूर्ववत् प्रत्ययः, हन्तेः "गमहन—" इत्युपधालोपः "हो हन्तेः" इति कुत्वम्; एवंविधं रामं कथं नावगच्छसि ? तेन कर्मणा सर्वलोकविदितत्वादिति भावः ॥ ८१ ॥ ज० म०

दीव्येति ।—कथं त्वं राममपि नावगच्छसि ? न जानासि ? सर्वलोकप्रसिद्धकर्मत्वात् । तथाहि शितान् बाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा,'दिव्य् जिगीषेच्छापणद्युती क्रीडागत्यो.'"दिवो घे वा" इति करणे द्वितीया; महतीर्गदा अस्यमानं क्षेप्तुं शक्तम् उत्क्षेपणयोग्ये वयसि वर्तमानं वा, क्षेप्तुं

भ्रातरि न्यस्य यातो मां मृगाविन्मृगयामसौ ।
एषितुं प्रेषितो यातो मया तस्यानुजो वनम् ॥ ८२ ॥
अथाऽऽयस्यन् कषायाक्षः स्पन्नस्वेदकणोल्वणः ।
सन्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥

गौल्मं यस्येति वा ; मायवान् निघ्नानं निहन्तुं शक्तं, सर्वत्र "शक्ति-वयस्ताच्छील्ये शतुः शानः" हन्तेः "हनगम—" इत्युङ्लोपे "हनो घ्नो—", मनुरेव मानवः, स्वार्थे णः ॥ ८१ ॥ भ० म०

यद्येवं,क्वासौ ? इत्याह,भ्रातरीति ।—असौ रामो मां भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः, मृगैः स्वार्थिको णिच् अदन्तत्वाच्च गुणो न भवति,तदन्तात् "कृञः श च" इति अधिकृत्य 'परिचर्य्या-परिसर्य्या-मृगयाऽटाट्यानामुपसङ्ख्यानम्' इति भावे शप्रत्ययः, यक्, अल्लोपाभावश्च, टाप्, मृगान् विध्यतीति मृगा-वित् । क्वासौ भ्राता ? इति चेदाह—तस्यानुजः कनिष्ठो मया प्रेषितः सन् यातो वनम्, अनु पश्चाज्जायते इति "अन्येभ्योऽपि दृश्यते" इति डः, जनौ कर्मण्युक्तमकर्मण्यपि भवति । किमर्थम् ? एषितुं तमेव ज्ञातुम्, 'इषु गतौ' इत्यस्य रूपं ज्ञानार्थत्वात् । प्रेषित इति तस्यैव रूपम् ॥ ८२ ॥ ज० म०

तथाऽपि त्वामेकाकिनीं त्यक्त्वा कुतो गतः ? इत्याह, भ्रातरीति ।—असौ रामो मां भ्रातरि न्यस्य समर्प्य मृगयां यातो गतः, मृगान् विध्यतीति मृगावित् । स कुत्र ? इत्याह —तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुम् अर्थात् रामं वनं गतः, "सर्वे गत्यर्था ज्ञानार्थाः" इति वचनात् 'इष सर्पणे' इत्यस्य ज्ञानार्थत्वम् । अनु जातोऽनुजः "अनजनात् —" इति डः ॥ ८२ ॥ भ० म०

अथेति ।—अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्त-

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम्।
को नग्नमुषितप्रख्यं * बहु मन्येत राघवम्?॥८४॥

वान्—चायस्यन् क्रोधाविष्टत्वात् शरीरं खेदयन्, 'यसु प्रयत्ने' इति दैवादिकः परस्मैपदी, क्रोधादेव कषायाक्षः, "बहुव्रीहौ सक्थ्यक्ष्णोः—"इति षच्; स्यन्नैः स्रुतैः स्वेदकणैरुल्वणः उद्भटः, व्याप्त इत्यर्थः, स्यन्देर्निष्ठायां रूपम्; सन्दर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन स एवंविधः॥ ८३ ॥ ज० म०

अथेति।—अथ तथैवमुक्तो दशाननस्तां सीतामवादीत्, "व्रजवद—" इति वृद्धिः। कीदृशः? आयस्यन् तद्वाक्यैः क्रोधवशात् शरीरं खेदयन्, कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य स तथा, "सक्थ्यक्ष्णः षः स्वाङ्ग" ; स्यन्नैः स्रुतैः स्वेदकणैरुल्वणः उद्भटः, व्याप्त इत्यर्थः 'स्यन्दू स्रवणे स्रुतौ' ऊदित्त्वादिट्त्वे "नेमृ ड्डीश्वीत्—"इत्यादिना इण्निषेधः, "इसुङ्नलोपोऽणौ"इति नस्य लोपः,"सूल्वाद्योत्—"इति नाख्य दस्य च नः; सन्दर्शितं प्रकटीकृतम् आन्तरम् अन्तर्गतम् आकूतमभिप्रायो येन स तथा ॥८३॥ भ० म०

कृते इति।—कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति"स्त्रीभ्यो ढक्" "कल्याण्यादीनामिनङ्" तयोः कल्याण्यादिषु पठितत्वात्; कनिष्ठासुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्जितः, विपूर्वस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम्; तं नग्नमुषितप्रख्यं यथा कश्चिन्मुषितो नग्नो भवति तद्वद्भूतं, "पूर्वकाल—" इति सः, तयोः पूर्वापरकालत्वात्, राजदन्तादित्वात् परनिपातः; ईदृशं राघवं को बहु मन्येत? श्लाघेत? नैवेत्यर्थः॥ ८४ ॥ ज० म०

* "नग्नमुषितप्रख्यम्" इत्यत्र "लग्नमुषितप्रख्यम्" इति भरतसम्मतः पाठः।

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्।
यद्यसौ कूपमाण्डूकि! तवैतावति कः स्मयः?॥८५॥

क्षते इति।—को जनो राघवं बहु मन्येत? श्लाघेत? न कोऽपीत्यर्थः। किम्भूतम्? कानिष्ठिनेयस्य:कनिष्ठाया अपत्यस्य भरतस्य क्षते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि शिवासितं पित्रा परित्यक्तं राज्यात् बहिष्कृतं, वसेर्णि-क्तान्तस्य रूपम्; तत एव लग्नमुषितप्रख्यं यः कश्चित् प्रथमं मुषितो निराकृतः पश्चाल्लग्नो लज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं, 'पूर्वकालस्यापरकालेन' इति कर्मधारयार्थं परसूत्रं, स्वमते पूर्वकालसम्बन्धात् य एव मुषितः परकालसम्बन्धात् स एव लग्न इत्येकार्थताऽस्त्येव, अभिधानात् पूर्वकालीनस्य परनिपातः, राजदन्तादित्वादिति परः, ज्येष्ठा-कनिष्ठाभ्यामावन्तत्वात् "बाह्वाद्यतोऽवरावादेः—" इति कृतस्य ण्येयस्य "कल्याण्यादिसुभग—" इत्यादिना इनेयः। लग्नेति 'ओ लज ङी व्रिथि' ओदित्त्वात् "सूत्वाद्योत्—"इति क्तस्य नकारः मग्नवल्लस्य गत्वम्। केचित् तु लसजेर्लस्य निपातनात् तवर्गपञ्चम इत्याहुः॥ ८४॥ भ० म०

"अध्वरेष्विष्टिनाम्" इत्यस्योत्तरमाह, राक्षसानिति।—यद्यसौ राक्षसान् पिण्डीशूरान् पिण्डयामेव शूरान् भोजने एव शूरान् "पात्रेसमितादयश्च" इति सः; वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृतवान, हे कूपमाण्डूकि! कूपे माण्डूकीव, पूर्ववत् सः, "ढक् च मण्डूकात्" इति चकारादण् वाऽपत्ये; एतावति स्वल्पे वस्तुनि तव कः स्मयः? नैव युज्यते॥ ८५॥ ज० म०

"अध्वरेष्विष्टिनां पाता" इत्यस्योत्तरमिदं, राक्षसानिति।—वटवो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्डयां भोजने एव शूरान् कार्य्यान्तराक्षमान् राक्षसान् निरस्तवान्, तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि! तव कः स्मयः?

मत्पराक्रमसङ्क्षिप्तराज्यभोगपरिच्छदः।
युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः ?॥८६॥
निर्लज्जो विमदः स्वामी धनानां हृतपुष्पकः।
अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणम् ?॥८७

गर्वः ? विस्मयो वा ? मण्डूकस्य भेकस्य स्त्र्यपत्यम् इति शिवादित्वात् णः, कूपे माण्डूकी इव ; एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मय इति सूचितम्। "कूपमण्डूकी"इति पाठे—"जातेरस्त्री—"इतीप्। कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात् क्षेपे तत्पुरुषः इति परः, समर्थ अर्थवशात् क्षेपो गम्यते ॥८५॥ भ० म०

मत्पराक्रमे तु युक्तः,तत्रापि मम न युक्तं वक्तुमित्याह, मत्पराक्रमेति।—राज्यभोगादयः परिच्छदो हस्त्यश्वादिः स मत्पराक्रमेण सङ्क्षिप्तोऽपहृतो यस्य हरेरिन्द्रस्य स यथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तम् ? आत्मगुणवादस्य लज्जाकरत्वात्, दरिद्रातेरादादिकत्वाच्छपो लुक् ॥८६॥ ज० म०

मदिति।—मत्पराक्रमेण सङ्क्षिप्तोऽपहृतो राज्यभोगपरिच्छदो हस्त्यश्वादिर्यस्य तादृशो हरिरिन्द्रो यथा यदि दरिद्राति दुर्गतो भवति, तदा किं ममैव वक्तुं युक्तम् ? अपि तु नैवेत्यर्थः, आत्मगुणानुवादस्य लज्जाकरत्वात्। 'दरिद्रा च लु दुर्गत्याम्' ॥८६॥ भ० म०

निर्लज्ज इति।—यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये, विभक्त्यर्थेऽव्ययीभावः, "गिरेश्च सेनकस्य" इति टच्, "अधिशीङ्स्थाऽऽसाम्—"इति कर्मसंज्ञा, तेन "तृतीया-सप्तम्योर्बहुलम्" इत्यम्भावो न भवति "नाव्ययीभावात्—"इत्यमेव भवति ; तत्कारणं

भिन्ननौक इव ध्यायन् मत्तो बिभ्यत् यमः स्वयम्।
क्षणिमानं दधानेन मुखेनास्ते निरुद्यतिः ॥८८॥

मम पराक्रमं मां वा को नावैति ? न जानाति ? कीदृशः ? निर्लज्जः लज्जातो निष्क्रान्तः, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति सः "एकविभक्ति च—"इत्युपसर्जनसंज्ञायां ह्रस्वत्वम् ; हृतपुष्पकः हृतम् आच्छिन्नं पुष्पकाख्यं विमानं यस्य अत एव विमदोऽपेतदर्पः, लङ्का पुष्पकञ्च धनदस्यासीत्, तदाच्छिद्य अनेन गृहीतमिति भावः ॥ ८७ ॥ ज० म०

निर्लज्ज इति।—धनानां स्वामी कुबेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यान्तर्मध्यमध्यास्तेऽधिवसति, तत्कारणं मत्पराक्रमरूपं को जनो नावैति ? अपितु सर्व एव जानाति। कीदृशः कुबेरः ? निर्लज्जः लज्जायाः निष्क्रान्तः, पञ्चमीतत्पुरुषः, "ध्यं पूर्वम्"इति निरः पूर्वनिपातः ; निर्गता लज्जा यस्येति वा। विमदः विगतो मदो दर्पो यस्य, हृतपुष्पकः हृतं पुष्पकं विमानं यस्य, ईदृशोऽपि मत्पराक्रमादेवेति भावः, अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः, "अप्-नदीपौर्णमास्याग्रहायणीगिरेर्वा"इति पक्षे अः, "कर्मक्रिया—"इत्यादिना आधारस्य कर्मत्वम् ॥८७॥भ०म०

भिन्नेति।—स्वयं साक्षात् मत्तो बिभ्यत् त्रस्यन् यमो वैलक्षण्यात् मुखेन क्षणिमानं क्षणवर्णत्वं,"वर्णदृढादिभ्यः ष्यञ्" इति अकारादिमनिच् ; दधानेन धारयता, इत्थम्भूते तृतीया ; निरुद्यतिः निरुद्यमः आस्ते, उत्पूर्वाद्यमेः "स्त्रियां क्तिन्"अनुनासिकलोपः ; कीदृशः ? ध्यायन् चिन्तयन् "किं ममापतितं यदहमनेन हृतसर्वस्वः" इति,भिन्ननौक इव विपन्नपोतवणिगिव, "उरःप्रभृतिभ्यः कप्" ॥ ८८ ॥ ज० म०

भिन्नेति।—यमः मत्तो बिभ्यत् त्रस्यन् स्वयं ध्यायन् चिन्त-

**समुद्रोपत्यका हैमी पर्वताधित्यका पुरी।**
**रत्नपारायणं नाम्ना लङ्केति मम मैथिलि! ॥८९॥**

---

यन् निरुध्यतिनिरुध्यम आस्ते. स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जानाति न त्वन्येन बोधित इत्यर्थः, क्षिणामानं क्षणत्वं दधानेन मुखेन उपलक्षितः, विशेषणे तृतीया, "गुणादिमन् भावे"; भिन्ना विदारिता शौर्यस्य तादृशो वणिक् यथा ध्यायति तथा ध्यायन्, 'एकवचनान्तेन शौशब्देन बहुव्रीहौ कः' इति परः, स्वमते स्वार्थे, "पुंवत्स्तुयन्नपुंस्क—" इति ज्ञापकात्; "तस् त्तः" इति अस्मदः पञ्चम्यास्तस्, "युष्मदस्मदोस्त्वाद्दौ—" इत्यादिना मदादेशः, गणात्मकार्थ्यस्य बाहुल्यात्, "त्यदां टेरः स्तौ" इति अनिषेधः, 'ञि भी लि भीत्यां' शङ्, "ह्रादौ रे दिः" "श्रद्द:" इत्युक्तेन नुण्। निरु-त्पूर्वात् यमः क्तौ "वनतनाद्यनिमाम्—" इति मलोपः; एतेन दिक्पतीनां जयादहमिव सुप्रसिद्धो न तु तथेत्युक्तम्॥ ८८॥ भ० म०

एवं स्वपौरुषं प्रदर्श्य स्वीकर्तुमाह, समुद्रोपत्यकेति।—हे मैथिलि! लङ्केति नाम्ना मम पुरी, कीदृशी? समुद्र एवोपत्यका आसन्नो यस्याः सा समुद्रोपत्यका, समुद्रस्य पर्वतोपत्यकात्वात्, समुद्रोपत्यकेति समासे साधुत्वं न भवति, यतः संज्ञाधिकारात् पर्वतस्यासन्ने अधिरूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यका-ऽधित्यकाशब्दयोः साधुत्वमुक्तं, प्रतिषेधे त्यकन् उपसङ्ख्यानम् इति "प्रत्ययस्थात्—" इतीकारो न भवति। हैमी हेमविकारा, "प्राणिरजतादिभ्योऽञ्"; पर्वताधित्यका त्रिकूटपर्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्नानां पारमवसानमयन्ते बुध्यन्ते तत्परीक्षकाः, सर्वरत्नस्थानमित्यर्थः॥ ८९॥ ज० म०

सम्प्रति सीताप्रलोभनं क्रियते, समुद्रोपत्यकेति।—हे

आवासे सिक्तसम्मृष्टे गन्धैस्त्वं लिप्तवासिता।
अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह ॥९०॥

मैथिलि! लङ्केति नाम्ना ख्याता मम पुरी, कीदृशी? समुद्रोपत्यका समुद्रस्य उपत्यका समीपे भूमिः, पर्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता, अध्युपाभ्यां त्यकादित्वात् "त्यकाद्यचिर—" इत्यादिना भवादित्वात् ऊर्द्ध्वासन्नयोस्त्यः, ततः स्वार्थे कः, स्त्रियामाप्, "काप्यनाशोरके—" इत्यादिना चिपादित्वात् न इत्वम्, "उपत्यकाऽद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरकोषे अद्रेरित्युपलक्षणं, समुद्र उपत्यका पर्वतासन्नभूमिर्यस्या इति केचित्, एतेन दुर्गमत्वं सूचितं, हैमी हेम्नो विकारः, "विकारसङ्घ—" इति ष्णः, "मनुवर्ज—" इत्यादौ विकार-ष्णवर्जनात् नलोपनिषेधाभावात् "न्वोर्लोपोतो—" इति नस्य लोपः; रत्नानां पारमवसानम् अयन्ते बुध्यन्ते तत्परीक्षका अत्रेति रत्नपारायणं "घञलनटोऽघे" इति आधारे अनट्, स्वभावादजहल्लिङ्गता; सर्वरत्नस्थानमित्यर्थः। यदाह हलायुधः "साकल्यवचनं प्राज्ञैः पारायणमुदाहृतम्" इति ॥ ८९ ॥ भ० म०

दुर्गावस्थित्याऽनभिभवनीयतां, रत्नोपचयात् समृद्धतां कथयन् प्रलोभयति, आवासे इति।—तस्यां पुर्य्याम् आवासे गृहे, आवसत्यस्मिन्निति अधिकरणे घञ्; मया सह त्वं वस, प्रार्थनायां लोट्; सिक्तसम्मृष्टे पूर्वं सिक्ते पश्चात् सम्मृष्टे, गन्धैर्लिप्तवासिता सती पूर्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता, सम्मृष्टादिभिः "पूर्वकाल—" इत्यादिना सः; अर्पिता न्यस्ता उर्व्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वम् ॥ ९० ॥ ज० म०

आवासे इति।—तस्यां पुर्य्याम् आवासे गृहे मया सह त्वं वस, प्रार्थनायां णी; पूर्वं सिक्ते पश्चात् सम्मृष्टे शोधिते सिक्त-

सङ्गच्छ पौंस्नि ! स्त्रैणं मां युवानं तरुणी शुभे ! ।
राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनम् ॥९१॥

धूपमृष्टे, गन्धैश्चन्दनादिभिर्लिप्तवासिता पूर्वं लिप्ता पश्चाद्वासिता धूपैः, उभयत्र पूर्व-परकालसम्बन्धादेकार्थत्वेन कर्मधारयः ; गन्धयतीति गन्धश्चन्दनादिः। "वासिता करिणीनार्य्योर्वासितं सुरभीकृते। ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टिते॥" इति विश्वः ; अर्पिता न्यस्ता उर्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती, "सूत्पूतिसुरभिपूतेः—"इत्यादिना गन्धादिप्रत्ययः ॥ ९० ॥ भ० म०

किमिति त्वया सह वसामि ? इति चेदाह, सङ्गच्छेति।—हे पौंस्नि! पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा "स्त्रीपुंसाभ्यां नञ्-स्नञौ"स्त्रीप्रत्यये'नञ्-स्नञीकक्-ख्युंस्तरुण-तलुनानामुपसङ्ख्यानम्' इति ; मां युवानं तरुणं सङ्गच्छ अङ्गीकुरु, गमेः प्रार्थनायां लोट्, "इषुगमि—"इत्यादिना छत्वं, "समो गम्यृच्छि—"इत्यादिना तङ् न भवति सकर्मकत्वात् विशेषतः, स्त्रैणं स्त्रियै हितमर्हन्तं वा, पूर्ववत् प्रत्ययः ; तरुणी युवती सती शुभे! कल्याणि!, शोभते इति इगुपधलक्षणः कः। ममापि तादृशो भर्त्ताऽस्तीति चेत् ? आह—राघवः प्रोष्यपापीयानिति पापशब्दात् "विन्मतोर्लुक्" इति ईयसुन् लुक् च मतुपः, प्रोष्यपापीयानिति"मयूरव्यंसकादयः"इति सः ; देशान्तरं यात्वा पापतरः, अतस्तमकिञ्चनं दरिद्रं, न विद्यते किञ्चन यस्येति 'सर्वनाम्नाव्ययसंज्ञाया उपसर्जनप्रतिषेधः' इति वचनात् नाव्ययसंज्ञा तेन न विभक्तिलोपः ; जहीहि त्यज। ईत्वञ्च"जहातेश्च"इति वा वचनादिकारः ॥ ९१ ॥ ज० म०

सङ्गच्छेति।—हे पौंस्नि! हे पुरुषयोग्ये! पुरुषहिते!

अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणि।
वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे॥ ९२॥

वा, हे शुभे! कल्याणि! तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु, "विधिनिमन्त्रण—" इत्यादिना प्रार्थनायां लोट्; सदृशयोरावयोर्योग उचित इति भावः। स्त्रीपुंसाभ्यां "विकारसङ्घ—" इत्यादिना नञ्,"नञ् पुंस्त्रियोः"। तरुणशब्दात् नदादित्वान्ङीप्, शोभते इति शुभा इगुपधत्वात् "ज्ञाप्रीकिरः क:—" इति कः। ममापि ईदृशो भर्त्तेति चेत्? आह—राघवः प्रोष्यपापीयान् देशान्तरं गत्वा पापवत्तरः,पापवत्-शब्दात् "गुणादिष्ठेयसू" इति ईयसु, "लुण्मद्विनाम्" इति वतोर्लुक्, "ओमंश्च डित्—" इति डित्वात् टेर्लोपः; 'मयूरव्यंसकादित्वादत्र समास.' इति परः, स्वमते गमकत्वात्,असमासत्वेऽपि न क्षतिः; तमकिञ्चनं दरिद्रं जहीहि त्यज, किञ्चनेति अव्ययेनापि समासे 'मयूरव्यंसकादित्वेन निपातनात् वाच्यलिङ्गता' इति परः, 'नञ् तत्पुरुषादर्श-आदित्वादत्' इत्यन्ये, न विद्यते किञ्चनमस्य इति बहुव्रीहौ नाव्ययकार्य्यम्' इति केचित्, स्वमते "द्रविणं किञ्चनं क्लीवे" इति कोषादनव्ययेन किञ्चनशब्देन समासः, वस्तुतोऽप्येवमकिञ्चनशब्दो निर्द्धनवाची वाच्यलिङ्गः, तथाच कोषः "निःस्वाकिञ्चनदुर्विधाः" इति। "आद्गोः—" इत्यादिना ह्राक ईत्वम् ॥९१॥ भ० म०

अश्नीतेति।—अश्नीत-पिबतेति मयूरव्यंसकादित्वात् सः, तत्र हि 'आख्यातमाख्यातेन क्रियासातत्ये' इति पठ्यते; सततमश्नीत-पिबतेत्येवं भृत्यजनानादेष्टुमिच्छतीति "सुप आत्मनः क्यच्" अश्नीत-पिबतीयन्ती,प्रसिता स्मरकर्मणि आधिक्येन प्रवृत्ता कामव्यापारे," प्रसितोत्सुकाभ्यां तृतीया च" इति चकारात् सप्तमी;

मास्म भूर्ग्राहिणी भीरु ! गन्तुमुत्साहिनी भव ।
उद्भासिनी च भूत्वा मे वक्षःसम्मर्दिनी भव ॥९३॥

'वशीकृत्यानुवर्त्तिनं दशग्रीवं कृत्वा"साक्षात्प्रभृतीनि च"इति गतिसंज्ञा ; मोदस्व हर्षं जनय, वरमन्दिरे श्रेष्ठगृहे स्थिता ॥ ९२ ॥ ज० म०

अश्नीतेति ।—दशग्रीवं वशीकृत्य आयत्तीकृत्य वरमन्दिरे श्रेष्ठगृहे त्वं मोदस्व हर्षं जनय । वशी इति सप्तम्यन्तप्रतिरूपकोऽव्ययः "हस्तेपाणौ—" इत्यादिना साक्षादादित्वात् समासः । कीदृशी ? अश्नीत-पिबतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीत-पिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीत-पिबता"ऐक्यं सोऽन्वये" इति समासः, तत्र हि सामान्यत्वात् पदमात्रस्यैव ग्रहणं, तेन क्वचित् स्याद्यन्तस्य, क्वचित् त्याद्यन्तस्य,क्वचिदुभयस्य चैक्यमिति लब्धं, त्याद्यन्तस्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वाल्लिङ्गत्वं, तेनात्र क्रियाया विशेषणार्थत्वात्"स्त्रियामत आप्""त्तोकुक् त्ये च" इत्यत्र स्यादिकेरेव ग्रहणमभिधानात्, तेन त्यादिकेन लुक् । 'निपातात् रूपसिद्धिः'इति परे । अश्नीतपिबतामिच्छतीति क्यः ; स्मरकर्मणि कामचेष्टायां प्रसिता तत्परा, 'प्रसितोत्सुकाभ्यां तात्पर्य्ये तृतीयासप्तम्यौ' इति परः, स्मरमते विषयविवक्षा, 'षिञ् बन्धने' क्तः ॥ ९२ ॥ भ० म०

मा स्मेति ।—हे भीरु ! मा स्म भूर्ग्राहिणी प्रतिकूला मा भूः,न यास्यामीत्यमुमर्थं गृह्णामीति कृत्वा "स्मोत्तरे लङ् च"इति चकारात् लुङ् ; गन्तुमुत्साहिनी उद्युक्ता भव,"शकधृष—"इत्यादिना तुमुन्,उत्साहिनीति सहोपपदत्वात्, ततश्चालङ्कृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव, ग्रहोत्साहोद्भाससम्मर्दानां ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः "ऋन्नेभ्यो ङीप्" ॥ ९३ ॥ ज० म०

तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः।
बाहूपपीडमाश्लिष्य जगाहे द्यां निशाचरः ॥८४॥

मास्मेति।—हे भीरु! ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भूः न भव,गन्तुमुत्साहिनी उद्युक्ता भव, उल्लासिनी वस्त्रालङ्कारादिभिः शोभमाना भूत्वा नोऽस्माकं वक्ष.सम्मर्दिनी स्तनाभ्यामुरःस्थलस्य पीडिका भव ; सर्वत्र ग्रहादित्वात् णिन्। चकारः समुच्चये। अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकम् ॥ ८३ ॥ भ० म०

तामिति।—यदेवमभिधीयमाना न प्रतिपन्ना तदा तां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा"ओजःसहोऽम्भसा वर्त्तते" इत्यधिकृत्य प्रतिकूलं वर्त्तते इत्यस्मिन्नर्थे "तत्प्रत्यनुपूर्व—"इत्यादिना ठक्; जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः हृष्टत्वात्स्वशरीररूपः सुखेन क्रियत इति,बाहूपपीडमाश्लिष्य बाहुभिरुपपीड्य, "सप्तम्याञ्चोपपीडे" इति चकारात् तृतीयान्त उपपदे णमुल् ; जगाहे रथेनोत्पत्य द्यामाकाशं निशाचरो गाहते स्म, दिवशब्दसमानार्थो द्योशब्द औणादिकः,'गमेर्डोः' इत्यत्र 'द्युतेश्च' इति वचनात् "औतोऽम्शसोः" इत्यात्वं, कालापैस्तु दिवशब्दादेव व्युत्पादयितुं सूत्रमवधीयते 'वाम्यो' इति दिवः अम विकल्पेनाकारादेश इति ॥ ८४ ॥ ज० म०

तामिति।—उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरो रावण भीमविग्रहो भयङ्करमूर्त्तिः सन् बाहूपपीडं बाहुभिरुपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गतवान् इत्यर्थः। 'गाहृ ङ् विलोडे' 'तृतीयान्तादुप-पीडो णम्' इति परः, स्वमते बाहुभ्यामुपपीडः पीडनं यस्येत्याश्लेषक्रियाविशेषणम्। उपपीडो घञन्तः,

वसन्तीं तां समादाय याती रात्रिञ्चरालयम् ।
तूष्णीम्भूय भयादासाञ्चक्रिरे मृगपक्षिणः ॥८५॥
उच्चै...रस्यमानां तां कृपणां रामलक्ष्मणौ ।
... ...आप पक्षीन्द्रः परुषं रावणं वदन्॥८६॥
[एते प्रकीर्णकाः] ।

...मिति द्योशब्दस्य दिवशब्दस्य वा अमि रूपं,' प्रतिकूलं यथा ...ात्तथा वर्त्तते इति क्रियाविशेषणस्य कर्म्मत्वात् "ढचे कात्—" इति णिकः ॥ ८४ ॥ भ० म०

वसन्तीमिति ।—वसन्तीञ्च तां तद्रूपदर्शनात् समादाय गृहीत्वा याती गच्छतो रावणात्, यातेः शतरि पञ्चम्या रूपम ; किं यातः ? रात्रिञ्चरालयं लङ्कां, रात्रौ चरतीति "चरेष्टः" "रात्रेः कृति विभाषा" इति मुम्, तस्माद्रावणाद्दुयत् भयं ततो भयात् तूष्णीम्भूय "तूष्णीमि भुवः" इति "क्त्वा च" इति समासे ल्यबादेशः ; आसाञ्चक्रिरे आसिताः, "दयायासश्च" इत्याम् ; मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामिति वचना-देकवद्भावोऽत्र न भवति ॥ ८५ ॥ ज० म०

वसन्तीमिति ।—वसन्तीं बिभ्यतीं तां सीतां समादाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां यातो गच्छतो रावणात् भयात् मृगाश्च पक्षिणश्च तूष्णीम्भूय मौनिनो भूत्वा आसाञ्चक्रिरे स्थित-वन्तः,'आस्ङ् श उपवेशे'"निजादि—"इत्याम्"भस्-कन्वामः" यात इति शवन्तं, रात्रौ चरतीति पचादित्वादच् "रात्रेर्मन् वा कृति"। तूष्णीमित्यव्ययं मौनार्थे वर्त्तते, "अस्य ग्यनुकार—" इत्यादिना ऊर्य्यादित्वात् समासे क्त्वो यप् ॥ ८५ ॥ भ० म०

उच्चैरिति ।—तां सीतां जटायुः पक्षीन्द्रः रावणं परुषं निष्ठुरं वदन् आप प्राप्तवान् । कीदृशीम् ? उच्चै रारस्यमानां"हा राम !

अतःपरं टाधिकारः ।—

द्विषन् वनेचराग्र्याणां त्वमादायचरो वने ।
अग्रेसरो जघन्यानां मा भूः पूर्वसरो मम ॥१॥

हा लक्ष्मण !" इति शब्दौ द्वौ उच्चैर्महता ध्वनिना ... आरसन्तीमित्यर्थः, रसेः शब्दकर्मकत्वात् ... यङ्; कृपणां दीनाम् । इति प्रकीर्णकाण्डः प्र... ॥९६॥ ज० म०

उच्चैरिति ।—उच्चैर्यथा स्यात् तथा रामलक्ष्मणौ रारस्यमानां "हा राम ! हा लक्ष्मण !" इति पुनः पुनराह्वयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप, रावणं परुषं निष्ठुरं वदन्, वदिर्द्विकर्मकः, 'रस शब्दे' "सूचसूत्र—"इत्यादिना यङ् । इति गौराङ्गमल्लिकपुत्त्र भरतमल्लिकः । प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ॥ ९६ ॥ भ० म०

[ अतः अधिकारकाण्डम् । तत्र प्रथमं टाधिकारः । ]

इतः परमधिकारकाण्डमुच्यते, यत्र प्राधान्येनैकैकमधिकृत्य लक्षणं प्रदर्श्यते तदधिकारकाण्डं, शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम्, एवञ्च कृत्वा अन्तराऽन्तरा तत्सूचनार्थं प्रकीर्णकश्लोकाभिधानम् । अत्र च काण्डे निर्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः, तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते । सर्गार्थश्च विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसम्बध्नाह, द्विषन्नित्यादि ।—एवञ्च कृत्वा मिश्रक उच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् । परुषं वदन्, कीदृशम् ? हे द्विषन् ! मा भूः पूर्वसरो ममेति ममाग्रतो भूत्वा मा गाः इत्यर्थः, पूर्वं सरतीति "पूर्वे कर्त्तरि"इति टः ; यतस्त्वमग्रेसरो जघन्यानामग्रे सरतीति "पुरोऽग्रतः—" इत्यादिना टः, जघन्य इति "शाखादिभ्यो यः" इति स्वार्थे यः । पापानां प्रथमस्त्वम् । कुतः ? आदायचरो वने आदाय चरतीति "भिक्षा-

सेना—"इत्यादिना,वने चरन्तीति वनेचराः अधिकरणे"चरेष्टः", तेषामग्र्याः प्रधाना ऋषयः तान् आदाय चरसि भक्षयसि, कर्मणि षष्ठी ॥ ९७ ॥ ज० म०

इतः प्रभृत्यधिकारकाण्डमुच्यते, एकैकं विषयमाश्रित्य लक्षणप्रदर्शनं यत्र तदधिकारकाण्डं, तत्रापि लक्षणान्तर-सम्बन्धात् प्रकीर्णताऽस्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभि-धानम्। विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डा-न्तरारम्भो न दोषाय, एवञ्चायं सर्गो मिश्रक उच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात्। अथ टाधिकारः। परुषं वदन्निति यदुक्तं तत् किम्? इत्याह, द्विषन्नित्यादि।—हे वनेचराग्र्याणां मुनीनां द्विषन्! अक्षो! त्वं मम पूर्वसरोऽग्रयायी मा भूः यतस्त्वं जघन्यानां नीचाश्रयाणाम् अग्रेसरः प्रथमः, वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः, द्विषन्निति 'द्विषः शत्रौ शतृः' इति परः,स्वमते द्विषच्छब्दः शत्रुवाचित्वे रूढः एव, विद्वेषार्थे तु "शी-प-मवत्—" इति शतृः, उभयथा सम्बन्धे षष्ठी, वने चरतीति पचादित्वादच्, अभिधानात् सप्तम्यलुक्, अग्रे भवोऽग्र्यः श्रेष्ठः उच्यते, रेफान्तप ठेऽग्रशब्दः एव श्रेष्ठार्थः; तथाच "अग्रमालम्बने प्रान्ते परिमाणे पलस्य च। प्रान्ते समन्ता-दधिके प्रधाने प्रथमाद्ययोः॥" इति विश्वः। "दामागेहाक—" इत्यादौ यव्वर्जनात् न दाजः इत्वं, चरेः पूर्ववदच्, गमकत्वात् "दत्तावाः सिद्धसङ्के" इतिवत् क्रियायाः कारकापेक्षायामपि यबन्तेन समासः, अविवक्षितकर्मत्वात् सापेक्षत्वाभावेन वा समासः, असमासेऽपि न क्षतिः। 'मयूरव्यंसकादित्वात् सापेक्ष-त्वेऽपि समासः' इति परः, अग्रे इत्येकवचनान्तमव्ययं "स्तकुष्टः" —इति टः। जघनं पश्चाद्भागः, तत्तुल्यो जघन्यः "विकारसङ्घ—" इत्यादिना तुल्यार्थे यः॥ ९७ ॥ भ० म०

**यशस्करसमाचारं ख्यातं भुवि दयाकरम्।**
**पितुर्वाक्यकरं रामं धिक् त्वां दुन्वन्तमत्रपम् ॥९८॥**
**अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः।**
**तव राक्षस! रामस्य नेयः कर्मकरोपमः ॥९९॥**

यशस्करेति।—रामं दुन्वन्तमुपतापयन्तम् अत्रपं निर्लज्जं धिक् त्वां गर्हा 'टुदु उपतापे' इत्यस्य सौवादिकस्य शतरि "हुश्नुवोः सार्वधातुके" इति यणादेशे रूपम्। कीदृशं रामम्? यशस्करसमाचारं समाचरणं समाचारः चरितं, भावे घञ्; यशस्करोतीति यशस्करः, "कृञो हेतु—" इत्यादिना टः, "विसर्जनीयस्य सः"; यशस्करणहेतुभूतः समाचारो यस्य, ख्यातं भुवि प्रसिद्धं, दयाकरं करुणाकरणशीलं, ताच्छील्ये टः; पितुर्वाक्यकरं पितुर्वचनानुष्ठाने अनुकूलम; आनुलोम्ये टः ॥ ९८ ॥ ज० म०

यशस्करेति।—रामं दुन्वन्तम् उपतापयन्तम् अत्रपं परस्त्रीहरणेन निर्लज्जं त्वां धिक्, "धिक्समया—" इत्यादिना द्वितीया, 'टु दु उपतापे' स्वादित्वात् शतरि नुः "अुध्वोः—" इति वः। रामं कीदृशम्? यशस्करः समाचारो यस्य तं, यशः करोतीति "स्वकुष्ठः" इति टः, अत्र "ढात् षण्" इति सूत्रात् ढादित्यनुवर्त्तते, "से तु कख—" इति वेः मः, 'कृञो हेत्वादावर्थे टः' इति परः, स्वमते "यशस्करी विद्या" इति निर्दिशता विद्याया यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः, अन्यथा विद्येतिग्रहणस्य वैयर्थ्यं स्यात्, हेत्वाद्यर्थानुक्तावपि न क्षतिः; सम्यगाचरणं समाचारश्चेष्टा, "घञल-नटोऽघे" इति घञ्; भुवि ख्यातं दयाकरणशीलं, पूर्ववत् टः; परमते ताच्छील्यार्थेऽपि; पितुर्वाक्यानुष्ठानेऽनुकूलं, पूर्ववट्टः; परमतेऽनुकूलार्थेऽपि। वाक्यशब्देनात्र तदभिधेयमुच्यते ॥९८॥ भ० म०

अहमिति।—हे राक्षस! अहं तव नूनमवश्यमन्तकारः

सतामरुष्करं पक्षी वैरकारं नराऽऽशिनम्।
हन्तुं कलहकारोऽसौ शब्दकारः * पपात खम्॥१००

इति टाधिकारः।

विनाशयिता। कीदृशः? रामस्य नेयो वश्यः, "अचो यत्"; कर्मकरोपमः भृतकतुल्यः, "कर्मणि भृतौ" इति टः; ध्वान्तस्येव दिवाकरः यथाऽन्धकारस्यान्तकरो दिवाकरः सूर्य्यः तथा, अन्तकर-दिवाकरौ "दिवाविभा—" इति टप्रत्ययान्तौ; एवमुक्त्वा खं पपातेति सम्बन्धः॥ ९९॥ ज० म०

अहमिति।—हे राक्षस! नूनं निश्चितम् अहं तव अन्तकरः नाशयिता, अन्तं करोतीति टः; यथा दिवाकरः सूर्य्यो ध्वान्तस्य अन्धकारस्य अन्तकरः, दिवाशब्दोऽयमाधाररूपादिमवचनोऽव्ययः, तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादित्वात् टः इति परः, अमते दिवाशब्दोऽयमव्ययः सप्तम्यन्तं प्रायिकं, तेन दिवा दिनं करोतीति पूर्ववत् टः, बाहुल्याद्वा, दिवा दिवसे करो रश्मिर्यस्य इति केचित्। ध्वान्तमिति ध्वनेस्तमसि क्ते "क्षुब्धस्वान्त—"इत्यादिना निपातः। अहं कीदृशः? रामस्य नेयः वश्यः, "वश्यः प्रणेयः" इत्यमरः; कर्मकरोपमः भृतकतुल्यः, कर्म करोतीति टः, कर्मशब्दात् भृतौ टः इति परः॥ ९९॥ भ० म०

सतामिति।—एवमुक्त्वा असौ जटायुः पक्षी खमाकाशं पपात पतितः, किमर्थम्? नराशिनं राक्षसं हन्तुं हनिष्यामीति। कीदृशं राक्षसम्? सतामरुष्करं धर्मे स्थितानां पीड़ाकरम्, अरुःशब्दः पीड़ोपलक्षणपरः, "दिवाविभा—" इति टः; वैरकारं वैरकरणशीलं, कलहकारः पक्षी कलहयितुमनुकूलः, अनयोः "न

* "शब्दपातः" इति जयमङ्गलासम्मतः पाठः।

अतःपरं प्रकीर्णकाः।—

धुन्वन् सर्वपथीनं खे वितानं पक्षयोरसौ।
मांसशोणितसन्दर्शं तुण्डघातमयुध्यत ॥ १०१ ॥

शब्दस्याक—"इति टे प्रतिविहेऽण् एव भवति ; कर्मण्यण: प्राप्ति-रस्तीति टाधिकार उदाहृतः। कियत् खं पपात ? यावति दूरे शब्दपातस्तावत खम्। इति टाधिकारः समाप्तः ॥१००॥ ज० म०

सतामिति :—एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं राक्षसं हन्तुं खमाकाशं पपात जगाम। कीदृशं राक्षसम् ? सतां साधूनाम् अरुष्करं पीड़ाकरमित्यर्थः, पूर्ववत टः, निष्पतन्त्य इति-वत् षत्व ; वैरं विरोधं करोतीति वैरकारस्तं, "ढात् षण्" इत्यत्र "कुम्भकारः"इत्युदाहरणेन कुम्भादेः कृञः षण्,अन्यस्मात्"स्वकुटः" इत्यस्य विषय इति सूचितं, तेनात्र कुम्भादित्वात् षण्। पक्षी कीदृशः ? कलहकारः कलहं करोतीति पूर्ववत् षण् ; एवं शब्द-कारः।"शब्दपातम्"इति पाठे—शब्दस्य पातो यत्रेति खविशेषणं, यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः,शब्दस्येव पातो गतिर्यत्रेति पतनक्रियाविशेषणं वा,एतेन यथा शब्दस्य शीघ्रगमनं तथाऽस्येति ध्वनितम्। इति टाधिकारः ॥ १०० ॥ भ० म०

इतः प्रकीर्णकश्लोकानाह, धुन्वन्निति।—असौ पक्षी अयुध्यत युध्यते स्म ; युधेर्दैवादिकस्य लङि रूपं, तुण्डघातमिति क्रियाविशेषणं,तुण्डेन चञ्च्वा घातो हननं यस्मिन् युद्धे इति"करणे हनः"इति न णमुल्,"कषादिषु यथाविध्यनुप्रयोगः"इति वचनात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातं भूमिं हन्तीति, "हिंसार्थानाञ्च समानकर्मकाणाम्"इत्यनेनापि न भवति समान-कर्मकताभावात् अकर्मकत्वात् युधेः, तेन भावे घञ् ; धुन्वन् कम्पयन् खे आकाशे पक्षयोर्वितानं, सर्वपथीनं सर्वः पन्था इति

न बिभाय न जिह्राय न चक्राम न विव्यथे ।
आघ्नानो विध्यमानोऽपि*रणात् निववृते न च॥१०२

"पूर्वकाल—"इत्यादिना सः, "ऋक्पूः—" इति समासान्तोऽकारः, सर्वपथान् व्याप्नोतीति "तत्सर्वादेः—"इत्यादिना खः ; मांसशोणितसन्दर्शं कात्स्न्र्येन मांसं शोणितञ्च दृष्ट्वा, "कर्मणि दृशिविदोः साकल्ये" इति णमुल्, "समेवान्ययेन" इति सः ॥ १०१ ॥ ज० म०

अथ प्रकीर्णकाः, धुन्वन्निति—पक्षी जटायुः खे आकाशे पक्षयोर्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा स्यात् तथा तुण्डघातं यथा स्यात् च तथा अयुध्यत,'युध्यो ङ युद्धे'; मांसरक्तयोरर्थात् रावणस्य सम्यग्दर्शो दर्शनं यत्र चेति युद्धक्रियाविशेषणम् । दर्श-घातौ घजन्तौ, परे तु साकल्येन तुण्डस्याघातो यत्र, मांसं शोणितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशो णम् साकल्ये, एवं तुण्डेन हत्वा तुण्डघातं, तृतीयाप्रभृतौदासक्तौ णम्. तुण्डघातेन युद्धसम्भवादासक्तिरत्र गम्यते इत्याहुः । वितानं कीदृशम् ? सर्वस्मै पन्थाश्चेति सर्वपथः, "पथ्यप्पुरः से" इति अः, सर्वपथं व्याप्नोतीति "ढये कात्—" इति ईनः ॥ १०१ ॥ भ० म०

न बिभायेति ।—आघ्नानः पक्षी प्रहरन्"आङो यमहनः"इति तङ् ; न बिभाय न भीतः, तस्मात् न जिह्राय न लज्जितः, सम्यक् मया न हत इति ; न चक्राम न क्रान्तः, न विव्यथे "व्यथो लिटि" इति सम्प्रसारणं, जितश्रमत्वात् ; विध्यमानो वा वाशब्दश्चार्थे, परेण हन्यमानश्च न विव्यथे न पीड़ां भेजे, सत्त्वाधिकत्वात् ; रणाच्च न निववृते न निवृत्तः, अभग्नोत्साहत्वात् ॥१०२॥ ज० म०

* "विध्यमानो वा" इति जयमङ्गलासम्मतः पाठः ।

पिशाचमुखधौरेयं सच्छत्रकवचं रथम्।
युधि कद्रथवत् भीमं बभञ्ज ध्वजशालिनम्॥१०३॥
एते प्रकीर्णकाः।

न विभायेति।—असौ पक्षी आघ्नानः प्रहरन् न विभाय न भीतः, मया ताड़ितोऽपि न कृत इति न जिह्राय न लज्जते स्म, न चक्लाम न असमर्थो बभूव, न विव्यथे न पीड़ितो भवति स्म, विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः, अभग्नोत्साहत्वात्; सर्वत्र ठी, व्यथेस्तु "व्यथग्रह—" इति जिः, आघ्नानः इति "आत्माङ्गदादढाद्याहनयमः" इति मं, किंवा आघ्नानः शत्रुहिंसनशक्तः, "शक्तिवयस्ताच्छील्ये—" इति शानः॥ १०२॥

पिशाचेति।—युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान्, तस्य पुष्पकादन्यत्वात्; तथाहि कद्रथवत् कुत्सितरथमिव, "रथवदः योश्च"इति कदादेशः; धुरं वहन्ति धौरेया अश्वाः"धुरो यङ्कौ"; पिशाचस्येव मुखं येषां ते धौरेया यत्र रथे तं पिशाचमुखधौरेयं,सत् शोभनं छत्रं कवचश्च यस्मिन् तं,भीमं भयानकं, तथा-भुत्वात्, ध्वजशालिनं ध्वजवन्तं, शालिन्शब्दः णिन्प्रत्ययान्त-स्तदन्तमाह, अन्यस्त्वाह—ध्वजेन शालितुं श्लाघयितुं शील-मस्येति णिनिः, अनेकार्थत्वात् धातूनामिति। एते प्रकीर्णकाः ॥१०३॥ भ० म०

पिशाचेति।—जटायुः युधि सङ्ग्रामे रावणस्य रथं बभञ्ज कद्रथवत् कुत्सितरथमिव "कत् क्रच्चित्रथवदे" इति कुशब्दस्य कदादेशः। कीदृशः? पिशाचस्येव मुखं येषां तेऽश्वा धौरेया यत्र, धुरं वहतीत्यर्थे"ढचे कात्—"इति ष्णेयः, सत् शोभनं विद्यमानं वा छत्रं कवचं च यस्मिन्, छत्रकवचाभ्यां सह रथं बभञ्जे-

अतःपरम् आमधिकारः।—

सन्त्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः।
सन्त्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥१०४॥

त्यर्थो वा, भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं, शालिनशब्दः ल्लाघायाम्, अस्त्यर्थे शालिनप्रत्ययः इति वृद्धाः। ध्वजेन शालते शोभते ग्रहादित्वात् णिन् धातूनामनेकार्थत्वात्। शालिरत्र दौप्त्यर्थ इति केचित्। ध्वजेन शालयितुं शोभं यस्येति ; डलयोरैक्यमिति स्मरणात् 'शाडृ श्लाघायाम्' इत्यस्य रूपमित्यपरे। 'शलङ्क श्लाघ्ये' इत्यस्मात् 'डशाल्ट कथने' इत्यस्माद्वा ओणिन्निति केचित्। इति प्रकीर्णकाः ॥१०३॥ भ०म०

इतः प्रभृत्यामधिकृत्याह, सन्त्रासेति।—अथैतस्मिन् युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान्, गत्यादिषु त्यजेरभङ्गत्वात् तृतीयैव भवति। कस्मात् त्याजितवान्? इत्याह—सन्त्रासयाञ्चकारारिं यस्मादरिं रावणं त्रासितवान्, अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्मत्वम्, आभ्यां हेतुमण्ण्यन्ताभ्यां "कास्प्रत्ययात्—"इत्यादिना आम्, आमोऽमित्वमदन्तत्वात् "आमः" इति लुक्, "अयामन्त—" इत्यादिना अयादेशः,आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनं,तस्य"अव्ययात्—"इति लुक्, स्वरादिषु "अम् आम् —" इति पाठितत्वादव्ययत्वम, आमन्तस्यानभिव्यक्तपदार्थत्वात् "कृञ्चानुप्रयुज्यते—" इत्यादिना लिट्परस्य कृञोऽनुप्रयोगः, कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति ; सुरांश्च पश्यतो युद्धं जटायुः पिप्राय प्रीणितवान्, शत्रुत्रासनं सीतात्याजनञ्च देवानां प्रीतेः कारणम् ॥ १०४ ॥ ज० म०

अथामधिकारः, सन्त्रासेति।—स पक्षी अरिं रावणं सम्यक्

असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः।
भूयस्तं वेभिदाञ्चक्रे * नखतुण्डायुधः खगः ॥१०५॥

त्रासयाञ्चकार, अत एव पश्यतो युद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान्। अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां सन्त्याजयाञ्चकार, त्यजेः "णेरणौ ञेः—" इत्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया, त्यजेरकर्मकत्वात् प्रयोज्यकर्त्तुः कर्मत्वम्, उभयत्र प्रत्ययान्तत्वात् "विंजादि—" इत्याम् "भ्वस्क्रञ्चामः" इति कृञोऽनुप्रयोगः, "म्नोर्नुः—" इत्यनुस्वारः, "ञपे अम् नोः" इति ञः। अत्र विरामस्वीकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापाः। पिप्रायेति अनेकाच्धातोराम् न त्वेकाचः इत्यपन्यस्तं, विंशतिबाहुना इति साभिप्रायपदेन रावणस्य त्रासाधिक्यं जटायोर्वीर्य्याधिक्यञ्च सूचितम् ॥ १०४ ॥
भ० म०

असीत इति।—असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति,'कासृ शब्दकुत्सायाम्' इत्यनुदात्तेत्, "कास्—" इत्यादिना आम ; शस्त्रैः इत्यम्भूते तृतीया ; निराकुलः पूर्वं बाहुभिः सीताग्रहणे व्याकुलत्वात् ; भूयः पुनरपि, खगः पक्षी, डप्रकरणे "अन्येष्वपि दृश्यते" इति वचनात् गमेर्डः, तं निशाचरं वेभिदाञ्चक्रे अत्यर्थं भिन्नवान्, वेभिद्यतेर्यङन्तादाम्। नखतुण्डान्येवायुधानि यस्य सः ॥ १०५ ॥
ज० म०

असीत इति।—असीतस्त्यक्तसीतो रावणः आकुलः सन् शस्त्रैः कासाञ्चक्रे शुशुभे, 'काशृङ् कुशब्दे' धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः ; दीप्त्यर्थोऽपि दन्त्यान्त-काशृङ्धातुरस्तीति केचित्,

* "वेच्छिदाञ्चक्रे" इति पाठान्तरम्।

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परम् ।
न वा पलायाञ्चक्रे विर्दयाञ्चक्रे न राक्षसः ॥१०६॥

यद्वा—पक्षिणं प्रति "एहि एहि खगाधम ! आस्यसि" इत्यादि कुत्सितशब्दं कृतवान्। अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया ; "दरिद्राकाशकास—" इति पक्षे आम, पूर्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः, भूयः पुनरपि खगः पक्षी तं रावणं बेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म। कीदृशः ? नखतुण्डप्रहरणः। भिदेः "मूत्र-सूत्रशुचाट—" इत्यादिना यङ्प्रत्ययान्तत्वात् "विजादि—" इत्यादिना आम, यङो लुक्,"यङ्लुक्श्लोपेऽरे न गु-ण्रो" इति निषेधात् न गुणः, "विजादि—" इत्यादौ व्यामिति विषये सप्तमी, तेन यङ्लुकि परस्मैपदविषये कृञः उभयपदित्वात् अत्रात्मनेपद-वदनुप्रयोगः। खे गच्छतीति "हनजनात्—" इति डः ॥ १०५ ॥

भ० म०

हन्तुमिति।—तौ पक्षि-रावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योऽन्यं हन्तुमीहाञ्चक्राते चेष्टां कृतवन्तौ, "इजादेः—" इत्यादिना आम, विः पक्षी, 'जनिघसिभ्याम्' इति अधिकृत्य 'वेञो डिच्च' इत्यौणादिक इक्; न वा नैव,वाशब्द एवार्थे, पलाया-ञ्चक्रे पलायितः, "उपसर्गस्यायतौ" इति लत्वम् ; राक्षसश्च न दयाञ्चक्रे न दयते स्म, पक्षिणं खल्वहं कथं व्यापादयामीति, उभयत्रापि "दयायासश्च" इत्याम् ॥१०६॥ ज० म०

हन्तुमिति।—तौ पक्षि-रावणौ क्रोधवशात् क्रोधाधीन-तया परस्परमन्योऽन्यं हन्तुमीहाञ्चक्राते, 'ईहङ् चेष्टे' "परस्परं व्यतिलुनन्ति" इत्युदाहरता व्यतीहारे परस्परशब्दो मनीषादि-त्वात् निपातित इति सूचितम्। विः पक्षी न पलायते स्म, राक्ष-सोऽपि हन्तुं न दयां कृतवान्, सर्वत्र "विजादि—" इत्याम्,

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्वकिन्नराः।
छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥१०७॥
प्रलुठितमवनौ विलोक्य कृत्तं
दशवदनः खचरोत्तमं प्रहृष्यन्।

पलायाञ्चक्रे इति परापूर्वस्यायधातोः रूपं, रेफस्य लत्वं मनीषादित्वात। मा,माङ्, नञ्, नहि, नो,नवा इत्येते प्रतिषेधार्थाः, एवार्थे अत्र वाशब्द इत्यन्ये॥१०६॥ भ० म०

उपासेति।—देवगन्धर्वकिन्नराः द्रष्टुं युद्धं द्रक्ष्यामः इति उपासाञ्चक्रिरे उपगताः, पूर्ववत् आम्; क्रव्यात् रावणः, क्रव्यं मांसमत्तीति क्रव्यात् "अदोऽनन्ने" इति विट्; पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान्,यङ्प्रत्ययान्तत्वादाम्; छलेन मायया, प्रसह्य जेतुं न शक्यते इति। "भञ्जन"इति पाठान्तरम् ॥१०७॥ ज० म०

उपासेति।—देवाः गन्धर्वाः किन्नराश्च द्रष्टुम् अर्थात् युद्धम् उपासाञ्चक्रिरे उपगताः, 'आसङ् उपवेशे'"विजादि—"इत्याम्; दीव्यतीति देवः पचादित्वात् अन्; गानं धर्मोऽस्येति गन्धर्वो मनीषादिः, नराकृतित्वात् कुत्सितो नरः किन्नरः, ईषदर्थे किंशब्दः इत्यन्ये; क्रव्याद्रावणः छलेन कपटेन पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद, त्यान्तत्वादाम्। क्रव्यं मांसमत्तीति क्विप्॥१०७॥ भ० म०

प्रलुठितमिति।—खचराः पक्षिणः, खे चरन्तीति अधिकरणे "चरेष्टः", तेषामुत्तमं जटायुं कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निहन्तो द्विप-

रथवरमधिरुह्य भीमधुर्य्यं
स्वपुरमगात् परिगृह्य रामकान्ताम् ॥१०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः ॥५॥

आरोति दशाननो रथवरं आरथात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥१०८॥ ज० म०

इति जयमङ्गलव्याख्यायां पञ्चमः सर्गः ॥५॥

प्रलुठितमिति ।—कृत्तं छिन्नं लूनपक्षत्वात् अवनौ भूमौ प्रलुठितं पतितं, खगवरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टो भवन् रावणो रथवरम् अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्काम् अगात् गतः। रथानां वरः श्रेष्ठः पुष्पकाख्यः आरथादुपागतः। तं कीदृशम् ? भीमाः धुर्य्याः अश्वाः यत्र, धुरं वहतीति "ढचि वात्—" इति यः ॥१०८॥ भ० म०

इति गौराङ्गमाल्लकात्मजश्रीभरतमल्लिकविरचितायां
मुग्धबोधिन्यां भट्टिटीकायां सीताहरणो नाम
मिश्रकः पञ्चमः सर्गः ॥ ५ ॥

---

## भ्रमनिरसनम् ।

| पृष्ठायां | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३७ | २१ | "समार्थेन—" | "समार्थैन—" |
| १८० | २४ | ज्योतिषिके | ज्यौतिषिके |